SARASVATĪ BHAVANA GRANTHAMĀLĀ
*Vol. 31*

**General Editor**
Dr. Bhāgirathaprasadatripāṭhī 'Vāgīśa śāstrī'
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya
Varanasi.



# TANTRARATNAM
**( Part Fourth )**

by
**Parthasarathimishra**

Edited by
**Sri T. V. Ramacandradiksita**

Ex Research Asistant
Varanaseya Sanskrit Vishvavidyalaya

VARANASI
**1972**

सरस्वतीभवन-ग्रन्थमाला
( ३१ )

प्रधानसम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थानसञ्चालकः
वाराणसेय-संस्कृत-विश्वविद्यालये

पार्थसारथिमिश्रविरचितम्

# तन्त्ररत्नम्

( चतुर्थो भागः )

सम्पादकः
श्री टि० वि० रामचन्द्रदीक्षितः
अनुसन्धानसहायकचरः
वाराणसेय-संस्कृत-विश्वविद्यालये

वाराणस्याम्
२०२९ तमे वैक्रमाब्दे १८९४ तमे शकाब्दे १९७२ तमे ख्रिस्ताब्दे

# प्रास्ताविकम्

'तन्त्ररत्नस्य' चतुर्थ-भागं मीमांसामर्मजिज्ञासाजुषां विदुषां चाक्षुषविषयतामुपनयतो विश्वविद्यालयस्य पारिवारिका वयं महान्तमानन्दमनुविन्दामः। ग्रन्थरत्नमिदं सुगृहीताह्वयस्य मीमांसकमूर्धन्यस्य तत्रभवतः श्रीपार्थसारथिमिश्रस्य प्रज्ञाखनेः प्रकटीभूय स्वप्रभया महर्षिजैमिनेर्मीमांसासूत्रेषु श्रीशबरस्वामिप्रणीते भाष्ये श्रीकुमारिलभट्टात् समुद्भूतायाष्टुप्टीकायाः सुगूढान्यर्थतत्त्वान्यवद्योतयदवदातमतीनां विद्वत्ततीनां मनोमोदाय सम्यगवकल्पत इति निर्विप्रतिपत्तिः सर्वसुधीजनसम्मतिः। अत एवात्मनः पूर्वरूपेण काशिकराजकीयसंस्कृतमहाविद्यालयेन सरस्वतीभवन-ग्रन्थमालाप्रसूनतया विकासयितुमुपक्रान्तस्यास्यावशिष्टविकासपूरणमात्मनोऽनिवार्यकर्तव्यं मन्यमानेन विश्वविद्यालयेन तन्निर्वर्तनभारोऽनुसन्धानसंस्थानद्वारा पण्डितवर्यस्य साम्प्रतं सुरपुरं प्रसाधयतः श्रीटी०वी०रामचन्द्रदीक्षितमहाभागस्य बौद्धस्कन्धमारोपितः। इदं नो नूनं महद् दुःखं यद् दीक्षितमहाभाग आत्मनः परिश्रमस्य परिणामोदयसमये न प्रत्यासीदति।

श्रीदीक्षितमहाभागेन कृतसुसम्पादनस्य तन्त्ररत्नस्य चतुर्थो भाग इदानीं प्रकाशमान आस्ते; किन्तु पञ्चमो भागो यावत्सम्पाद्य प्रकाशितो न भवति, तावत्समग्रायाष्टुप्टीकाया अखिलं मर्म नोद्घाटितं जायते, जिज्ञासुलोकश्चातृप्त एव चेखिद्यते। अतोऽस्माभिर्मीमांसामनीषिमणयः काव्यसाहित्यानुशीलनरतयः पण्डितवर्याः श्रीपट्टाभिरामशास्त्रिमहोदयाश्चतुर्थभागस्य भूमिकादेः प्रणयनाय तन्त्ररत्नपञ्चमभागस्य सम्पादनाय च समभ्यर्थिताः। तैश्च कृपयाऽस्मदनुरोधं पुरस्कृत्य कार्यमिदं स्वहस्ते गृहीतम्। मन्ये, तेषां पाण्डित्यपूर्णसम्पादननिकषनिघर्षणेन द्युतिविशेषमासाद्य सोऽपि भागः सत्वरमेव प्रकाशमुपगतो विद्वज्जनानां दृग्गोचरतामवाप्नुयादिति।

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी
श्रावणी पूर्णिमा
सं० २०२६
दि० २७-८-६९

बदरीनाथशुक्लः
अनुसन्धानसंस्थानसञ्चालकः

# किञ्चिन्निवेदनम्

अथेदानीं श्रीपार्थसारथिमिश्रविरचितस्य भट्टकुमारिलविरचित-टुप्टीकाव्याख्यानरूपस्य तन्त्ररत्नस्य चतुर्थो भागः प्रकाशमानीयते। अयं सप्तमाध्यायान्नवमाध्यायान्तो भागः। अस्य सम्पादनं जगति लब्धप्रतिष्ठैः पूर्वोत्तरमीमांसानिष्णातैः शास्त्ररत्नाकराद्यनेकोपाधिविभूषितै-र्भारतराष्ट्रपतिभिस्सबहुमानं सम्मानितैर्ब्रह्मश्रीरामचन्द्रदीक्षितैर्मद्गुरु-कल्पैरकारि। दौर्भाग्यवशेनाकस्माद् दीक्षितचरणाः पाञ्चभौतिकीं तनुं सन्त्यज्य दिवं याताः। एतादृशानां विद्वद्वरिष्ठानां वियोगेन नूनं भारतीय-संस्कृतसमाजो महतीं न्यूनतामनुभवतीति न मया वक्तव्यम्। शास्त्रेषु तलस्पर्शि पाण्डित्यम्, विषयविवेचनपाटवम्, अध्यापनकौशलम्, सत्कर्मा-चरणम्, अन्तेवासिजनेषु वात्सल्यम्, मधुरस्सरसश्च व्यवहारः, विद्वज्जने-ष्वादरभावः, कथाप्रसङ्गेषु कौतुकोत्पादकरससञ्चारणम्, शान्ति-र्दान्तिश्चेत्यादिकं सर्वमेतेष्वनन्यसाधारणमासीदित्येतान् परिचिन्वतां नाविदितम्।

पञ्चमं भागं दशमाध्यायाद् द्वादशाध्यायं यान्तं सम्पादयितुं चतुर्थभागस्य प्रस्तावनादि च लेखितुं संस्कृतविश्वविद्यालयोपकुलपतिभिर्विद्वद्वरेण्यैः श्रीगौरीनाथशास्त्रिभिर्विद्वत्कुलललामैः श्रीबदरीनाथशुक्लमहोदयैरनुसन्धान-विभागसञ्चालकैश्चादिष्टोऽहमस्मिन् कर्मणि प्रावर्तिषि। मीमांसासूत्राणां श्रीशबरस्वामिभिर्विरचितस्य प्रसन्नगभीरस्य वार्त्तिकरूपेण त्रयो ग्रन्थाः श्रीभट्टपादैर्व्यरचिषत। तत्र आ च चतुर्थाध्यायाद् आ च द्वादशा-ध्यायाद् भाष्यस्य व्याख्या 'टुप्टीके'त्यभिधीयते। संक्षिप्ता टीकेति तदर्थः। श्लोकवार्त्तिके तन्त्रवार्त्तिके च सुविशदं पदार्था भट्टपादै-र्विवेचिताः। टुप्टीकायान्तु सङ्ग्रहेण पदार्थविवेचनम्। अतोऽयं ग्रन्थो व्याख्यासापेक्ष इति पार्थसारथिमिश्रैस्तन्त्ररत्नं सन्दृब्धम्। तन्त्ररत्नमिदं पार्थसारथ्युत्तरकालोद्भवैस्सर्वैरेव मीमांसाग्रन्थकृद्भिः खण्डनाय मण्डनाय वा समुद्धृतम्। अतोऽयं ग्रन्थो मीमांसाशास्त्रे मुख्यं स्थानमनुभवति। अत्रत्यान् विषयान् पञ्चमभागस्य भूमिकायां विवेचयिष्ये। ख्रिस्तोरनन्तरं

दशमशताब्द्या अन्ते एकादशशताब्द्या आदौ वा विरचितस्यास्य ग्रन्थस्य प्रकाशनं सरस्वतीभवनग्रन्थमालातस्समारब्धं जगद्विश्रुतैर्दर्शनेषु विशेषतो योगे तन्त्रे च परमं वैदुष्यमावहद्भिर्महामहोपाध्यायैः श्रीगोपीनाथ-कविराजैः। तत्र प्रथमो भागः मीमांसाशास्त्रमर्मज्ञैर्विविधविद्यावदात-मानसैर्महामहोपाध्यायैः श्रीगङ्गानाथझामहाभागैः, द्वितीयो भागः पण्डितवरैः श्रीगोपालशास्त्रिभिः, तृतीयचतुर्थभागौ च वेदवेदाङ्गेषु निष्णातैः श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायैर्भूतपूर्वानुसन्धानविभागसञ्चालकैः सम्प्रार्थितैर्ब्रह्मश्रीयुतरामचन्द्रदीक्षितैश्च सम्पादिताः। पञ्चमोऽपि भाग-स्तैरेव सम्पादनीय आसीत्, किन्तु दुर्दैववशेन तन्न सम्पन्नम्। कथमपीदं तन्त्ररत्नं प्रकाशपथमानेयमिति मां नियुक्तवद्भ्य उपकुलपतिमहोदयेभ्यः सञ्चालकमहाभागेभ्यश्च धन्यवादान् समर्प्य शीघ्रमेव पञ्चमभागप्रकाशना-नुकूलसामग्रीसम्प्रदानेन भगवानाशुतोषः श्रीविश्वनाथो दिवङ्गतान् श्रीरामचन्द्रदीक्षितान् सन्तर्पयत्विति भगवन्तमुमारमणं सम्प्रार्थ्य विरमामि।

वाराणसेयसंस्कृतविश्वविद्यालयः वाराणसी

श्रावणी पूर्णिमा

सं० २०२६

पट्टाभिरामशास्त्री

साहित्यविभागाध्यक्षः

# सप्तमाष्टमनवमाध्यायानामधिकरणसूची

## सप्तमोऽध्यायः

विषयः पृष्ठम्

### प्रथमः पादः



### द्वितीयः पादः



### तृतीयः पादः

विषयः पृष्ठम्



## चतुर्थः पादः



# अष्टमोऽध्यायः

## प्रथमः पादः

विषयः पृष्ठम्

## द्वितीयः पादः



## तृतीयः पादः



## चतुर्थः पादः



# नवमोऽध्यायः

## प्रथमः पादः

## द्वितीयः पादः

विषयः पृष्ठम्



## तृतीयः पादः



## चतुर्थः पादः





# पार्थसारथिमिश्रविरचिते

# तन्त्ररत्ने

## सप्तमोऽध्यायः

[ १—प्रयाजादीनां प्रकृतापूर्वार्थतयोपदेशाधिकरणम् ]

**श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥१॥ सि०**

अत्र भाष्यकारेण षट्कद्वयसम्बन्धं हेतुहेतुमद्भावं दर्शयता वृत्तवर्त्तिष्यमाण-कथनं कृतम्। तदाक्षिपति—**प्रत्यक्षविहितधर्माणां दर्शपूर्णमासादीनामिति-कर्त्तव्यता**[1] **चिन्तितेति एतदयुक्तम्**। कथम्? **सर्वपृष्ठायाम्** अप्रत्यक्ष-धर्मिकायामपि **किं सकृदुत्तरार्द्धात् स्विष्टकृतेऽवदेयमुत**[१] **भेदेनेति**[२] तृतीये **चिन्तितं** "द्रव्यैकत्वे कर्मभेदात् प्रतिकर्म क्रियेरन्" इत्यत्र। **तथा 'दृतिनवनीत-माज्यं भवति' इत्येवमादिष्वप्रत्यक्षधर्मकेष्वपि चिन्ता वृत्ता** "सन्निधान-विशेषादसम्भवे तदङ्गानाम्" इत्येवमादिषु। तेन वृत्तकथनं तावदयुक्तम्। इदं चोपलक्षणार्थम्। वर्त्तिष्यमाणकथनमप्ययुक्तमेव। उपरितनेऽपि हि षट्के दर्श-पूर्णमासादिषु कथा वर्त्तिष्यन्त एव, किं तन्त्रमङ्गान्युत भेदेनेत्येवमादिविचारात्।

---

1. 'इतिकर्तव्यता' इति भाष्यानुसारी पूनामुद्रितो मूलपाठः।
   'इति' शब्दः क. ख. ग. कोशेषु न लक्ष्यते।

१. कर्मभेदात् प्रतिकर्म अधिकः पाठः—ख.।

२. नावदेयम्—ख.।

तस्मादयुक्तं भाष्यमिति। समाधत्ते—यस्मादेवं यथाश्रुते दोषः, अत **एवं वाच्यम्**। सर्वत्र **प्रकृतौ विकृतौ चोपदेशश्चिन्तितः** पूर्वस्मिन्नध्यायषट्के। तथा हि—**सप्तदश प्राजापत्यानित्येवमादिषु** तावत्प्रत्यक्ष **एव** सन्नुपदेश-श्चिन्तितः—किमेकं कर्म सप्तदशद्रव्यकं विधत्ते, उत सप्तदश कर्माणीति। **सर्व-पृष्ठादिष्वपि आनुमानिकेन वचनेनोपदिष्टानां** स्विष्टकृदादीनामुपदेश **एव चिन्तितः**। नहि तत्रातिदेशार्थविचारः, किन्तु "उत्तरार्द्धात् स्विष्टकृते सम-वद्यति" इत्यस्य वचनस्यार्थश्चिन्तितः — किं प्रधानावदानदेशस्योत्तरार्द्धादवदानं विधत्ते, किं वा कृतकरस्य द्रव्यस्योत्तरार्द्धादिति। स चायमुपदेशार्थविचारः प्रकृता-वपि सम्भवंस्तत्र न कृतः, सर्वथानुष्ठानसाम्यात्। तस्मात् सर्वपृष्ठायामनुमानेन प्राप्तस्यास्य वचनस्यार्थ औपदेशिक एव चिन्तितः। भाष्ये च प्रत्यक्षग्रहणमुपदेशोप-लक्षणार्थमुपदिष्टधर्मकाणामिति। भावप्रधानं चैतत्। उपदिष्टा धर्माश्चिन्तिता इत्यर्थः। [1]**उत्तरेणेदानीमविहितेतिकर्त्तव्यताकेष्वैन्द्राग्न्या[ग्ना]दिषु चिन्तयितुमिष्यत** इति। अतिदेशविचारार्थमुत्तरषट्कः प्रस्तोष्यत इत्यर्थः। उपदेशपूर्वकत्वाच्चातिदेशस्य हेतुहेतुमद्भावः स्पष्टः। इत्थं कुर्यादित्येतमर्थं [एकमर्थं] **विधाय** हि तद्वत् कुर्यादित्यर्थान्तरं विधातुं शक्यते नान्यथा। तत्र वक्ष्यमाणमर्थं सुखग्रहणार्थं कथयति भाष्यकारः—'**तत्र सप्तमेन तावत् सन्ति धर्माः**' इत्या-दिना। तस्यार्थमाह — **सप्तमेन विकृतीना**[१]**मतिदेशेन धर्मा भवन्तीति** [२]सामान्येनातिदेशः **प्रतिपाद्यते**। ततोऽ**ष्टमेन** यो[३] यस्य यतश्चेति **विशेषा-**तिदेशः। **इत्थं प्रयोक्तव्या इति नवमेनेति** भाष्यम्। तत्रेदमाशङ्क्यते—ननु दशम उपकारातिदेशसाधनात्तदधीनत्वाच्चोहस्य दशमानन्तरं नवमारम्भो युक्तः, कथं

---

1. उत्तरेणेत्यादि। इदं भाष्यवचनं टीकायां न विवृतम्। तथापि प्रमेय-पूरणार्थं व्याख्यात्रा स्वयं गृहीत्वा व्याख्यातमिति द्रष्टव्यम्।

१. देशधर्माः-क.।

२. एवम् अधिकः-ख.।

३. यो इति नास्ति क.।

प्रागारभ्यत इति। तत्राह—**नवमो**[1] **विशेषातिदेश**[2]**प्रसङ्गेनैवारभ्यते**। कथं प्रसङ्ग इत्याह—**किं मन्त्रोऽग्नये जुष्टमित्यग्निस्वरूपप्रकाशनार्थमुच्चार्यते,** ततश्च सौर्येऽपि न तस्योहेन प्रयोगः, **उताग्निस्वरूपमविवक्षितम्**, किन्त्वपूर्वीयदेवताविशेषप्रकाशनं विवक्षितम्। **तस्मात्** सौर्ये सूर्याय जुष्टमितीत्थं **प्रयोक्तव्यमित्येवमतिदेशप्रकार**विशेष[3] **एव चिन्त्यते** प्रसङ्गान्नवमे। **स** चानागतावेक्षणन्यायेन वक्ष्यमाणं **दशमव्यापार**मुपकारपृष्ठातिदेशसाधन**मनुमन्यमान एवात्मानं लभते**। तदेतन्नवमाद्ये विस्तरेण वक्ष्याम इति। प्रयोगपर्यन्तत्वाच्चातिदेशस्य प्रयोगप्रकारविचारोऽतिदेशप्रकारविचार एव भवतीति। एतदुक्तं भवति—अतिदेशेन प्राप्यमाणानां मन्त्राणां[4] प्राकृतस्थानापन्नसूर्यादौ प्राप्तिर्नवमे साध्यत इति प्राप्तिविशेषविचारात्मकत्वादष्टमानन्तरं प्रागेव बाधादूहारम्भ इति। ननु सर्वपृष्ठायामिव सकृदसकृत्प्रकारविचारो मन्त्रादीनामप्यानुमानिकवचनोपदिष्टानां प्रकारविशेषविचार उपदिष्ट[5] इति उपदेशविचार एव स्यात्। सत्यमेतत्। उपदेशविचारोऽप्यसौ विकृतिष्वेवानुष्ठानविशेषं[6] फलतीति विशेषातिदेशानन्तरमारभ्यते। नहि प्रकृतावियं जिज्ञासा जायते—किमग्निस्वरूपप्रयुक्तं मन्त्रोच्चारणम्, किं वापूर्वीयदेवताप्रयुक्तमिति, द्वेधाप्यनुष्ठानसाम्यात्। विकृतौ त्वतिदिष्टानां कथमनुष्ठानमिति तत्सिद्ध्यर्थं किंप्रयुक्ता [7]मन्त्रादयः प्रकृताविति जिज्ञासोपनिपाताद्विशेषातिदेशानन्तरं नवमारम्भः। सर्वपृष्ठादिष्वपि स्विष्टकृदादीनां सकृदसकृदवदानविचारो विशेषातिदेशाधीन एव। तथापि तु शेषकार्यप्रसङ्गाच्छेषशेषिविचारात्मकत्वाच्च तृतीये चिन्तितम्। उपदेशविचारात्मकत्वाच्च नासङ्गतिः पूर्वषट्क

१. नवमे—ख. ग.। 'नवमेन विशेषातिदेशः प्रसङ्गेनारभ्यते' मुद्रितः पाठः।

२. देशः—ख.।

३. विशेष नास्ति ख. मुद्रितपुस्तके च।

४. धर्माणां—क.।

५. उपदिष्ट इति नास्ति क.।

६. विशेषे—ख.।

७. मन्त्राः—ख.।

इति[1] । **दशमे बाधाभ्युच्चयानुनिष्पादिनी शेषेयत्ताचिन्ता** । विकृतिष्वातिदेशिकानां शेषाणामर्थलोपादिना बाधं तदभावाच्च वैकृतैरभ्युच्चयमुक्त्वा शेषेयत्ता चिन्तयितुमिष्यते । **इयत्ताप्रसङ्गेन चैकादशः प्रयोगेयत्ताविचारार्थमारभ्यते** । द्वादशस्यार्थमाह — **तन्त्रावापेनेदृश्यां** तन्त्रावापात्मिकायामेवेयत्तायां प्राप्तायां तदपवादत्वेन द्वादश आरभ्यते । **अन्यादृशीयत्ताप्रसङ्गेन भवतीति**[2] न तन्त्रावापात्मकमेव प्रयोगपरिमाणम् । अपि त्वन्यार्थमनुष्ठितमप्यङ्गमन्यस्योपकरोतीति न पुनस्तदर्थमप्यनुष्ठातव्यमिति, ईदृशमपि विद्यते प्रयोगपरिमाणमिति । ननु तन्त्रावापप्रसङ्गा उपदिष्टातिदिष्टपदार्थसाधारणाः । तथा हि— उपदिष्टानां प्रयाजादीनामाग्नेयादिषु तन्त्रत्वम् ; त्रिकद्वये चावृत्तिः । तथातिदिष्टानां वरुणप्रघासेषु विहारद्वयेऽपि प्रयाजादीनामावृत्तिः, ब्रह्मादीनां च तन्त्रत्वं वक्ष्यते । तथा प्रसङ्गेऽप्युपदिष्टानां वैकल्पिकानां मिथः प्रसङ्गः, विकृतौ चातिदिष्टानां प्रयाजादीनां पाशुकानां पशुपुरोडाशे प्रसङ्गः । तस्मात् कथमुत्तरषट्क एवारम्भः ? अत आह—**यद्यपि तन्त्रावापप्रसङ्गा उभयत्रो**पदेशे चातिदेशे **चातिदिष्टाः** [चाविशिष्टाः], **तथापि पूर्वषट्के नैषामवसरः** ।

एकदेशिनामपि चाविशेषोऽस्त्येव । कार्यप्रमेयस्यापि तन्त्रावापादेरौपदेशिकत्वमप्यस्तीति हि अधिकरणान्ते वक्ष्यामः । सत्यपि चाविशेषे न पूर्वत्रावसरः । कथम् ? प्रमाणलक्षणाधीनता तावत् सर्वेषामविशिष्टेति न ततः प्रागारम्भसम्भवः । न च तदनन्तरं तन्त्राद्यारम्भः, प्रयोगविधिव्यापारात्मकत्वात्तस्य । तस्य च विनियोगाधीनत्वात्, विनियोगस्य चोत्पत्तिपूर्वकत्वात् । तेन भेदलक्षणं तावदुत्पत्तिविधिव्यापारनिरूपणार्थं प्रथममारब्धव्यम् । तदाह—**यावद्भेदो नावधृतस्तावत् शेषशेषिता नास्ति** । तथा **प्रयोजकाप्रयोजकत्वं** च[3] यच्चतुर्थे चिन्तितं तत् तृतीयगोचराच्छेषशेषित्वादृते **नास्ति** । तेन भेदलक्षणा-

---

१. दर्शितमिति अधिकः ख. ग. ।

२. इति नास्ति ख. ग. ।

३. च नास्ति क, ।

नन्तरं शेषलक्षण[1]मारम्भणीयम्। **तथा क्रमोऽपि** [2]**प्रयोजकाप्रयोजकत्वादृते** नास्ति। तेन विनियोगलक्षणानन्तरं प्रयोजकाप्रयोजकत्वलक्षणमेवारम्भणीयम्, प्रयोज्यावधारणाधीन[3]त्वात् प्रयोगविशेषनिरूपणात्मकस्य क्रमविचारस्य। एवं तन्त्रादीनामपि प्रयोगविशेषविचारात्मकत्वान्न तावत् प्राक् ([4]चतुर्थादारम्भः। तदनन्तरं च क्रम आपतति प्रयोगविशेषनिरूपणात्मकः। तत **ईदृशैर्भेदाभेदशेष**-शेषिप्रयोजका)प्रयोजकैरेवं[5]क्रमयुक्तैः कर्मभिः **कोऽधिक्रियत इत्येवमधिकारलक्षणमापतति**। ननु प्रयोगविशेषविचारात्मकं तन्त्रादि चतुर्थानन्तरं पञ्चमानन्तरं वा किमिति नारभ्यते? तत्रोत्तरमनन्तरमेव वक्ष्यति। **न च षष्ठसप्तमयोर्मध्ये तन्त्रावापप्रसङ्गानामवसरः। कथम्?** **अधिकारानन्तरमेवेदं विपरिवर्त्तते किं** प्रयाजादिभि**र्धर्मैर्यागोऽधिक्रियते, उत न** यागोऽधिक्रियते, **किन्त्वपूर्वमित्यनेना**धिकार**प्रसङ्गेन सप्तमाद्यमारभ्यते**।

अथवा **सौर्यादयः** किं **प्राकृतैर्द्धर्मैरधिक्रियन्तेऽतिदेशेन** प्रमाणेन, **किं वा नेत्यनेन प्रसङ्गेन सप्तमोऽध्याय आरभ्यते। तद्बलेन** च **विशेषातिदेशोहबाधानामारम्भः**। परिहारान्तरमाह—**पर्यनुयोगाविशेषाच्च दशमानन्तरं तन्त्रावापप्रसङ्गाः प्रस्तूयन्ते**। तन्त्रादयो ह्युपदिष्टातिदिष्टपदार्थसाधारणाः। ते [6]चांशेन पूर्वषट्केऽप्यारब्धुं शक्यन्ते, अंशेन चोत्तरषट्केऽपि। तद्यदि पूर्वषट्के किमिति नारभ्यन्त इति पर्यनुयुज्यते, ततो विपरीतमपि शक्यं पर्यनुयोक्तुम्—उत्तरषट्के किमिति नारभ्यन्त इति। एतेन

---

१. मेवा—ख. ग.।

२. प्रयोजका नास्ति ख. ग.।

३. करण अधिकः क.।

४. कोष्ठान्तर्गतं नास्ति ख.।

५. कैवं—ख. ग.।

६. च नास्ति ख.ग.।

यदुक्तं चतुर्थपञ्चमसमीपे किमिति नारभ्यन्त इति, तदपि परिहृतं पर्यनुयोगाविशेषादेव। यथैव हि प्रयोगविचारात्मकत्वाच्चतुर्थपञ्चमसमीपे सम्भवत्यारम्भः, तथैवेयत्ताविचारात्मकत्वाद्दशमानन्तरमपि सम्भवतीति यत्र क्वचिदारब्धव्ये सति विशेषाभावादुत्तरषट्के समारम्भ इत्यनवद्यम्। यत्तु कैश्चिदुपदेशकार्यप्रमेयविषयं षट्कद्वयमिति वर्णितम्, तदस्माभिः न्यायरत्नमालायामेव[1] निरस्तमिति नेह प्रतन्यते। किञ्चैवंवादिनामपि यद्यपि[2] तन्त्रादिविचारस्योत्तरषट्कान्तर्भावः स्यात्तथाप्यतिदेशानपेक्षत्वात् प्रागेव सप्तमादारम्भः किं न स्यादिति चोद्यमस्त्येव। तत्र पर्यनुयोगाविशेष एवोत्तरमुपदिष्टातिदिष्टपदार्थसाधारण्याद् वाच्यम्। तदस्माकमपि तुल्यम्। तेषां तु पूर्वषट्केऽपि सम्भवत्येवारम्भः, उपदेशा[3]त्मकत्वादित्युक्तम्। अपि चैषां सप्तमाष्टमयोरुपादानरूपोपदेशप्रमेयकार्यविचारार्थयोश्चतुर्थे साक्षात् सङ्गतिसम्भवान्नोपोद्घाततया तत्र[4] चिन्ता युक्तेत्यास्तां तावत्।

नन्वेवमुत्तरषट्कस्यानेकरूपोऽर्थः स्यात्। सत्यम्, नैष[5] दोषः। पूर्वषट्कस्यापि हि नैकरूपोऽर्थः, प्रमाणलक्षणस्य सर्वशास्त्रसाधारणस्योपदेशं प्रत्यसाधारण्याभावात्। अत एवं द्रष्टव्यम्—प्रायेणोपदेशातिदेशात्मकप्रमाणद्वयव्यापारनिरूपणपरं[6] षट्कद्वयम्।

तत्र प्रथमं तावदतिदेशविचारोपोद्घातत्वेनेदं चिन्त्यते — किं यजिप्रयुक्ता धर्माः, उतापूर्वप्रयुक्ता इति। ननु कर्त्तव्यस्य प्रकार इतिकर्त्तव्यता। कर्त्तव्यं भाव्य-

---

१. एव नास्ति क.।

२. यद्यपि नास्ति क.।

३. तिदेशा अधिकः क.।

४. अत्र ख. ग.।

५. एष नास्ति ख. ग.।

६. निरूपणं—ग.

मिति च पर्यायशब्दौ। भाव्यं चापूर्वमिति तत्प्रयुक्तैवेतिकर्त्तव्यता। तत्कथं यजिप्रयुक्तिराशङ्क्यते। उच्यते—यागोऽपि कर्तव्य एव फलार्थतया अपूर्ववत्। अपूर्वस्यापि हि न स्वातन्त्र्येण कर्त्तव्यता, किन्तु फलसिद्ध्यर्थतया, तद्वद्यागस्याप्यस्त्येव कर्त्तव्यतेति न प्रयोजकत्वं नोपपद्यते। तेन पूर्वपक्षे साधनत्वेनोपदिष्टस्य यागस्य यार्थात् कर्त्तव्यता, तामुद्दिश्य धर्मा विधीयन्ते—इत्थं यागः कर्त्तव्य इति। तदा च यागसम्बन्धद्वारेणापूर्वसम्बन्धो धर्माणाम्। यथा यागस्य सिद्धान्तेऽपूर्वद्वारेण फलार्थता। सेयं यजिप्रयुक्तिः। तदा चोपदेशेनैव धर्मा विहिताः सर्वयागेष्विति नातिदेशविचार आरब्धव्यः। सिद्धान्ते तु यागेनेत्थमपूर्वं कर्त्तव्यमिति द्वयोरपि करणेतिकर्त्तव्यतयोरपूर्वभावनयैव सम्बद्धयोः पश्चादरुणैकहायनीन्यायेन परस्परनियम इति करणं फलस्य[1] साधनं तदङ्गं भवति, इतिकर्त्तव्यता तु करणानुग्राहिणी तदङ्गमिति नापूर्वान्तरभावनायां धर्मसम्बन्धः सिध्यतीत्यतिदेशविचार आरब्धव्यो भवति। तेनैतदुक्तं भवति—किं करणसम्बन्धपूर्वकोऽपूर्वभावनासम्बन्धः, उत तत्पूर्वकः करणसम्बन्ध इति। (तत्र[2] सिद्धान्तेनैव तावदुपक्रमते—**श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यादिति**। तस्यार्थमाह) **करणेतिकर्त्तव्यतानामपदैर्विशिष्टा भावना विधीयते**, दर्शपूर्णमासाख्येन यागेनेत्थं फलापूर्वं भावयेदिति। **तत्र यदस्यां** भावनायां **करणमितिकर्त्तव्यता वा तदन्यत्र** भावनान्तरे **न भवति**। कुतः **कर्मान्तरत्वात्**, भावनान्तरत्वात्। कथमित्याह। **शब्दान्तरे कर्मभेद** इत्यादिना हि भावनानां तदनुनिष्पादित्वेन चापूर्वाणां भिन्नत्वमुक्तम्। तत्रैकस्य विहिता धर्माः कुतोऽन्यत्र भवेयुः? कथं पुनरितिकर्त्तव्यताया भावनयैव सम्बन्धो यावता करणानुग्राहिणी सा करणेनैव सम्बन्धमर्हति। अथवाऽपूर्वार्था धर्मा भाष्यकारेण दर्शिताः, कथं भवता भावनासम्बन्धिन इत्युच्यन्ते। अथवा सर्वस्य फलार्थत्वात् फलेनैव सम्बन्धो धर्माणां न भावनयेत्येतदाशङ्कात्रयमपनुदन्नाह—**इतिकर्त्तव्यता च भावना-**

---

१. फलापूर्वस्य—ख. ग.

२. कोष्ठान्तर्गतं नास्ति ख.।

**काङ्क्षिता । किं केन कथमिति** हि सैवांशत्रयमपेक्षते । कथमिति हि [1]प्रकाराकाङ्क्षेयम् । सामान्यस्य च भेदको विशेषः प्रकार इति तद्विदः । न चात्र फलगतो विशेषोऽपेक्षितः कीदृशं फलमिति । नाप्यपूर्वं कीदृशमिति । नापि कीदृशेन यागेनेति । किं तर्हि यागानुरक्तफलानुकूलव्यापारविशेषोऽपेक्षितः । कीदृशे व्यापारे यागगतेऽनुष्ठिते यागेनापूर्वं कृतं भवतीति । व्यापारः क्रिया भावनेति च पर्यायाः । तेन[2] भाव्यांशवत्करणांशवच्चेतिकर्त्तव्यतांशेऽपि भावनाया एवाङ्काक्षा । **न तु यागापूर्वफलानां स्वयं** भावनामनपेक्ष्येत्थ[3]**मित्याकाङ्क्षास्ति । तस्माद् भावनया सम्बन्धः** । भाव्यनिष्ठत्वात्तु भावनायास्तत्संबद्धं धर्मजातं भाव्यप्रयुक्तं भवति । भाव्यं चापूर्वमित्यपूर्वप्रयुक्तत्वाभिधानम् । नहि स्वरूपेणापूर्वस्येत्थंभावसम्बन्धोऽस्ति । नहीत्थमपूर्वमिति संभवति सम्बन्धः, किन्त्वित्थं कर्त्तव्यमिति कृतिद्वारेणैवापूर्वसम्बन्धः । एवं यागफलयोरपि न स्वयमित्थंभावान्वयः सम्भवति । व्यापारविशेषत्वादितिकर्त्तव्यताया व्यापारेणैव सम्बन्धः । द्रव्यदेवतादिषु तु व्यापारसम्पादकत्वात्तद्द्वारेणेतिकर्त्तव्यताव्यवहारो न स्वरूपेण । अपूर्ववदिति चेत् ।[1] स्यादेतत्, यथा खल्वपूर्वस्य कृतिद्वारेणेत्थंभावसम्बन्धस्तथा यागस्यापि भविष्यतीति । नाभाव्यत्वात् । नैवं युक्तम् । यागस्य करणत्वेन भाव्यत्वाभावाद्भाव्यप्रयुक्ताया इतिकर्त्तव्यताया न यागप्रयुक्तत्वसम्भवः । फलं स्यादिति चेत् । अथापि स्याद् यदि

---

1. **अपूर्ववदिति चेत् । इदं शङ्कायाः संग्रहवाक्यम् । अस्य विवरणम्—स्यादेतदित्यादि भविष्यतीत्यन्तम् । ततः 'नाभाव्यत्वात्' इति परिहारस्य संग्रहवाक्यम् । तस्य विवरणम्—नैवं युक्तमित्यादि । एवं समनन्तरग्रन्थेऽपि योज्यम् ।**

**अत्र सन्दर्भे ग्रन्थकारः "सूत्रपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इति लक्षणयुक्तां भाष्यशैलीमादृतवानिति ध्येयम् ।**

१. प्रकारापेक्षेयं–ख. ग. ।

२. तेनेहापि–क. ।

३. इत्थमन्याकाङ्क्षा–ख. ग. ।

भाव्यप्रयुक्तेतिकर्त्तव्यता। तथा सति फलमेव प्रयोजकं स्यात्। फलं हि भावनाया भाव्यांशे समुपनिपतति, श्रुतत्वात् पुरुषार्थत्वाच्च। न त्वपूर्वम्, अश्रुतत्वापुरुषार्थत्वाभ्याम्। तथा चोक्तम्—"य आहुः किमपि भावयेदिति ते स्वर्गकामपदसम्बन्धात् स्वर्गं भावयेदिति ब्रूयुः" इति। तस्मात् फलमेव प्रयोजकमिति। न, कालान्तरभावित्वात्। नैतदेवम्, फलस्य कालान्तरभावित्वेन प्रयोगासमवाये सति तत्सिध्यर्थापूर्वस्यैव कर्त्तव्यत्वावधारणात्। उक्तं हि तत्रैव—यस्य च शब्दस्यार्थेन फलं साध्यते[1] तेनापूर्वं कृत्वा नान्यथेति। तेन यद्यपि विधेयभावनाभाव्यत्वेन फलमेव प्रथमं सम्बध्यते, तथापि फलभावनाऽपूर्वे संक्रान्ता सतीतिकर्त्तव्यतामपेक्षते। यदा हि यागेनापूर्वं कृत्वा फलं भावयेदिति श्रुतानुमितैकदेशनिष्पन्नस्य वाक्यस्यार्थः प्रतिपन्नः, तदाऽपूर्वे कृते तत एव कालान्तरे फलं भविष्यतीति निश्चित्य तत्पर्यन्तं व्याप्रियते। कथं च तन्निर्वर्त्तयामीति तदर्थमितिकर्त्तव्यतामाकाङ्क्षति। ततश्च तस्यामाकाङ्क्षायामुपदिश्यमानं धर्मजातमपूर्वप्रयुक्तं भवति। तेनायमत्र क्रमः—यागेन फलं भावयेत्। कथम्? अपूर्वं कृत्वा। कथमपूर्वं कर्त्तव्यम्? अनया अग्न्यन्वाधानादिकयेतिकर्त्तव्यतयेति। तदिदं चोद्यपूर्वकं भाष्यकारेणाऽपि वक्ष्यते। ननु फलमत्र श्रूयते "स्वर्गकामो यजेत" इति। तत्कर्त्तव्यं स्यात्। सत्यं श्रूयते, न तु तद्यजिना साक्षात् क्रियते। विनष्टे हि यजौ तद्भवति, अपूर्वं तु तेनेदानीं क्रियते। तेनार्थादश्रुतस्याप्यपूर्वस्य श्रुतफलयागसम्बन्धोपपत्तये कर्त्तव्यतेदानीमुच्यते। यस्य चेदानीं कर्त्तव्यतोच्यते, तदेव प्रयोगसमवेतमितिकर्त्तव्यतया सम्बद्ध्यते। तस्मादपूर्वार्था धर्मा इति।

नन्वेवं श्रुतफलकर्त्तव्यतापरित्यागेनाश्रुतापूर्वकर्त्तव्यताभ्युपगमात् श्रुतहान्यश्रुतकल्पने स्याताम्। परिहृतमेतदपूर्वाधिकरणे—यागफलसम्बन्धमेवोपपादयितुमवान्तरव्यापारतया शक्तिस्थानीयमपूर्वं कल्प्यते, न तु स्वातन्त्र्येण भाव्यमिति। इहापि च "अविभागात्तु नैवं स्यात्", "उत्पत्तौ विध्यभावाद्वा" इति सूत्रद्वयं व्याचक्षाणेन भाष्यकारेण चोद्यपूर्वकं प्रकटी-

१. संबध्यते–क.।

करिष्यते । फले यजेः प्रत्यक्षश्रुतो गुणभावः, "स्वर्गकामो यजेत" इति फलस्य श्रुतत्वात् । आनुमानिकस्त्वपूर्वेण[1] सम्बन्धः, काल्पनिकत्वादपूर्वस्य । अनुमानाच्च[2] प्रत्यक्षं बलीयः । तैलपानवच्च कालान्तरभाव्यपि फलं याग[3] एव साधयितुं समर्थः किन्नोऽदृष्टेनाश्रुतेनापूर्वेण कल्पितेनेत्यपूर्वाधिकरणस्थितन्यायाक्षेपेण चोद्यं कृत्वा परिहृतम्—सत्यं यजेः प्रत्यक्षः फले गुणभावः, प्रत्यक्षोऽपि सन्नाऽनाहत्याऽपूर्वं सम्भवतीति प्राणाडिको विज्ञायते । न चैवं प्रत्यक्षश्रुतयागकरणत्वहानिः, यतः प्रणाड्यापि येन [4]यत्क्रियते, तत्तत्करणं भवत्येव; यथा गोमयैः पचति, तुषपक्का भवन्तीति गोमयादिजन्याग्निसाध्येऽपि पाके गोमयादीनां करणत्वं भवति, तद्वदिहापि यागस्यापूर्वद्वारं फलसाधनत्वं नानुपपन्नमिति । अनेन च भाष्येण यागस्य फलसाधनत्वमुपपादयता ये यागस्य फलसाधनत्वानुपपत्तेस्तत्साध्यमपूर्वमेव यजेतेत्यनेन शब्देनोच्यत इति भ्राम्यन्ति, ते निरस्ताः । किञ्चैवंवादिनां तुषपक्का भवन्तीत्यत्रापि तुषजन्योऽग्निस्तुषशब्देनाभिधीयत इत्यभ्युपेयम् । तथा सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावित्यत्र लिङभावाद्दर्शपूर्णमासपदाभिधेयस्यार्थस्य चतुर्थ्या फलार्थत्वावगमाद् यागस्य च तदनुपपत्तेरपूर्वाभिधायित्वं दर्शपूर्णमासपदस्यापद्येत । अथ तत्र विज्ञातार्थस्य शब्दस्यार्थान्तरसञ्चाराभावादपूर्वाध्याहारेण वाक्यार्थः पूर्यते, तथा सति यजेत स्वर्गकाम इत्यत्रापि लिङो लोके क्रियाकार्याभिधायित्वेनावगतस्यार्थान्तरवाचित्वकल्पनानुपपत्तेरध्याहारेणैवापूर्वस्य वाक्यार्थान्तर्भावो युक्तः । न चाश्रुतस्यापूर्वस्य धर्मप्रयोजकत्वमनुपपन्नम्, अश्रुतविधिप्रत्ययेषु वाक्येषु "सर्वेभ्यो दर्शपूर्णमासौ", "प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति" इत्यादिष्वश्रुतस्याप्यध्याहारलब्धस्यापूर्वस्य प्रयोजकत्वाभ्युपगमात् । नन्वस्माभिरध्याह्रियमाणमप्यपूर्वं कर्त्तव्यतयैवाध्याह्रियते । ततश्च तस्य प्राधान्याद्युक्तं प्रयोजकत्वम् । भवन्मते तु फलस्यैव प्राधान्यात् प्रयोजकत्वं स्यात्; नापूर्वस्यावान्तरव्यापारमात्रतयाऽवस्थानात् । अहो

१. पूर्वस्य–क. ।

२. आनुमानिकाच्च–क. ।

३. पादानुग एव–ग. ।

४. यत् नास्ति ख. ग. ।

बतायं [1]साधुः, अवान्तरव्यापारापूर्वप्रयुक्तिं नावमिकीमनालोच्य यत्किञ्चन प्रलपति। वाङ्नियमस्य ह्यवान्तरव्यापारमात्ररूपमपि दीक्षणीयापूर्वमेवाव्यवहितं[2] प्रयोजकम्, न तु प्रधानभूतमपि परमापूर्वं व्यवधानादिति नवमे वक्ष्यते। तथेहाप्यपूर्वमेव प्रयोजकं न फलमित्यनवद्यम्। किञ्च, यद्यपूर्वं कार्यरूपं लिङाद्यभिधेयं प्रधानभूतं फलानपेक्षं वाक्यार्थः, ततः प्रयाजादीनां श्रुत्यैव स्वपदावगतकार्यगृहीतानामाकाङ्क्षाभावात् क्रत्वङ्गत्वं न स्यात्। ततश्च पारिप्लवत्वेन पूर्वपक्षकरणं व्यवस्थया च सिद्धान्तकरणमुभयमप्यनुपपन्नम्। तथा हि—एवं तावत् पूर्वपक्षो वर्णितः। समिदादिषु विषयत्वयोग्यभावार्थश्रवणाद्विध्यभिधायिलिङ्प्रत्ययश्रवणाच्च विधयस्तावत् प्रतीयन्ते। न च तेष्वधिकारः श्रूयते, नापि कल्पयितुं शक्यते, अन्तरेणापि तत्कल्पनमनुष्ठानोपपत्तेः। तत्सन्निधौ हि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति श्रुतम्। तेन दूरस्थं सर्वं साधिकारयजिमुद्दिश्य समिदादिषु तदङ्गतया विहितेषु तेनैव लब्धस्वविषयानुष्ठानाः समिदादिविधयो न स्वसिद्ध्यर्थमधिकारं कल्पयन्ति। तस्मात् सर्वार्थाः समिदादयः पारिप्लवा इति। सोऽयमतिमन्दः पूर्वः पक्ष इति[3]। यदा हि विध्यन्तरं स्वपदे श्रुतं तदा तेनैव विध्यन्तरेण[4] श्रुत्या तादर्थ्येनान्वितस्य यागस्य कथं वाक्यान्तरवशेनापि साधिकारयज्यङ्गत्वमाशङ्कितुं शक्यम्। श्रुतिर्हि प्रकरणात्सन्निधानाच्च बलीयसी स्थापिता। तस्माच्छ्रुतिसिद्ध्यर्थं नियोज्यपरिकल्पनमेव युक्तम्, न श्रुतिविपरीताङ्गत्वकल्पनम्। यदपि चात्र सिद्धान्तितं न प्रथमं समिदादिष्वपूर्वान्तरमवगम्यते। साधिकारविधिसन्निधौ समाम्नातं समिदादिवाक्यं न स्वनिष्ठं कार्यान्तरमवगमयितुं क्षमम्, अवघातादिवदनुवादकतयापि लिङादेः सम्भवात्। तदेवं सांशयिके प्रत्ययार्थे प्रकृत्यर्थमधिकारविधिरात्मार्थत्वेन स्वीकरोति। स्वीकृते च तस्मिन् पश्चात् क्षणिकस्यापूर्वमन्तरेण तादर्थ्यानुपपत्तेरवान्तरापूर्वं

---

१. साधुरेव वादः किन्तु अधिकः क.।

२. अव्यवहितं नास्ति क.।

३. इति नास्ति ख. ग.।

४. विध्यन्तरेण नास्ति ग.।

कल्पितं लिङाद्यभिधेयमपि न स्वतन्त्रीभवितुमर्हति, विनियुक्तविषयत्वात्। तेन सन्निधिसमाम्नातसाधिकारविधिग्रस्तत्वाद्धर्मजातस्य न पारिप्लवत्वमिति। तदपि न युक्तं श्रुतिविरोधादेव। अधिकारवाक्येषु हि प्रधानभूतकार्याभिधायित्वेन प्रज्ञाता लिङादयः समिदादिवाक्येष्वपि श्रूयमाणाः स्वार्थं प्रधानभूतं कार्यं श्रुत्यैव प्रकृत्यर्थविशिष्टमभिदधाना यागस्य ग्राहकग्रहणं प्रकरणस्थानीयं निरुन्धन्ति। यत्तु सन्दिग्धः प्रत्ययार्थ इति। भवतु सन्दिग्धः, तथापि [1]सन्दिह्यमानयोः पक्षयोरेकस्मिन् यत्र नियोगान्तरं तस्मिन् पक्षे श्रुतिविरोधो न विद्यते। न च शङ्क्यमाने श्रुतिविरोधे ग्राहकग्रहणं सम्भवति। साधिकारज्योतिष्टोमग्राहकसन्निधिसमाम्नातानां "युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्" "दीर्घसोमे सन्तृद्ये धृत्यै" इत्येवमादीनां पूर्वपक्षसिद्धान्तसन्देहवेलायां मा भूद् ग्राहकग्रहणम्। न चात्र संशयो[2] विद्यते, द्वितीयेऽध्यायेऽनुबन्धभेदेन समिदादिष्वपूर्वभेदस्य स्थितत्वात्। न च सन्निपातित्वसम्भावनयाऽनुबन्धत्वमेव सन्दिग्धं समिदादीनामिति वाच्यम्, प्रधानान्वयिद्रव्यदेवतासंस्पर्शाभावेन सन्निपातित्वशङ्काभावात्, समिदादिशब्दानां च देवताविधित्वस्य नवमे निराकरणात्। तस्मान्न तावत् प्रकृत्यर्थस्य ग्राहकग्रहणम्, नापि प्रत्ययार्थस्यापूर्वस्य, द्वयोः कार्ययोः प्रधानभूतयोः समत्वादनाकाङ्क्षत्वाद् मिथोऽङ्गाङ्गिभावानुपपत्तेः। तस्मात् श्रुतप्रधानभूतापूर्वापेक्षितनियोज्यकल्पनमेव युक्तमित्यङ्गत्वं समिदादीनां न स्यादित्यास्तां तावत्॥ १॥

प्रकृतमनुसरामः—

## उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैककर्म्यं स्यात्॥ २॥ पू०

पूर्वपक्षोऽभिधीयते—**यजिप्रयुक्ता धर्माः**। ततश्च पारिप्लवा इति। **कथम्? तत्र केचित्**तावदेवं भाष्यमनादृत्य पूर्वपक्षं **वर्णयन्ति प्रकरणाम्नानानुमितेन वाक्येन** धर्माणां यजि**सम्बन्ध** इति। **एतद्**व्याख्यान**मपरे**

---

१. सन्दिह्यमानयोरेकस्मिन् पक्षे श्रुतिविरोधो न विद्यते–ग.।

२. संशयोऽपि–ख. ग.।

भाष्यानुसारिणो **दूषयन्ति**, अस्मिन् पक्षे पारिप्लवत्वासम्भवात् । कथम् ? **यः फले चोद्यते स एव कथंभावाकाङ्क्षी** सन् **धर्मैः सम्बध्यते । स च विशेष** एव **साकाङ्क्षः**, "दर्शपूर्णमासाभ्यां यजेत" इति विशेषस्यैव फले चोदितत्वात् । **तस्मादन्यस्मिन् विशेषान्तरे कुतो धर्म**प्राप्तिः । **अयं हि** [1]**यागविशेषः श्रुत्या वाक्येन प्रकरणेन च धर्मैः सम्बध्यत** इति हेतोस्तस्यैव प्रकृतत्वात्, प्रकरणवशेन तद्विषयत्वेनैव श्रुतिवाक्ययोरपि कल्पना । तस्मान्न पारिप्लवत्वम् । **तत्रै**तस्मिन् पक्षे दूषितेऽत एव पारिप्लवत्वसिद्धयर्थं पक्षान्तरं दर्शयन्तः **प्रयोगवाक्यं** "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति **धर्मसम्बन्धिविधित्वेनोदाहरन्ति** । अनेनैव प्रत्यक्षेण वाक्येन फलवतो यागानुद्दिश्य समिदादयो धर्मा विधीयन्ते, अनन्यपरत्वादस्य वाक्यस्य । कथम् ? **यागोत्पत्तिस्ताव**न्**नानेन क्रियते, वाक्यान्तरैः** "यदाग्नेयोऽष्टाकपालो भवति" इत्यादिभि**रुत्पन्नत्वाद्** यागानाम् । न च "सन्निधौ त्वविभागात्" इति न्यायादुत्पन्नानामेव फलसम्बन्धार्थमित्याह—**फलसम्बन्धश्च** नानेन क्रियते । कुतः ? **विश्वजिन्न्यायेन प्राप्तत्वात्**[2] स्वर्गफलस्य । **परिशेषादितिकर्त्तव्यतासम्बन्धायेदम्** । **यथा** "**अध्वर्युर्गृहपतिं दीक्षयित्वा** ब्रह्माणं दीक्षयति" **इति दीक्षाक्रमपरं वाक्यम्**, अनन्यपरत्वात्तथेदं धर्मविधानार्थमिति । तथापि कथं पारिप्लवत्वं यावता दर्शपूर्णमासपदविशेषितेन यजिनाग्नेयादय एवोद्दिश्यन्ते, अत आह—**तत्रोद्दिश्यमान**[3]**त्वाद्यागस्य स्वपदस्थं**[4] ग्रहैकत्ववत् [5]**पदान्तरस्थं च**[6]

---

१. यजिविशेषः—ख. ग.

२. प्राप्तेः—ख. ग. ।

३. उद्दिश्यमानत्वे—क. ।

४. पदगतमात्रं—क. ।

५. पदान्तरगतं—क. ।

६. च नास्ति क. ।

हविरुभयत्ववद्विशेषणम**विवक्षितम्**। स्वपदगतमिति[1] च सामान्यन्यायप्रदर्शनार्थमुक्तम्। न तु यजेतेत्यत्र स्वपदगतं किञ्चिद्विशेषणमस्ति,यस्याविवक्षोच्येत[2]। **तस्माद**विशेषितेन यजिना [3]सर्वयागोद्देशात् **सर्वयागेषु धर्माः**। अथ न यजिमुद्दिश्य धर्मा विधीयन्ते, किन्त्वनेनैव वाक्येन दर्शपूर्णमासयजिकर्मिका भावना विधीयते, धर्मास्तु प्रकरणेन तया सम्बध्यन्ते न वाक्यादित्युच्यते, तदयुक्तम्, यजिकर्मिकाया भावनाया निर्ज्ञातप्रकारत्वेनेतिकर्त्तव्यताकाङ्क्षाया अभावेन प्रकरणाभावात्। तस्माद्वाक्येन धर्मसम्बन्धात् पारिप्लवत्वम्।

ननु दर्शपूर्णमासपदमेवोद्देश्यसमर्पकं भवतु, न यजिशब्दः। अतश्च दर्शपूर्णमासपदाभिधेयेष्वाग्नेयादिष्वेव धर्मा भवन्ति, न सर्वेषु। अत आह—**न च दर्शपूर्णमासपदेन सम्बध्यन्ते** धर्माः। कुतः? **अत्यन्तवाक्यत्वात्**। **यागे** हि[4] **विधीयमानेषु** धर्मेषु **धात्वर्थे किञ्चिद्विधानाच्छ्रु**तिरनुगृह्यते, नामार्थेन तु प्रयाजादीनां सम्बन्धे यजेतेत्यनेन विधीयमाने परपदसम्बन्धविधानाच्छ्रुतिरत्यन्तपीडिता स्यात्।

ननु नानेन विधिना दर्शपूर्णमासयोर्धर्मा विधीयन्ते, किन्तु दर्शपूर्णमासपदेनाग्नेयादीनुद्दिश्य समिदादिवाक्यगतैरेव विधिभिः समिदादियागा विधीयन्ते। एवं हि धात्वर्थस्यान्यत्र विधानादत्यन्तं श्रुत्यनुग्रहो लभ्यते। दर्शपूर्णमासशब्दश्च नाविवक्षितो भविष्यति। यजेतेति च[5] नित्या[6]नुवादो, यागत्वाद्दर्शपूर्णमासपदा[7]भिधेयानामाग्नेयादीनाम्। तस्माद्यजिप्रयुक्तत्वेऽपि न पारिप्लवत्वमिति।

---

१. स्वपदस्थम्—ख. ग.।

२. च्यते—क.।

३. आग्नेयादिसर्व—ख.।

४. हि नास्ति क.।

५. च नास्ति क.।

६. क्रिया—क.।

७. पद नास्ति क.।

उच्यते—नायं दर्शपूर्णमासशब्दो विधीयमानाया इतिकर्त्तव्यताया उद्देश्यं समर्पयितुमर्हति । यत्कारणं कर्त्तव्यार्थस्य विशेषणमिति [ विशेष इति- ]कर्त्तव्यता । दर्शपूर्णमासशब्दश्च तृतीयान्तो न कर्त्तव्यभूतमर्थं वदति, किन्तु करणतया । तस्मान्नानेन सम्बन्ध इतिकर्त्तव्यतायाः । एतेन यजिविशेषणत्वमप्यस्य प्रत्युक्तम् । यजेतेत्यनेन हि[1] फलसाधनत्वेन चोदितानामपि यागानाम् "अकृतः सोऽपि नास्तीति पुनः करणवाञ्छनम्" इत्यनेन न्यायेन यार्थात्कर्त्तव्यता तामनूद्य इतिकर्त्तव्यता विधीयते यद्यागं कुर्यात् तत्समिधो यजतीत्थमिति । ततश्च[2] यजेतेत्यस्य कर्मभूत[3]यागाभिधायित्वान्न तावत्तृतीयान्तस्य दर्शपूर्णमासपदस्य सामानाधिकरण्येन तद्विशेषणत्वं सम्भवति । वैयधिकरण्ये च दर्शपूर्णमासयोर्यागं प्रति करणत्वं स्यात् । तच्च[4] नान्यतः सिद्धमित्यनुवादासम्भवः । विधीयमाने चानिष्टापत्तिः, दर्शपूर्णमासौ यजेः करणं प्रसज्येयाताम् । तस्माद्यागमात्रानुवादेन समिदादीतिकर्त्तव्यताभिधानात् [ विधानात् ] पारिप्लवत्वम् । दर्शपूर्णमासशब्दस्तु प्रायिकानुवादः । प्रायेण यागानां पौर्णमास्यमावास्याकालत्वाद् "य इष्ट्या पशुना" इत्यादिवचनात् । सप्तम्यर्थे लक्षणया तृतीया व्याख्येया । न चानुवादे लक्षणादोषः । स्वर्गकामशब्दश्च फलमात्रोपलक्षणमिति । सोऽयं भाष्यकारीयः पूर्वः पक्षः । तमिदानीं प्रथमपक्षवादिनो दूषयन्ति—**एतदप्ययुक्तम्** । कथम् ? **प्रयाजादीनामप्याग्नेयादिवदनेनैव** विश्वजि**न्न्यायेन** स्वर्ग**फलसम्बन्धः स्यात्** । सर्वेषामश्रुतफलत्वाविशेषे सत्याग्नेयादीनां फलवत्त्वं प्रयाजादीनामङ्गत्वमिति न शक्यं भणितुम् । **ततश्चाङ्ग**त्वाभावात् **कतरे धर्माश्चिन्त्यन्ते** पारिप्लवा व्यवस्थिता वेति । तस्मादाग्नेयादीनां फलवत्त्वात् प्रधानत्वम्, प्रयाजादीनां तु निष्फलत्वादङ्गत्वमिति व्यवस्थाया अनन्यथासिद्धत्वात् प्रयोगवाक्यस्य फलपरत्वमङ्गीकर्त्तव्यम् । न तु विश्व-

---

१. हि नास्ति क. ।

२. तेन–क. ।

३. भूतार्था–क. ।

४. तन्ना–क. ।

जिद्वत् फलकल्पना। किञ्च, **विश्वजित्यन्यथानुपपत्त्या** ([1]**फलकल्पना। इह तु** दर्शपूर्णमासाभ्यां स्वर्गकाम इति **शब्दवत्त्वात् फलस्यान्यथानुपपत्तिः क्षीणा। तस्माद्विश्वजिन्न्यायेन**) फलकल्पनाभावात् प्रयोगवाक्यमेव फलसम्बन्धपरं न[2] धर्मसम्बन्धपरमिति **प्रथममेव व्याख्यानं युक्तम्**, प्रकरणाम्नानानुमितेन वाक्येन धर्मसम्बन्ध इति। ननु यागस्य निर्ज्ञातप्रकारत्वादितिकर्त्तव्यताकाङ्क्षा[3]-भावान्नास्ति प्रकरणमित्युक्तम्। सत्यम्। यदि यजिकर्मिका भावना विधीयेत, ततो निष्फलस्य यागमात्रस्याकर्त्तव्यत्वान्नेतिकर्त्तव्यताकाङ्क्षा स्यात्। यदा तु फल-भावनाकरणत्वेन यागस्य विधानं तदा तेन रूपेण यागस्याप्यलौकिकत्वादस्त्येवेति-कर्त्तव्यताकाङ्क्षा। तस्मादस्ति प्रकरणम्। भाष्यकारस्य त्वयमभिप्रायः—"सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इत्यनेनैव वचनेनाग्नेयादीनां सर्वफलत्वं प्रतिपादयता स्वर्ग-फलत्वमपि[4] सिद्धमिति प्रयोगवाक्यं केवलधर्मसम्बन्धपरमिति। प्रथमपक्षवादिनां त्वयमभिप्रायः—धर्मसम्बन्धपरत्वे सति दर्शपूर्णमासपदं फलपदं चाविवक्षितं स्यात्। तस्मात् सामान्यवचनेन सेत्स्यदपि स्वर्गफलत्वमनेन [5]विशेषवचनेनैव प्रतिपाद्यते। सर्वेभ्यः कामेभ्य इति तु फलान्तरपरं न स्वर्गपरम्, आहत्यैव स्वर्गफलत्वस्य दर्शपूर्णमासवाक्येनैवोक्तत्वादिति। तदेवं द्वेधा पूर्वः पक्षः—प्रयोगवाक्येनैव धर्म-सम्बन्धः, प्रकरणाम्नानानुमितेन वेति। यत्त्वस्मिन् पक्षे न पारिप्लवत्वसिद्धिराग्ने-यादियागविशेषस्यैव फले विधानात्, तेनैव धर्माणां सम्बन्धादित्युक्तम्। तत्राह—सत्यं यः फले चोद्यते स इतिकर्त्तव्यतया सम्बध्यते। स तु सम्बध्यमान इतिकर्त्त-व्यतां प्रति [6]प्रधानभूतः। ततः किमित्याह—**प्रधानस्य चोद्दिश्यमानस्य**

---

१. कोष्ठान्तर्गतो नास्ति ख.।

२. न धर्मसंबन्धपरं नास्ति ग.।

३. काङ्क्षा नास्ति क.।

४. अपि नास्ति क.।

५. निशेषवचनेन नास्ति ख. ग.।

६ प्रधानमित्येव–ख. ग.।

**विशेषणमविवक्षितम्।** अतः पारिप्लवत्वमिति। ननु न सामान्येनोद्दिश्य शब्दान्तरेण विशिंष्मः, किन्तु प्रकरणवशात् प्रकृतमेव विशेषमुद्दिशामः। तत्कथं पारिप्लवत्वमत आह—**प्रकरणाम्नानानुमितेऽपि वाक्ये स्वशक्त्या सर्वयागानां धर्मसम्बन्धः।** अस्यार्थः—न प्रकरणं स्वयमेव विनियोगे प्रमाणम्, किन्तु वाक्यकल्पनया। शब्द एव च[1] तेन कल्प्यते नार्थः, श्रुतार्थापत्तेः ([2]शब्दगोचरत्वस्य स्थितत्वात्। इहापि च भाष्यकारो वक्ष्यति—"वचनं पुनर्द्विविधं प्रत्यक्षश्रुतमानुमानिकं च" इति। तच्चास्माभिस्तत्रैवोपपादयिष्यते।) शब्दे च[3] कल्प्यमाने न दर्शपूर्णमासशब्दमात्रं कल्पयितुं शक्यते, येनाग्नेयादिष्वेव व्यवतिष्ठेरन् धर्माः, [4]यन्नामपदं तस्य भावनानभिधायित्वेन कर्तव्यभूतार्थासमर्पकत्वात्। कर्तव्य(ता)विशेषो हीतिकर्तव्यता। सा कर्तव्यताभिधायिनाख्यातेनैव सम्बध्यते न नाम्ना। [1]तच्चाख्यातं यजेतेति स्वशक्त्या [5]सर्वान् यागानभिधत्ते। तस्मात् पारिप्लवा धर्मा [6]भवन्तीति। तदेवं द्वेधापि यजिप्रयुक्तत्वे पारिप्लवत्वं धर्माणां प्रतिपाद्य इदानीं यजिप्रयुक्तत्वे युक्तिं पक्षद्वयसाधारणीं दर्शयति—**उपपत्तिस्तु करणानुग्राहिणीतिकर्तव्यता लोके दृष्टा। सा तथैवेहापि भवितुमर्हति।** अपूर्वभावनयापि हि सम्बध्यावश्यमितिकर्तव्यतया करणस्यैवानुग्रहीतव्यम्। अपूर्वभावनापि हीतिकर्तव्यतां करणार्थमेव स्वीकरोति, न साक्षादात्मार्थम्। तथा हि करणस्य करणत्वमुपपद्यते। ततश्च यदर्थमसावङ्गीक्रियते तेनैव करणेन प्रथमं सम्बध्यतां किं परम्परया। करणस्यापि चास्त्येवार्थात् कर्तव्यतेति युक्त एवेतिकर्तव्यतान्वयः। तस्माद्यजिसम्बद्धा धर्मास्तद्द्वारेणापूर्वस्योपकुर्वन्ति। यथाधानमग्निद्वारेण क्रतूनाम्।

---

1. तच्चाख्यातमिति। अत्राख्यातपदमाख्यातान्तधातुपरम्।

१. चानेन—ख. ग.।

२. कोष्ठान्तर्गतो नास्ति ख.।

३. तु—क.।

४. यन्नामपदं—नास्ति ख. ग.।

५ सर्वान्यज्ञा—क.।

६ भवन्ति—क.।

सति चैवं पारिप्लवत्वं भवतीति प्रतिपादनार्थं भाष्यमनुभाष्याक्षिपति—**'सर्वाण्यपूर्वाणि यजिमन्ति' इत्येवमादिः 'स च यजिसम्बन्धः सर्वापूर्वाणां तुल्यः' इत्येवमन्तोऽयुक्तो ग्रन्थः** । कथम्? **यागोऽपूर्वेणाविनाभूतः**, सर्वयजीनामपूर्वसाधनत्वात् । **न** '**त्वपूर्वं यागे**नाविनाभूतम्, होमादिष्वप्यपूर्वसद्भावात् । तस्मादयुक्तं सर्वापूर्वाणां यजिसम्बन्ध इति । अत्रैवाक्षेपप्रसङ्गाद् यत्सिद्धान्ते भाष्यकारेण "उत्पत्तौ विध्यभावाद्" इत्यस्मिन् सूत्रे सन्निपत्योपकारकाणां यागसम्बन्धिनि द्रव्ये देवतायां च क्रियमाणानां यागार्थत्वमेव नापूर्वार्थत्वमित्याशङ्कानिराकरणार्थमुक्तम् "केवलं यजौ श्रूयन्ते क्रियन्ते च, न त्वेतावता तदर्था भवन्ति । यथा वाससि रागः श्रूयते वासो रञ्जयेदिति । वाससि च क्रियते । न चासौ[२] तदर्थः, किन्तु स्त्र्यर्थः पुरुषार्थो वा भवति । एवमिहापि साक्षादपूर्वेऽसम्भवात्तदर्था अपि सन्तो धर्माः केवलं यजौ श्रूयन्ते क्रियन्ते च" इति, तदप्य[३]र्थतः पठित्वाक्षिपति—**अपूर्वे चासम्भवन्तो यागे क्रियन्त इत्येतदप्य[४]युक्तम्** । एवं **ह्यन्यत्रापूर्वे श्रुता अन्यत्र** यागे **कृताः स्युः** । न चैवं युक्तमिति । प्रथमाक्षेपं समाधत्ते—**अविनाभावमङ्गीकृत्य सर्वाण्यपूर्वाणि यजिमन्तीति ब्रवीति** । यानि यजिविषयाण्यपूर्वाणि यागाविनाभूतानि तदभिप्रायमिदं भाष्यम् यज्युद्देशेन विहिता धर्मा यजिमत्सु सर्वापूर्वेषु भवितुमर्हन्तीति, न त्वपूर्वमात्राभिप्रायमिति । द्वितीयं समाधत्ते—**अपूर्वे चासम्भवन्त** इत्यपि युक्तम् । **यागस्यैव शक्तिरपूर्वमित्युच्यते**, न तु[५] स्वतन्त्रमर्थान्तरम् । शक्त्यर्थाश्च धर्माः **शक्तिमति** यागे **क्रियमाणा नाश्रुते कृता भवन्ति**, शक्तिशक्तिमतोरत्यन्तभेदाभावादिति[1] ॥ २ ॥

1. अत्यन्तभेदाभावादिति । अनेन शक्तिशक्तिमतोरभेद इति तत्र तत्रस्थस्य वचनस्याभिप्रायः—अभेदासमानाधिकरणः केवलभेदो नास्ति, किन्तु भेदाभेदौ भवत इति वर्णित इति द्रष्टव्यम् ।

१. नापूर्वम्—क. ।

२. वासौ—क. ग. ।

३. अपि—नास्ति क. ।

४. अपि—नास्ति क. ।

५. तु—नास्ति क. ।

**चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥**

**भावनाशेषभावादित्यर्थः**, चोद्यमानत्वात्। ततश्च तद्भेदाद्व्यवतिष्ठेरन् भा[1]**वनाभेदाद् व्यवतिष्ठेरन् धर्माः**। कथं भावनाशेषत्वमित्याह— **उत्पत्तेर्गुणभूतत्वात्** । उत्पद्यतेऽनेनापूर्वमित्यु**त्पत्तिर्यागः** । तस्य भावनां प्रति गुणभूतत्वात्। यागो हि **तस्या** भावनायाः **करणत्वेनोपादीयमानत्वाद् गुणभूतः। तस्मान्न स धर्मैः सम्बध्यते**। किं गुणभावादसम्बन्धो भवति? ओम् इत्याह—**सम्बध्यमाने च स्वार्थपरार्थता** स्यात्। चशब्दो हेतौ। तथा **वाक्यभेदादिदोषश्च** स्यात् । अयमभिप्रायः—द्वेधा हि पूर्वपक्षो वर्णितः। प्रयोगवाक्येन धर्माणां यागसम्बन्धः, प्रकरणाम्नानानुमितेन वाक्येन चेति[2]। तत्र यस्तावत् प्रथमः पक्षः, स नोपपद्यते। कथम्? प्रयोगवाक्ये हि यागः फलभावनां प्रति करणत्वेनोपादीयते। इतिकर्तव्यतया तु सम्बध्यमान उद्देश्यः स्यात्। तथा च वाजपेयवद्विरुद्धत्रिकद्वयापत्तिः। ननु नानेन वाक्येन फलं प्रति यागस्योपादानम्, किन्तु "सर्वेभ्यो दर्शपूर्णमासौ", "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इत्यादिभिः फलसाधनत्वेन विहिता यागाः केवलं धर्मसम्बन्धार्थमुद्दिश्यन्ते। तत्कथं वैरूप्यम्? उच्यते, नैवं युक्तम्। एवं हि दर्शपूर्णमासपदं फलपद[3]ञ्चाविवक्षितार्थमेकदेशानुवादमात्रमित्याश्रीयेत । तच्चायुक्तम् । तस्मादनेन तावद्[4] भावनां प्रति याग उपादीयते। तदेवं सति यदि यागोऽस्मिन् वाक्ये धर्मसम्बन्धार्थमप्युच्चार्यते, ततः फलं प्रत्युपादानविधानगुणभावात् स्वार्थे चोच्चारणाद्, इतिकर्तव्यतां तु प्रत्युद्देश्यानुवादप्राधान्याद्युच्चारणपारार्थ्याच्च वैरूप्यनिमित्तो वाक्यभेदः स्यात्, उच्चारणावृत्तिप्रसङ्गात्। नहि सकृदुच्चारणे यागेनापूर्वं कुर्यात् यागं चेत्थं कुर्यादित्यर्थद्वयं लभ्यते। तस्मादेष तावत् पक्षोऽ-

---

१. भावनाभेदाद्व्यवतिष्ठेरन्–नास्ति क.।

२. वेति–क. ग.।

३. वा–क.।

४. तावत्–नास्ति क.।

नुपपन्नः। न च प्रकरणाम्नानानुमितेन वाक्यान्तरेण धर्मसम्बन्ध इति युक्तम्, वाक्यभेदादि[1]दोषादेव। नह्यत्र वाक्यान्तरकल्पनया विना किञ्चिदनुपपन्नम्, यतस्तत्कल्प्येत। आदिशब्देन च यागस्य प्रज्ञातोपायत्वान्न शास्त्रीयोपायापेक्षा। अतस्तत्सम्बन्धेऽनपेक्षितसम्बन्धापत्तिः स्यात्। अपेक्षाभावादेव चाकाङ्क्षात्मकप्रकरणाभावान्न प्रकरणवशेन विनियोजकवाक्यकल्पना सम्भवतीति दर्शितमिति। ननु भावनयापि सम्बन्धे वाक्यान्तरं विनियोजकं प्रकरणात् कल्पनीयमेव, तत्कथं वाक्यान्तरकल्पने[2] दोष उद्भाव्यते। मैवं वोचः। नहि तदा वाक्यान्तरं कल्प्यम्। श्रुतयोरेव तु प्रयाजदर्शपूर्णमासवाक्ययोरेकवाक्यतामात्रं प्रकरणात् कल्प्यते। वाक्यद्वयेऽपि हि यच्छब्दाद्युपबन्धविधुराख्यातद्वयसद्भावात् स्वतन्त्रमेवार्थद्वयं प्रतीयते, न त्वभिधानतोऽन्यतरस्यान्यतरविशेषणत्वयोग्यरूपेणोपादानमस्ति। न वा[3]-सति विशेषणविशेष्यभावे एकवाक्यत्वसम्भवः। तस्मादप्रत्यक्षमेकवाक्यत्वं प्रकरणवशात् कल्प्यते। दर्शपूर्णमासाभ्यां स्वर्गापूर्वार्थं व्याप्रियेतेत्युक्ते भवति प्रकारविशेषाकाङ्क्षा—कथं व्याप्रियेत, कीदृग्भूतोऽसौ व्यापार इति। सर्वत्र हि साधनगतव्यापारविशेषानुष्ठानादेव तेन साध्यं साधितं भवति। तद्यथा परशुगतोद्यमननिपातनव्यापारेऽनुष्ठिते तेन छेदनं कृतं भवति। तदिह यागेन कुर्यादित्येतावत्युक्ते न ज्ञायते कोऽसौ यागगतो व्यापार इति। तदस्यामाकाङ्क्षायां यदि "वारवन्तीयमग्निष्टोमसाम कृत्वा" इतिवत् समिदादिभिरुपकारवन्तां कृत्वेति श्रूयेत, ततोऽभिधानत एव विशेषणत्वेन समिद्यागोऽवगत इति प्रत्यक्षेणैव वाक्येन समिदादिभिरुपकारसम्पादनं दर्शपूर्णमासगतव्यापारत्वेनावगम्येत। यदा तु समिदादिभिर्व्याप्रियेतेति श्रूयते, तदा दर्शपूर्णमासव्यापारस्य[4] प्रकाराकाङ्क्षत्वात् समिद्यागस्य च प्रयोजनापेक्षत्वाद् उभयाकाङ्क्षालक्षणेन प्रकरणेन येन शब्देन समिद्या-

१. भेददोषा–ख. ग.।

२. कल्पनेन–क.।

३. चा–ख. ग.

४. यागस्य–क.।

पारस्य विशेषणतोच्यते, तादृक्शब्दकल्पनापुरःसरं मिथो विशेषणविशेष्यत्वकल्पनया अप्रत्यक्षमेवैकवाक्यत्वं कल्पं (कल्प्यं)—समिदादिभिर्दर्शपूर्णमासयागं प्रति व्याप्रियेतेति। यथा लोके कीदृशं देवदत्तगृहमित्यपेक्षायां यत्रैवमुच्यते द्वाःस्थकदलीद्वययुक्तं निष्कुटावस्थितबहुचम्पकमिति, तदाऽभिधानत एवेत्थंभावोऽभ्युक्तो भवति। यदा पुनरेवमुच्यते द्वारप्रदेशे कदलीद्वयं तिष्ठति निष्कुटे च बहुचम्पकाः सन्तीति, तदा शब्दानुक्त एवेत्थंभावः कल्प्यः[1], तद्वदिहापि समिदादिवाक्यानां दर्शपूर्णमासवाक्येनैकवाक्यतामात्रं कल्प्यम्, न तु वाक्यान्तरम्। उपसंहरति—**अतः सर्वविशेषणविशिष्टा भावना विधीयते**। भावना हि विधीयमानेनैकेनैव रूपेण त्रिभिरप्यंशैः सम्बध्यते–इदमनेनेत्थं कुर्यादिति। तस्मात्तयैवांशानां सम्बन्धः। परस्परसम्बन्धस्तर्हि न स्यात्। अतश्च करणानुग्राहकत्वमङ्गानां न स्यादत आह—**अर्थादैककर्म्यात् परस्परनियम** उपकार्योपकारकत्व[2]लक्षणः।

भावनापेक्षमाणा हि साधनं किं फलस्य मे।

साधनानुग्रहः को वा—

इत्यंशत्रयमनुस्यूतं परस्परसंयुक्तमपेक्षते। यथापेक्षं च सम्बन्ध इति भावनयापि सम्बध्यमानमितिकर्तव्यताजातं करणानुग्राहकं भवतीति। तेन दर्शपूर्णमासभावनयैव गृहीतत्वाद् धर्माणां तत्करणभूतयोर्दर्शपूर्णमासयोरेव व्यवस्था, न तु सर्वयागार्थतया पारिप्लवत्वम्। यदि हि यागवद्भावनाप्युद्दिश्यमाना सती धर्मैः सम्बध्येत, तत एकस्मिन् वाक्ये उद्देशोपादानासम्भवाद्वाक्यान्तरेण भावनामुद्दिश्य विधीयमाना धर्माः सर्वभावनासु[3] प्राप्तेः पारिप्लवाः स्युः[4]। न त्वेवमस्ति, विधीयमानाया एव तस्या इतिकर्तव्यतयापि सम्बन्धादित्युक्तम्।

---

१ कल्प्यः–नास्ति क.।

२ त्व–नास्ति क.।

३. संप्राप्तेः–क.।

४. स्युः–नास्ति ग.।

तस्मान्न पारिप्लवत्वम्। इदं च[१] पारमार्थिकं कथितम्। पारिप्लवत्वं तु यागसम्बन्धाभ्युपगमेऽपि सुपरिहरम्। तथा हि—यागानुवादेन धर्मा विधीयन्ते। अनुवादश्च सति सम्भवे सन्निहितमवलम्बते, नासन्निहितं[२] मृगयते। सन्निहिताश्चाग्नेयादयः सर्वकामवचनलब्धफला[३] इतिकर्तव्यताकाङ्क्षिण इति तानेव दर्शपूर्णमासवाक्यस्थेन यजिनानूद्य धर्मा विधीयन्त इति न पारिप्लवत्वम्। न चोद्दिश्यमानविशेषणाङ्गीकरणाद्वाक्यभेदः शङ्कितव्यः, यजेरेव सन्निधानवशाद् विशेषगामित्वात्। नहि सन्निधिलभ्यो[४]ऽर्थो वाक्यं भिनत्ति। यदा तु प्रकरणाम्नानानुमितेन वाक्येन[५] धर्माणां विनियोगस्तदा सुतरां व्यवतिष्ठन्ते प्रकृते[६]ष्वेवेति न पारिप्लवत्वमिति। अत्र भाष्यकारेण चोदितम्—अथैतस्मिन् पक्षे कथं दर्शपूर्णमासशब्देन यागो विशिष्यत[1] इति। तस्यार्थः—यद्यपि दर्शपूर्णमासवाक्यस्थभावनासम्बन्धपुरःसरमेव यागसम्बन्धो धर्माणाम्, तथापि सर्वयागेषु भवितुमर्हति, सर्वेषां तत्करणत्वात्। अविशेषितेन यजिना सर्वयागानां[७] भावनाकरणत्वावगमादिति। तत्रोत्तरम्—नैवात्र यागो विशेष्यते, किं तर्हि? अपूर्वभावनैवोभयविशिष्टा[2] उच्यत[८] इत्यादि। पुनश्चोद्यं विषम उपन्यास इत्यादि। तस्याप्युत्तरम्—उच्यते इत्यादि। ततश्च[९]

---

1. 'विशेष्यते' इत्येव पूनामुद्रितभाष्यपाठः स्वरसः।

2. उभयपदविशिष्टा इति पूनामुद्रितो भाष्यपाठः स्वरसः।

१. तु—क.।

२. अवलम्बते नासन्निहितं—नास्ति क.।

३. बला—ख, फलता—ग.।

४. लब्धो—ग.।

५. वाक्येन—नास्ति क.।

६. प्राकृतेषु—क.।

७. सर्वेषाम्—क.।

८. विधीयते—क.।

९. तत्र—ख. ग.।

यथैककर्म्यादरुणैकहायन्योर्मिथो नियमे सत्यरुणैव[1]कहायनी क्रयस्य करणम्, न त्वेकहायनीमात्रम्, [2]तथैकहायन्येवारुणा, नारुणमात्रम्; तथाऽत्र दर्शपूर्णमासात्मक एव यागः करणम्, न यागमात्रमिति। पुनश्चोद्यम्—**एवमपि श्रुत्या सामान्यस्य भावना**[3] **वाक्याद्विशेषस्य। न चैतद्युगपद्भवतीति।** तस्य किलायमर्थः—युक्तमरुणैकहायन्योर्द्वयोरपि पदान्तरोपात्तत्वेन वाक्या[4]धीनविनियोगयोस्तुल्यबलत्वेनैकक्रियान्वयित्वम्, इह तु सामान्यस्य समानपदोपात्तत्वात् [5]तत्सम्बन्धित्वं भावनायाः श्रौतम्। विशेषान्वयस्तु वाक्यान्नामधेयस्य पदान्तरोपात्तत्वात्। न चोभयोः करणत्वं सम्भवति, एकेनैव करणेन भावनाया नैराकाङ्क्ष्यात्। तस्माद्यागमात्रमस्याः[6] करणमिति। तदाक्षिपति—**अयुक्तोऽयं ग्रन्थः, उपश्लेषलक्षणया** विशेषणविशेष्यभावमात्रप्रतिपादिकया हि पद**श्रुत्या धातुना सम्बन्धो** भावनायाः, **तृतीयया** तु **तादर्थ्येनैव** करणभावेन **दर्शपूर्णमासयो**र्भावनान्वयः। ततः किमित्याह—तत **उपश्लेषलक्षणया तादर्थ्यम**शाब्दमेव **कल्प्यम्**, तृतीयया तूक्तमेव तादर्थ्यम्। अतो विपरीतं बलाबलम्। [7]अभिधानश्रुतिर्हि प्रत्यासत्तिश्रुतितो बलीयसीति भावः। तेन विशेषस्यैव करणत्वं न सामान्यस्य। किञ्चाविरोधादपि न श्रुत्या वाक्यस्य बाधो युक्त इत्याह—**यदि दर्शपूर्णमासौ भावनया सम्बध्यमानौ यागवद् भाव्यस्य**[8] भावनायाः[9] **करणतां प्रतिपद्येयाताम्**,

---

१. एव—नास्ति क.।

२. तथैकहायन्येवारुणा नारुणमात्रं तथात्र—नास्ति क.।

३. भावना—नास्ति क.।

४. द्विधान—क.।

५. तत्—नास्ति क.।

६. अस्याः—नास्ति ख. ग.।

७. तदर्थताभि—क.।

८. फलस्य—क.।

९. भावनायाः—नास्ति पू. मु.।

**तत** उभयोरपि तुल्यकार्यतया **विरोधे** सति श्रुतिः परिगृह्येत। **श्रुत्या** च **वाक्यं बाध्येत। इह च विरोध एव नास्ति,** तृतीयान्तयोरपि दर्शपूर्णमासयोर्व्रीहिसोमादिवदितिकर्तव्यतात्वसम्भवात्। **यदि वेदश्यो**[1] वाक्यविरोधिन्योऽपि **श्रुतय** एव वाक्यं बाधित्वा **परिगृह्यन्ते, ततः** "सोमेन यजेत", "दशापवित्रेण ग्रहं सम्मार्ष्टि" इत्यादौ सर्वत्र **नामपदानां** सम्बन्धाभावात् **केवलान्यख्यातान्यवतिष्ठेरन्।** एवं चोद्यभाष्यमाक्षिप्य परिहारभाष्य[2]माक्षिपति। **एवं तर्हि नैवात्र श्रुत्यर्थः परिगृह्यते। किं तर्हि? वाक्यार्थ इति। एतदप्ययुक्तम्**[3]**। भावार्थाधिकरणविपरीतत्वात्।** तत्र हि धात्वर्था[4] एव[5] फलभावनायां करणं भवन्ति, न नामार्था[6] इत्युक्तम्। **किञ्च, यागसामानाधिकरण्याद्यागवचनोऽयं**[7] दर्शपूर्णमासशब्दो भवति। **तच्च सामानाधिकरण्यं यागफलसम्बन्धे सति भवति**[8]। तदभावे तु सामानाधिकरण्याभावात् प्रसिद्ध्यादिभिर्गुणविधित्वमेव स्यादिति तत्रैवोक्तम्—स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचार इति। **तस्मान्न ज्ञायते किमनेनोच्यत** इति। **अपि** चैवमसति कर्मणो नामधेयत्वे गुणवचनस्यैव सतः फलसम्बन्धेऽभ्युपगम्यमाने **फले विधीयमानस्य**[9] गुणस्याश्रयः **क्रिया देयः**[10]। नहि निष्क्रियस्य गुणस्यौदासीन्यावस्थितस्य फलसाधनत्वं सम्भवतीति। दीयतां तर्हि[11] याग एवाश्रयोऽत आह—**सा च** क्रिया **गोदोहनादि-**

---

१. चेदश्यो—क.।
२. मथाक्षिपति—ख. ग.।
३ अपि—नास्ति क.।
४. अर्थः—क.।
५. एव—नास्ति क.।
६. अर्थः—क.।
७. अयं—नास्ति क.।
८. भवति—नास्ति क.।
९. विधीयमाने—क।
१०. देयः क्रिया—क, क्रिया नास्ति ग.।
११. तर्हि—नास्ति क.।

**वद्**[1] गोदोहनादेरिव प्रणयादि [ प्रणयनादि ] प्रकरणान्न **लभ्यते**। कुतः? **अविहितत्वाद्** वाक्यान्तरेण **यागस्याप्रकृतत्वात्**। **ततश्चाश्रयो**[2]ऽनेनैव **वाक्येन देयः। तत्र** गुणफलसम्बन्धस्य गुणाश्रयसम्बन्धस्य च विधानाद्**वाक्यभेदः** स्यादिति[3]। समाधत्ते—यस्मादेवं वर्ण्यमाने दोषस्त**स्मादन्यथा** भाष्यार्थो **वर्ण्यते**। तत्र चोद्याभिप्रायं तावद्व्याचष्टे—**एवमपि** श्रुत्या सामान्यस्य भावनेति **नोपश्लेषलक्षणां श्रुतिमभिप्रेत्योच्यते, किं तर्हि? अभिधात्रीम्**। तत्रायमर्थः—**यजेतेत्ययं** शब्दः **प्रकृताप्रकृतं** सर्वं **यागं भावनासम्बन्धित्वेन** श्रुतिमात्रात् **प्रतिपादयति**। वाक्याद्विशेषस्येति चायमर्थः—स यजिश्रुतिमात्रेण सर्वयागान् प्रतिपादयन्नेकवाक्यभूत**दर्शपूर्णमासपदेन**, तत्सामानाधिकरण्येनेति यावत्, **प्रकृतेऽवस्थाप्यते। तत्रापि** च **प्रकृतत्वाविशेषेऽपि**[4] सति **विशिष्टेष्वाग्नेयादिष्वेव**[5] **प्रकृतेषु संस्थाप्यते, न तु** सर्वेषु **प्रयाजादिष्वपि। तस्मादिदं** पदान्तरालोचनाव्याक्षेपेण **विलम्बितम्** प्रकृतवचनत्वं **दृष्ट्वा वाक्यमित्युक्तम्**। न चैतद् युगपद्भवति इति भाष्यार्थमाह—**न च सकृदुच्चरितः** श्रुतिवशेन **प्रकृताप्रकृतवचनः, वाक्यवशेन प्रकृतवचनश्च**[6] **सम्भवति**। तस्माच्छ्रुतिमात्रलभ्यस्य सर्वयागवचनत्वस्य शीघ्रत्वाद्विलम्बितप्रकृतवचनत्वबाधेन सर्वयागानां युक्तमिह करणत्वमङ्गीकर्तुमिति चोद्यार्थः। परिहारभाष्याभिप्रायमाह—**इतरस्त्वाह। य एवाग्नेयादयो यागाः** फलाकाङ्क्षिणो **विपरिवर्तन्ते, त एव फलेन सम्बध्यन्ते** न सर्वे**। कुतः? रूपवतां सन्निधावरूपः शिष्यमाणः प्रकृतग्राहको** भवति। **यजेतेति चायमरूपः** शब्दः। तस्मान्न प्रकृतानादरेण यागान्तरं तावद्विधातुं समर्थः। न च प्रकृतेषु साकाङ्क्षेषु सत्स्वप्रकृतग्रहणे किञ्चित् प्रमाणमस्ति। श्रुतिरिति चेत्?

---

१. गोदोहनादिवत्—नास्ति क.।

२. अयोऽपि तेनैव—ख. ग.।

३. स्यात्—नास्ति क.।

४. अपि—नास्ति क.।

५. एव—नास्ति क.

६. च—नास्ति क.।

न, तस्याः सामान्यवचनत्वात्। सामान्यस्य च प्रतिपिण्डसमाप्तत्वेन प्रकृतेष्वपि साकल्येन विद्यमानत्वात्। तेन तु व्यक्तिषु लक्ष्यमाणासु न प्रकृतातिक्रमे कारणमस्ति। तस्मात् प्रकृता एव तावद्[१] ग्रहीतव्याः। **तत्रापि प्रकृतत्वाविशेषात्[२] सर्वेषु** प्रयाजादिष्वपि **यागेषु प्रसक्तेषु दर्शपूर्णमासशब्दवाच्या एव फले विधीयन्ते,** अन्यथा तत्सामानाधिकरण्यबाधात्। दर्शपूर्णमासशब्दो हि प्रसिद्धार्थत्वाच्छक्नोति सामान्यवाचिनं यजिं [३]स्वविशेषे व्यवस्थापयितुमित्युक्तं चतुर्थे। भाष्यस्य चायमर्थः—**नैवात्र श्रुत्यर्थः परिगृह्यते।** श्रुतिमात्रोपनिपातियागमात्रं न गृह्यते। किं तर्हि? वाक्यार्थः। नामधेयैकवाक्यताबलेनाग्नेयादियागविशेषा[४] एव गृह्यन्तेऽन्यथा तदानर्थक्यादिति। **यजिश्चानुवाद** इति कोऽर्थो[५] भाष्यस्य? [६]अयमर्थः—यदयं [यद्ययं] यागोत्पत्तिं विदध्यात्[७] ततो न प्रकृतविषयः स्यात्। अयं त्वरूपत्वादुत्पन्नाननूद्य फले विनियुङ्क्ते, अतो नामधेयवशेनाग्नेयादिविषयत्वमिति। न चैवं यजिश्रुतेर्बाध इत्याह—यजिविशेषात्मकत्वाद्दर्शपूर्णमासयोर्विशेषे च सामान्यस्य कार्त्स्न्यसम्भवात्[1]। कथं यजत्यात्मकत्वमित्यत आह—**यजतिसामानाधिकरण्याच्च दर्शपूर्णमासशब्दस्य।** [८]**अतोऽयं** वाक्यार्थः—**भावयेत्** स्वर्गम्। केन? **यागेन करणेन।** तेनापि न सर्वेण, किन्तु **दर्शपूर्णमाससंज्ञकेनेति।** तेन धात्वर्थस्यैव फलसाधनत्वान्न भावार्थाधिकरणविरोधादिदोषप्रसङ्गः। कथं तर्ह्येकादशाद्ये भाष्यकारेण दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति

1. कार्त्स्न्यसंभवात्। पर्याप्तिसंभवादित्यर्थः।

१. तावत्—नास्ति क.।

२. विशेषा—नास्ति क.।

३. स्व—नास्ति क.।

४. विशेष एव गृह्यते—क.।

५. कोऽर्थः—नास्ति क.।

६. चायमर्थः—क.।

७. ततः—नास्ति क.।

८. अत्रायं—क.।

नामार्थस्य फलसम्बन्धो दर्शितः ? अत आह—**दर्शपूर्णमासाभ्यां स्वर्गमिति फलेनोपसंहृतं भाष्यकारेण**। धातुनापि नामविशेषितेनाग्नेयादीनामेव फलसम्बन्धात् फलतोऽयमर्थः सम्पद्यते—दर्शपूर्णमासाभ्यां स्वर्गमिति। तस्मात् फलाभिप्रायत्वाददोषः। तस्मादाग्नेयादीनामेव करणत्वाद् भावनागृहीतमितिकर्तव्यताजातं [1]तेष्वेवावतिष्ठते न पारिप्लवं भवतीति[2]।

अत्र पूर्वपक्षे गौर्न पदा स्प्रष्टव्य इति गोसम्बन्धेन श्रूयमाणः प्रतिषेधो यथा सर्वग[3]वीषु विज्ञायते, तथा यागे श्रूयमाणा धर्माः सर्वत्र स्युरित्युक्तम् ॥ ३ ॥ तत्परिहारार्थं सूत्रम्—

**सत्त्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत ॥ ४ ॥**

इति। तत्र लक्षणसंयोगादित्यस्य स्वमतेन तावदभिप्रायमाह—**सत्त्वं लक्षयित्वोद्दिश्य यो धर्म उच्यते**। "ग्रहं सम्मार्ष्टि" इति "आहवनीये जुहोति" इत्यादिवत् स **सार्वत्रिको** भवति। **गवादयश्च** स्पर्शप्रतिषेधे [4]**तथा उद्दिश्यन्ते**। प्रतिषेधपरे हि वाक्ये प्रति[5]षेध्यमुद्देश्यं भवति[6]। अतो युक्तं सार्वत्रिकत्वम्। इह[7] तु **उपादीयमाने विपरीतं** न सार्वत्रिकत्वम्। इह हि न यागोद्देशेन धर्मा विधीयन्ते, किन्तु यागा धर्माश्च फलभावनां प्रत्युपादीयन्ते। तत्रैककर्म्यात् परस्परनियमे सति न सार्वत्रिकत्वं भवति। भाष्यकारेण त्वेवं व्याख्यातम्—गवाकृतौ धर्माः प्रतिषेध्याः श्रूयन्ते, आकृतेः पदार्थत्वात्। **न च तत्र सम्भवति** प्रतिषेधः, आकृतेरमूर्तत्वेन स्पर्शप्रसङ्गाभावात्। **अतोऽसावा-**

१. तेष्वेव व्यव—ख. ग.।

२. इति—नास्ति क.।

३. सर्वगोषु क.।

४. तथा—नास्ति क.।

५. प्रसिषिद्धम्—क.।

६. भवति—नास्ति क.।

७. वाक्यमिदं—नास्ति क.।

**कृतिः सहचारिपिण्डलक्षणार्था**। तच्च साहचर्यं सर्वपिण्डानामविशिष्टमिति युक्तं सार्वत्रिकत्वमिति। तत्प्रतीकेनानुभाष्य दूषयति—**अयुक्तमिदम्**। यदिदमाकृतेरमूर्तत्वेन गोशब्दस्य व्यक्तिलक्षणार्थत्वात् सार्वत्रिकत्वमित्युक्तम्, तदयुक्तमित्यर्थः। कुतः? अतिप्रसङ्गात्। एवं हि **पशुमालभेत** स्पृशेदित्य**त्राप्येकस्यालम्भः** स्पर्शो **न स्यात्**। कुतः, **अनेनोक्तेन न्यायेनाकृतेः** स्प्रष्टुम[1]शक्यत्वादा**कृतिलक्षितासु व्यक्ति**ष्वेव स्पर्श**सम्भवात्**। तेन स्पर्शप्रतिषेधवत् स्पर्शविधिरपि सार्वत्रिकः स्यात्। किञ्च, **शक्यते वा[ चा ]कृतिः स्प्रष्टुम्** व्यक्त्याकृत्योरत्यन्तभेदाभावात्। **तस्मादनेन न्यायेन यत्सार्वत्रिकत्वमुक्तं तदतिप्रसज्यते**। तस्मात् पूर्वमेव व्याख्यानं रमणीयमुद्देश्यत्वात् सार्वत्रिकत्वमिति। तदा हि "पशुमालभेत" इत्यत्र पशोरुपादेयत्वान्न सार्वत्रिकत्वप्रसङ्ग इति ॥ ४ ॥

## अविभागात्तु नैवं स्यात् ॥ ५ ॥

**अनेन** पूर्वपक्षसूत्रेण **सन्निपत्योपकारकाः** प्रोक्षणावघातादयः, **तदर्था** यागार्था [2]इत्यु**च्यन्ते**, प्रत्यक्षेणैव तदीये द्रव्यादौ दर्शनात्। एवमपि कथं सर्वधर्माणां यागार्थत्वमत आह—**तन्मध्यपाठात्** प्रायदर्शनन्यायेन **प्रयाजादीना**मपि यागाङ्ग**तामाह** पूर्वपक्षवादी ॥ ५ ॥

## उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात् ततश्च कर्मभेदः स्यात्॥ ७ ॥

इति सिद्धान्तसूत्रं गतार्थम्। यच्चात्र भाष्यकारेणोक्तमपूर्वार्था एव प्रोक्षणादयः, तत्रासम्भवाद् व्रीह्यादिषु क्रियन्त इति, यच्चापूर्वमपह्नुतं समाहितं च, तत्सर्वं प्रागेव व्याख्यातम्। अतः परं तु भाष्यं सुगममेव। तस्माद्धर्माणां प्रतिप्रकरणं व्यवस्थितत्वादधर्मकाण्यैन्द्राग्नादीनि। तेषामतिदेशेन धर्मप्राप्तिः। प्राप्तानां च विकारमियत्तां प्रयोगेयत्तां च चिन्तयितुमुत्तरषट्क आरब्धव्यः। अतिदेशो

---

१. 'अशक्यत्वात्' इत्यारभ्य 'स्प्रष्टुम्' इत्यन्तं नास्ति ख.।

२. इति—नास्ति ख. ग.।

नामान्यत्र[१] स्थितस्योपकारस्य पदार्थानां वा मतीत्य[२] [ तमतीत्य ] अन्यत्र [३]देशनम्। अत्र भाष्यकारेण "स च नाम्ना वचनेन च" इत्युक्त्वा "तत्र नाम त्रिविधमतिदेशकं कर्मनाम संस्कारनाम यौगिकमि[४]त्युक्तम्। तद्यथाश्रुत [ ते ] यौगिकस्याप्यतिदेशकत्वमाह। तच्चायुक्तमिति मत्वा व्याचष्टे—**त्रिविधं नामधेयं कर्मनामधेयं संस्कारनामधेयं यौगिकं चेति।** [५]**तत्र यौगिकम्** यद्योगेनैवोभयत्र वर्त्तितुं शक्नोति। **तत्रातिदेशकं** यथा प्रायणीयादि नामधेयं गवामयनादौ श्रूयमाणं द्वादशाहिकप्रायणीया[६]दिधर्माणां नातिदेशकम्। **कथम्? येनैव** प्रत्यन्त्यनेनेति [ प्रयन्त्यनेनेति ] **योगेन**[७] **द्वादशाहे प्रायणीयशब्दः** प्रवृत्तः, **तेनैव**[८] **गवामयनेऽपीति** श्रुतिसम्भवान्न धर्मलक्षणा युक्ता। तदिदं "अपि वा सत्रकर्मणि" इत्यत्र वक्ष्यामः। भाष्ये चातिदेशकानतिदेशकनाम[९]समुदाये भूम्ना[1]तिदेशकशब्दः प्रयुक्तः। ननु यौगिकमपि, यत्र योगो न सम्भवति, तत्र प्रवर्त्तमानमतिदेशकमेवेति वक्ष्यते यथा विश्वजिति सर्वपृष्ठशब्दः। तदभिप्रायं त्रिविधं नामातिदेशकमिति भाष्यमिति[१०] चेत्? न, तस्य गुणविधित्वात्। नहि सर्वपृष्ठशब्दः षडहस्य विश्वजितो वा नामधेयम्। तस्माद्भूम्नैव भाष्यम्। ननु कर्म-

---

1. भूम्नेति। तत्सिद्धिपेटिकागतेन गौणलक्षणानिमित्तेन बाहुल्येनेत्यर्थः।

१. अन्यत्रास्थित—क.।

२. अतीत्य—नास्ति क.।

३. दर्शनम्—क.।

४. त्युक्तं तद्यथाश्रुत—नास्ति क.।

५. तत्रात्र—क.।

६. आदि—नास्ति क.।

७. योगेन—नास्ति क.।

८. 'प्रयन्त्यनेनेति' अधिकः क.।

९. नाम-नास्ति—क.।

१०. भाष्यमिति—नास्ति क.।

नामधेयानामप्युद्भिदादिपदानामपि यौगिकत्वात् पृथग् ग्रहणमनर्थकम् ? नैष दोषः, तेषां पङ्कजादिशब्दवद् रूढ्यभ्युपगमात् । "वचनं पुनर्द्विविधमतिदेशकम्—प्रत्यक्ष-श्रुतमानुमानिकं च" इति भाष्यम् । अत्र केचिच्चोदयन्ति—यदि प्रत्यक्षेणैव वचनेनान्य-दीया धर्माः प्रकारा वान्यत्र विधीयन्ते, ततस्तेषामौपदेशिकत्वमेव स्यात् , नाति-देशिकत्वम् । उपदेशो हि ग्रन्थसन्दर्भः । तेन विहिता धर्माः कथमातिदेशिकाः स्युरिति । तत्र च समादधति—न पदार्थाभिप्रायमिदम् । किन्तु तत्कार्यकरणोपकार-रूपमभिप्रेत्य प्रत्यक्षवचनमित्युक्तम् । तच्च सर्वत्रौपदेशिकमेवेति । न त्वेतद्युक्तम् । नहि प्रत्यक्षविहितत्वमात्रेणौपदेशिकत्वम् । एवं ह्यन्यत्र स्थितस्योपकारस्य पदार्थस्य वा तत्सम्बन्धाबाधेन तमतीत्यान्यत्र[1] देशः स एवातिदेशः । स तु प्रत्यक्षवचनेन वा भवत्वन्येन वा वाक्येन, नात्रादरः ।

यत्त्वन्यसम्बन्धानपेक्षमेव पदार्थानां कार्याणां वा प्रत्यायकं प्रत्यक्षमनुमेयं वा शास्त्रं तत् सर्वमुपदेश इति । एवं चासंकीर्णविषय( रूप )त्वादुपदेशातिदेशरूपं प्रमाणद्वयं मिथः प्रतिपक्षं भवति । उपदेशकार्यरूपं तु न प्रतिपक्षम् , कार्यप्रमेय-स्यापि तन्त्रादेरौपदेशिकत्वात् । नहि श्रौतमेवौपदेशिकं विश्वजित्यधिकारस्य तद्बललब्धस्य [ तद्बललब्धस्य ] च कर्मफलसम्बन्धस्याश्रुतस्याप्यौपदेशिकत्वात् । अतो यदन्यसम्बन्धमनादृत्य ग्रन्थात् श्रुत्यर्थाद्वाव[2]गम्यते तदौपदेशिकम् । तन्त्रादि च कार्यद्वारेण ग्रन्थादेव बोध्यत इति सङ्करादप्रतिपक्षत्वमित्युपदेशातिदेशरूपमेव [3]प्रमाणद्वयं नोपदेशकार्यरूपम् । अत एव भाष्यकारेण "स च नाम्ना वचनेन च" इत्यतिदेशस्यैव वाचनिकत्वमुक्तं न कार्यस्य, तस्यैव च[4] विभागोऽयं दर्शितः[5]— "वचनं पुनर्द्विविधम्—प्रत्यक्षश्रुतम् आनुमानिकं च" इति । तस्मान्न भङ्क्तव्यं भाष्यं प्रत्यक्षश्रुतं वचनमिति । कः पुनः प्रत्यक्षवचनस्य नामधेयस्य च विशेषः ?

१. अन्यत्र—नास्ति क. ।

२. अव—नास्ति क. ।

३ प्रकरण—ग. ।

४. च—नास्ति क. ।

५. दर्शितः—नास्ति क. ।

नामधेये वत्यर्थो न श्रुतः । प्रत्यक्षवचने तु[1] सोऽपि श्रुत इति विशेषः । आनुमानिकमिति चार्थापत्तिरेवेति पश्चान्मानसाम्या[2]दनुमानशब्देनोच्यते । श्रुतार्थापत्तिकल्पितं वचनमातिदेश[देशि]कमित्यर्थः । यथा "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इति वचनमितिकर्तव्यताभावादपरिपूर्णं प्रकृतिवद्वचनेन वाक्यशेषभूतेन परि[3]पूर्यते । कश्चित्त्वाह—येन विना श्रुतानां शब्दाना[4] परिपूर्णार्थाभिधायित्वानुपपत्तिः, तदेवार्थापत्त्या कल्प्यते । करणोपकाररूपेण चार्थेन विनानुपपत्तिः, न तु वचनेन विना । तस्मादर्थमेवाध्याहृत्य तेनैव सहान्वितं स्वार्थं श्रुतानि पदान्यभिदधतीत्यानुमानिकं वचनमित्यनुपपन्नं भाष्यमिति । [5]तदयुक्तम् । सत्यं येन विनानुपपत्तिस्तदेव कल्प्यते । वचनेन विनात्रानुपपत्तिः, नार्थमात्रेण । तथा हि—भवन्मतमेव तावदन्वारुह्योच्यते । आकाङ्क्षासन्निधियोग्यत्वान्यन्विताभिधानोपलक्षणम् । तत्र शाब्द एव सन्निधिस्तदुपलक्षणमाश्रयितव्यम्, न सन्निधिमात्रम्, तन्मात्रेणान्विताभिधानादर्शनात् । अन्यथा हि प्रत्यक्षेणाश्वे सन्निहिते गामानयेत्युक्तेऽश्वेनाप्यन्वितमानयनमभिधीयेत । बुद्धौ हि विपरिवृत्तिः सन्निधिरुच्यते । अश्वोऽपि च प्रत्यक्ष[6]बुद्धौ विपरिवर्तत इति तेनाप्यन्विताभिधानं स्यात् । न चैवं दृश्यते । ततश्च व्युत्पित्सुर्बालो यथैवासन्निहितेनान्विताभिधानादर्शनात् सन्निधिमुपलक्षणमाश्रयति, तथैवाश्वेऽपि[7] प्रमाणान्तरसन्निहिते, गवि चैकवाक्यभूतपदान्तरसन्निहिते सति गवैवान्विताभिधानदर्शनादेकवाक्यभूतपदा[8]न्तरकृतमेव, सन्निधिमन्विताभिधानोपलक्षणं निश्चिनोति । एवं व्युत्पन्नो यत्रापरिपूर्णं वाक्यं पश्यति

---

१. तु—नास्ति क. ।

२. सामान्या—क. ।

३. परि—नास्ति क. ।

४. पदानां—क. ।

५. नेदमनुपपन्नम्—ख. ग. ।

६. प्रत्यक्षाद् बुद्धौ—ग. ।

७. अपि—नास्ति क. ।

८. शब्दान्तर—क. ।

तत्रापि शब्द [ शाब्द ] सन्निधिसिध्यर्थमपेक्षितार्थसमर्पकं शब्दान्तरमेव श्रुतशब्दैकवाक्यभूतमध्याहारेण कल्पयति । एवमस्मन्मते पदार्थानामाकाङ्क्षायोग्यत्वैकवाक्यभूतपदाधीनसन्निधिशालिनां वाक्यार्थमिति जनकत्वं[१], न सन्निधिमात्रशालिनामिति न्यायरत्नमालायामेव दर्शितमिति शब्दस्यैवाध्याहारः ।

यद्युच्येत - सन्निधिमात्रमेवान्विताभिधानोपलक्षणम्, न चैवं गामानयेत्यत्र प्रत्यक्षादिसन्निहिताश्वान्वितानयनाभिधानप्रसङ्गः, एकवाक्यतया नियमसम्भवात् । यद्यपि हि पदशक्तिः साधारणी, तथापि सा गोपदैक[२]वाक्यतया गव्येव नियम्यते[३] । यत्र - त्वेकवाक्यभूतं पदान्तरं न श्रूयते, तत्र पदशक्त्या सन्निहितमात्रेणैवान्विताभिधानसिद्धेर्न शब्द कल्पना प्रमाणवतीति । तदयुक्तम्, गौरवादप्रामाणिकत्वाच्च । एवं हि पदस्याभिधानशक्तिरेकवाक्यतायाश्च नियमशक्तिः कल्पनीये स्याताम्, तद्वरमेकैक[एकैव]पदस्याकाङ्क्षितेन योग्येन[४] पदान्तरसन्निहितेन चार्थान्तरेणान्विते स्वार्थे शक्तिः कल्पिता । किञ्च, प्रमाणान्तरेण सन्निहितमवधीर्य शब्दसन्निहितेनैव गवाऽन्विताभिधाने दृश्यमाने केन प्रमाणेन सन्निधिमात्रमुपलक्षणमाश्रीयते । द्वारं द्वारमित्यत्राशाब्दैरपि संवरणादिभिरन्विताभिधानदर्शनादिति चेत्, न; तस्य विवादास्पदत्वात् । इदमेव हि आवाभ्या विचार्यते किमेवमादिषु शब्दमध्याहृत्य तत्समर्पितेनैवार्थेन वाक्यार्थस्य पूरणम्, उतार्थस्यैवाध्याहार इति । तत्कथमिदं प्रसिद्धवद्धेतुत्वेन कथ्यते । तस्मात् परिपूर्णेषु वाक्येषु शाब्देनैवार्थेन वाक्यार्थपूरणं व्युत्पन्नमिति तद्बलेनापरिपूर्णेष्वपि शब्दकल्पनैव युक्ता । यदि चैवं नेष्यते, ततो विकृतिषु नीवारसूर्यादिद्रव्यदेवतावतीषु प्राकृते व्रीह्यग्न्यादिपदे निवृत्ते नीवारसूर्यादिपदप्रक्षेपो न स्यात्, अर्थमात्राध्याहारेणैव मन्त्रस्य परिपूर्णत्वेन प्राकृतकार्यक्षमत्वात् । ननु प्रकृतौ शब्देन देवतास्मृतिः कृता, सेहापि तेनैव कर्तव्या । नूनं भवान् प्रतिनिधिविचारं विसस्मार । तत्र हि

१. निमित्तत्वम्—क. ।

२. वाक्यतयेत्यारभ्य शब्देत्यन्तं—नास्ति ख. ।

३. व्यवतिष्ठते नियमात्—क. ।

४. योग्येन—नास्ति क. ।

मन्त्रविनाशेन शब्दान्तरं प्रतिनिधेयम्, शब्दस्मरणस्याशास्त्रीयत्वादित्युक्तम्। मन्त्र-विशेषाम्नानाद्धि मन्त्रेणैव स्मरणं नियतम्, शब्दस्मरणं तु मन्त्रस्य शब्दात्मकत्वादर्थात् सञ्जातं न शास्त्रीयम्। यच्चार्थिकं न तच्चोदकः प्रतिदिशति। तस्मान्मन्त्रवाक्यपूरणायैवाध्याहारः। स चार्थाध्याहारेणैव पूरित इति न शब्दान्तरप्रक्षेपः सिध्येत्। तस्माच्छ्रुतानुपपत्त्या शब्दान्तरमेव कल्पनीयमिति विकृतिष्वपि प्रकृतिवच्छब्द एव वाक्यशेषः कल्पयितव्यः सौर्यं चरुं निर्वपेदाग्नेयवदित्यादि। तस्माद्युक्तं भाष्यम्—"वचनं पुनर्द्विविधं प्रत्यक्षश्रुतमानुमानिकं च" इति ॥ ७ ॥

[ २—इषौ श्येनवैशेषिकधर्मातिदेशाधिकरणम् ]

## समाने[1] पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ १३ ॥ पू०

एवमुपोद्घातं प्रसाध्येदानीमतिदेशविचारमारभते। तत्र स्थूलसूक्ष्मक्रमेण बुद्धयोऽवतरन्तीति प्रथमं तावत् सुगमत्वात् प्रत्यक्षवचननिमित्तोऽतिदेशः सप्रपञ्चः पादद्वयेन कथ्यते। ततो नामातिदेशः सप्रपञ्चस्तृतीये पादे। स हि वत्यर्थकल्पनया क्लेशगम्यः। ततोऽपि तु क्लेशगम्य आनुमानिकवचननिमित्तोऽतिदेशः पश्चात् प्रस्तोष्यते। तत्र हि सर्वातिकं वचनमेव कल्पयितव्यमिति। तच्च विध्यन्ताधिकरणे सामान्येन साधयित्वा तत्प्रसङ्गान्नामधेयानुमानिकवचनयोर्बलाबलचिन्तयाध्यायसमाप्तिः। ततोऽष्टमे विध्यन्ताधिकरणसिद्धानुमानिकवचनातिदेशविशेषप्रपञ्च इति। तत्र "समानमितरच्छ्येनेन" इत्यत्रेतरशब्दस्य सन्निहितवचनत्वात्, एकाहानां च ज्योतिष्टोमविकारत्वात् तद्धर्माणामिषौ चोदकेन सन्निहितत्वात्, श्येनवैशेषिकगुणानां तु केनचिदपि प्रमाणेनासन्निहितत्वाद् ज्यौतिष्टोमिका एवेतरशब्देन निर्दिश्यन्ते। तेषां च श्येनेऽपि चोदकतः प्राप्तेः समानमितरच्छ्येनेनेत्यनुवादमात्रमिषोः स्तुत्यर्थम्। श्येनेन हीदं समानमुभयोरपि ज्योतिष्टोमविकारत्वात्। अतश्च तद्वदेवादरेणाभिचरता कर्तव्यमिति स्तुतिः ॥ १३ ॥

सिद्धान्तमाह—

1. सपूर्व—ग.।

## अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १६ ॥

अत्र [1]भाष्यकारेण–इतरशब्दस्य पूर्वोक्तसादृश्यं सन्निहितत्वं च प्रवृत्तिनिमित्तम्। इह तदुभयासम्भवादवश्यमन्यतरपरिहारेण गौण्या वृत्त्या[2] सदृश[1]मात्रं सन्निहितमात्रं वाभिधेयम्। तथा हि—ज्यौतिष्टोमिकानां चोदकेन सन्निधानमस्ति, न तु पूर्वोक्तसादृश्यम्, पूर्वमधिकानामुक्तत्वात्। श्येनवैशेषिकाणां तु सादृश्यमस्ति, न तु सन्निधानम्। ततश्चावश्यंभाविनि गौणत्वेऽनुवादमात्रमनर्थकमित्यर्थवत्त्वाय श्येनवैशेषिकाणामधिकानां विधिरिति सिद्धान्तितम्। तदाक्षिपति–**इतरशब्दो** नाधिक्ये **लोके प्रसिद्धः**। पूर्वोक्तसादृश्यमस्य न वाच्यमित्यर्थः। किं **तर्हि? उपयुक्ताद्यदन्यत् सन्निहितं तत्र प्रसिद्धः**, इतरः कम्बलो दीयतामित्यादिषु। तस्मात्तन्मात्रमस्य वाच्यमिति। अथाधिकवचनतापि कस्मान्न भवत्यत आह— **न चैकस्य शब्दस्य**[2] **द्वावर्थौ** कल्पयितुं **युक्तौ**। यस्मादेवमुपयुक्तावशिष्टसन्निहितवाचीतरशब्दः, नाधिकवाची, तस्मान्मुख्यार्थलाभात् **ज्योतिष्टोमाच्चोदकेन यत्प्राप्तं तदितरशब्देन परामृश्य विकारो विधीयत** इति ग्रन्थसम्बन्धः। कथं पुनर्मुख्यार्थलाभो यावतैवमुपयुक्तावशिष्टवाचिता हीयेत? अत आह—**इषौ वषट्कारनिधनेषु विष्टुतिसप्तहं भवतीत्युक्त्वाह समानमितरच्छ्येनेनेति**। अयमर्थः—पूर्ववाक्ये हि "वषट्कारनिधनं भवति", "इषुं विष्टुतिं करोति", "सप्तहं भवति" इत्यत्र [3]चोदकप्राप्तस्यैव स्तोत्रसाम्नो वषट्कारनिधनत्वमुक्तम्, चोदकप्राप्ताया एव विष्टुतेरिष्वाकारत्वमुक्तम्। सप्तहाख्यं च साम स्तोत्रस्य विहितं चोदकप्राप्तस्य। अतस्तदतिरिक्तं

1. भाष्यकारेणेत्यस्य सिद्धान्तितम् इत्युत्तरेणान्वयः।

2. गौण्या वृत्त्येति। लक्षणावृत्त्येत्यर्थः। सदृशमात्रमभिधेयमिति कथनाद् गौणी वृत्तिरत्र विवक्षितेति न भ्रमितव्यम्।

१. सादृश्य–क.।

२. शब्दस्य–नास्ति क.।

३. चोदकेत्यारभ्य उक्तमित्यन्तं नास्ति ग.।

**ज्योतिष्टोमाच्चोदकेन यत्प्राप्तं तदितरशब्देन** मुख्येनैव **परामृश्य** श्येन-सम्बन्धि**विकारमात्रं** तत्रातिदिश्यते। तदयमर्थः—यत्पूर्ववाक्योपयुक्तान्निधनाद्विष्टुते-श्चेतरद् **ज्योतिष्टोमात् प्राप्तं तच्छ्येनेन समानं कर्तव्यम्**, यथा श्येने तत्कृतं तथा कर्तव्यमित्यर्थः। तदनेनैतदपि सूचितम्—यद्यपि पूर्वसादृश्यमप्यस्य वाच्यम्, तथापि पूर्ववाक्ये ज्यौतिष्टोमिक्या विष्टुतेर्विकारविध्यर्थमुक्तत्वात् तत्स-दृशानां ज्यौतिष्टोमिकानामेवेतरशब्देन निर्देशो युक्त इति। [1]तस्माद् **लोहितो-ष्णीषादि विकारमात्रमतिदिश्यते**। कस्तर्हि सूत्रार्थः? अत आह—**इतर-दधिकार्थे** विकार इत्यर्थः।

सूत्रे चेतरदिति समानमितरच्छ्येनेनेति वचनं निर्दिश्यते। 'अपि वा यदि' इति 'यद्यपि वा' इति विपर्यस्य पक्षव्यावृत्तौ व्याख्येयम्। यदीति वाऽसन्दिग्धे सन्दिग्धवचनम्, शास्त्राणि चेत् प्रमाणं स्युरितिवत्। तदयमर्थः—यद्यपूर्वार्थ-विधिलाभाय समानमितरदिति वचनं ज्यौतिष्टोमिकाचोदकप्राप्ताद् विधेरधिकविकार-विधानार्थम्, तदा तद्वाचकं समानपदं स्यात्। ज्यौतिष्टोमिकानामतिदेशप्राप्तानां श्येनवद्विकारः कर्तव्य इति। अथवाधिजने [ अधिकार्थे, अधिकप्रयोजने ] अर्थशब्दः प्रयोजनवाची। इतरदिति च इदानीं पदनिर्देशः। तेनायमर्थः—इतरदिति पदेन विका-राधिक्यविधानार्थे ज्यौतिष्टोमिका उद्दिश्यन्ते। तस्य च विकारस्य समानपदं वाचकं विधायकमित्यर्थः। एवं च चोदनासामान्याद् ज्योतिष्टोमविकार एवेतुर्न श्येनविकार इति। विकारमात्रं तु श्येनादतिदिश्यते वचनेन। नहि नः कार्यप्राप्तिरतिदेशः, किन्त्वन्यदीयस्यान्यत्र देशनमित्युक्तमिति। कः पुनर्भाष्यकारपक्षादस्मिन् पक्षेऽ-नुष्ठानविशेषः? तं दर्शयति—**अधिकार्थे**ऽधिकवाचिनीत**रशब्दे वर्ण्यमाने** येऽप्य**प्राकृतकार्याः** पदार्थाः श्येने विहिताः **कण्टकवितोदनादयः, तेषामप्यतिदेशः स्याद्भाष्यकारव्याख्याने**। कथमित्याह—**यच्छ्येनेन समानं तदितरदित्याश्रीयमाणे**। अधिकवचनत्वे हीतरपदस्य नोद्देश्यसमर्पकता

1. तस्मादिति। अनेन पूनामुद्रितमूलपाठे 'तथा' इत्यस्य स्थाने 'तस्मात्' इति पाठः संभाव्यते।

सम्भवति, अधिकानामप्राप्तत्वात् ; किन्तु विधेयसमर्पकम्। तदेषा वचनव्यक्तिः— श्येनेन यत्समानमित्युद्देशः। इतरदिति विधिः। यादृगत्र क्रियमाणं श्येनेन सदृशं भवति, तादृगधिकमत्र कर्तव्यम्। श्येने यद्विहितमधिकं तदत्रापि कर्तव्यमित्यर्थः। तस्मात् कण्टकवितोदनादयोऽपि प्राप्नुवन्त्येव। अस्मत्पक्षे पुनरितरशब्दस्य सन्निहितवाचित्वात् तेन ज्यौतिष्टोमिकानुद्दिश्य श्येनेन समानमित्यनेन विकारमात्रं विधीयत इति न कण्टकवितोदनादिप्राप्तिरिति विशेषः[१]। एवं हि तदा वाक्यार्थः— ज्योतिष्टोमाच्चोदकेन यद्धर्मजातं प्राप्तम् विष्टुतिरेव[२] तत्र कर्तव्या। इतरत्तु श्येनेन समानं कर्तव्यमिति। एवं श्रुत्यर्थेनैव वचनार्थवत्त्वसम्भवान्न गौणत्वं युक्तम्, नापि पूर्वपक्षोक्तमनुवादमात्रमनर्थकमङ्गीकर्तुं युक्तम्। यत्तु स्तुत्यर्थमिति, तत्राह— **स्तुतिरपि नोपपद्यते**। कथम्? **प्रदेशान्तरे** वाक्यान्तरे **इषुर्विहितः। प्रदेशान्तरे च**[३] **समानमितरदिति**[४] **वचनम्**। विध्येकवाक्यतया चार्थवादत्वं न वाक्यभेदे। **तस्मादानर्थक्याद्वाक्यस्य पूर्वपक्षवचनव्यक्तिपरित्यागः** ॥१६॥

[ ३—वारुणप्रघासिकपञ्चसञ्चरेषु वैश्वदेविकसार्थवादविधिकाण्डातिदेशाधिकरणम् ]

## पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात् ॥ १७ ॥ पू०

ननु कार्यमतिदिश्यते न शास्त्रमिति दशमाद्ये[५] स्थास्यति। तस्मादर्थवादातिदेशेन पूर्वपक्षकरणं कृत्स्नकाण्डातिदेशेन च सिद्धान्तकरणमुभयमप्यनुपपन्नम्, नैष दोषः, ब्राह्मणस्यैवेह शब्देनोपात्तत्वात्। न चैतावतोह्बाधयोरनुपपत्तिः, प्रकारप्रधानतयैवातिदेशात्। [६]एष त्व[७]तिदेशार्थः—यद् ब्राह्मणं येन प्रकारेणेतरेषां हविषां वाक्यशेषीभूतम्, तदेषामपि तथैव वाक्यशेषीभवतीति। पूर्वत्र च[८] मन्त्रादिविधीनामनेन

१. शेषः—क.।
२. रेवं—क. ख.।
३. तत्—क.।
४. इतरत्—नास्ति क.।
५. दशमे—क.।
६ एवं—क.।
७. ह्यति—क. ख.।
८. च—नास्ति क.।

मन्त्रादिनाऽपूर्वीयं देवतादि संस्कुर्यादित्येवं वाक्यशेषतैत्यत्रापि तथैव प्राप्ते-रूहादिसिद्धिः । तत्र शब्दभावनाकाङ्क्षितप्राशस्त्यज्ञानाख्येतिकर्तव्यताद्वारेणार्थ-वादानामति[1]देशः, विधीनां त्वर्थभावनाकाङ्क्षावशेनातिदेश इति । यद्यर्थवा[2]दानाम-प्यतिदेशः, तर्हि विश्वजिदादौ ज्यौतिष्टोमिकविध्यन्तवत्तदीयार्थवादस्यापि चोदना-लिङ्गवशेनातिदेशादर्थवादोपात्तमेव रात्रिसत्रवत् फलं स्यादिति स स्वर्गः स्यादिति न्यायः प्रत्युद्भ्रियेत । किं भवानौदुम्बराधिकरणे[3] न सम्यगवहितः, तत्र ह्युक्तम्—समाप्ते च विध्युद्देशेऽर्थवादाः प्रवर्तन्ते । तत्प्रक्रमावस्थायां तु भावनांशाः सन्निपतन्ति, विशेषेण फलं प्राथम्यप्राधान्याभ्यामिति । विधिर्हि त्र्यंशपरिपूर्णा-मनुष्ठानयोग्यां भावनां प्राप्य पश्चात् पुरुषं प्रवर्तयितुं प्रवर्तमानोऽपेक्षावशात् प्राशस्त्यज्ञानमुखेनार्थवादान् यत्र[4] क्वचन स्थितानतिदेशेन सन्निधापयति । विधेयभावना तु ततः प्रागेव स्वानंशान् गृह्णाति । तस्यां वेलायामुपदेशेनातिदेशेन वार्थवादस्यासन्निधानात्तदुपात्तसन्निहितफलाभावात् स्वर्गमेव गृह्णातीति न स्वर्ग-न्यायबाधः । तेन सत्यप्यर्थवादातिदेशे न दोषः । किञ्च, यत्रैव[5] प्रत्यक्षं वचनं तत्रै-वार्थवादातिदेशः, अन्यत्र तु विधित एवान्यनिरपेक्षात् प्राशस्त्यज्ञानोत्थापन-सम्भवान्नातिदेशः । तस्माद्युक्तोऽधिकरणारम्भः ।

तत्र "यद् ब्राह्मणानीतराणि" इति षष्ठ्यर्थवृत्तेर्बहुव्रीहेर्हविःसम्बन्धिब्राह्मणवचन-त्वात्, अर्थवादस्य च विधायकवाक्यैकदेशीभूतस्य साक्षाद्धविःसम्बन्धित्वात्, अङ्गविधीना तु हविःसम्बन्ध्यङ्गविधायित्वेन साक्षाद्धविःसम्बन्धाभावात्, सति च साक्षात्तत्सम्भवे परम्परानाश्रयणादर्थवादमात्रातिदेश इति पूर्वः पक्षः । सिद्धान्तस्तु ब्राह्मणशब्दस्याविशेषेण प्रवर्तमानस्य [6]सङ्कोचा-

---

१. माप्यति—क. ।

२. पदार्थ—क. ।

३. न नास्ति—ख. ।

४. नान्यत्र—क. ।

५. यत्र—क. ।

६. संयोगात्—ख. ।

योगात्, अङ्गविधीनामपि चोपकारकत्वेन हविस्सम्बन्धित्वात् सर्वातिदेशः। स्वल्पं चेदं कार्यम्[1] प्राशस्त्यज्ञानं विध्युद्देशादेव कथञ्चिल्लभ्यत इति तन्मात्रपरत्वे[2] मन्दफलं वचनं स्यात्। कृत्स्नातिदेशे तु[3] भूयःकार्यमनन्यलभ्यं चेति तत्परं वचनमर्थवत्तरं भवति। तस्मात् कृत्स्नातिदेश इति ॥१७॥

[ ४—साकमेधीयैन्द्राग्नैककपालयोः सार्थवादविधिकाण्डातिदेशाधिकरणम् ]

## एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

इति। पूर्वन्यायस्यैव प्रातिसूत्रमुत्तरचिन्तार्थम्।

[ ५—साकमेधीयैककपाले वारुणप्रघासिकैककपालधर्मातिदेशाधिकरणम् ]

## एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमपर्यावृत्तिदर्शनादवभृथे च सकृद् द्व्यवदानस्य वचनाद् ॥ २३ ॥

सत्यप्यैन्द्राग्नसमुच्चारणे प्रचुरधर्मकाद्वैश्वदेविकादेवातिदेशो युक्तः, न वारुणप्रघासिकात्, तस्याल्पधर्मकत्वात्। धर्मार्थो ह्यतिदेशः। तेन यत्र भूयांसो धर्मा लभ्यन्ते, तदपेक्षैव युक्ता। नानापर्वणोरपि समुच्चारणमविरुद्धमिति वैश्वदेविकादेवातिदेशं मन्यते। न्यायादेव तु "स्वरसामैककपालामिक्षं च" इत्यत्र वक्ष्यमाणाद्वैश्वदेविकधर्मप्राप्तिसिद्धेस्तत्परत्वे वचनानर्थक्यप्रसङ्गादैन्द्राग्नसमुच्चारणाच्च तत्सहचरितवारुणप्रघासिकैककपालप्रतीतेस्तत्रापि[4] च शमीमयीत्वादिधर्मसद्भावात् तत एवातिदेश इति सिद्धान्तः।

धर्मभूयस्त्वलाभाय वैश्वदेविकसंग्रहः।
वचोवैयर्थ्यदोषात्तु धर्मान्तरपरिग्रहः ॥२३॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
सप्तमाध्यायस्य प्रथमः पादः ॥



१. कार्यम्—नास्ति क.।
२. तस्मात्तन्मात्र—क.।
३. न—क.।
४. रत्रापि—क.।

[ १—रथन्तरादिशब्दानां गीतिविशेषवाचित्वाधिकरणम् ]

## साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ।। १ ।।

अत्र भाष्यकारेण पौनरुक्त्यपरिहारार्थमुक्तम्—स्थूणानिखननवद् दार्ढ्यार्थमुच्यत इति। तस्यायमर्थः—द्वितीये हि मन्त्रलक्षणप्रसङ्गेन [1]तत्प्रभेदानाम् "अहे बुध्निय मन्त्रं मे गोपाय। यमृपयस्त्रैविदा विदुः। ऋचः सामानि यजूंषि।" इति [2]दर्शितत्रैविध्यसिद्ध्यर्थमृगादीनां लक्षणमात्रमुक्तम्। तत्र यदि प्रगीतो मन्त्रः साम, यदि च गीतिक्रिया[3]मात्रमुभयथापि त्रैविध्यमुपपन्नमिति[4] न तत्र गीतिवचनत्वं साधितं विवेकप्रयोजनाभावात्। लक्षणं तु कथयताऽत्रत्यन्यायावष्टम्भेनैव गीतिवचनत्वमाश्रित्य "गीतिषु [5]सामाख्या" इत्येव कथितम्। एवं कथनादेव यद्[6] गीतिवचनत्वमर्थादवगतम्, तदेवेदानीं न्यायेनाक्षेपपूर्वकं दृढीक्रियते, वाचनिकातिदेशसिद्ध्यर्थतयेदानीं प्रयोजनसद्भावात्। तेन "कवतीषु रथन्तरं गायति" इत्यादिवचनैः किमतिदिश्यत इत्येतत्सिद्ध्यर्थं सामविशेषवचनै रथन्तरादिशब्दैः किं गीतिविशेषो[7]ऽभिधीयते, किं [8]वा ऋग्विशेष इति चिन्त्यते। तत्र यदि ऋग्विशेषवचनोऽयं रथन्तरशब्दः, ततोऽभिवत्याः कवतीष्वतिदेशानुपपत्तेः रथन्तरशब्देनाभिवतीवाचिना तद्धर्मान् लक्षयित्वा तेषां कवतीष्वतिदेशः स्यात्। पक्षान्तराणि च भाष्ये दर्शितानि। अथ तु गीतिवचनः, ततः सैव कवतीष्वतिदिश्यत इति। तत्र "रथन्तर-

१. तद्भेदा—ग.।

२. त्रैविध्यर्थं लक्षणमात्र—क.।

३. क्रिया—नास्ति क.।

४. इति—नास्ति क.।

५. सामाख्येति—क.।

६. यत्—नास्ति क.।

७. विशेषो वि—क.।

८. च—ख.।

मधीष्व" इति प्रेषितस्य प्रगीतमन्त्राध्ययने प्रवृत्तिर्दृश्यते, न गीतिमात्रे। तस्मादभिवर्तीनामधेयमिदमिति पूर्वः पक्षः। सिद्धान्तस्तु—

गीतौ सत्यां प्रयुक्तत्वादसत्यां चाप्रयोगतः।
आकृतिन्यायसद्भावाद्गीतेरेवाभिधेयता ॥ १ ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
सप्तमाध्यायस्य द्वितीयः पादः ॥

[ १—अग्निहोत्रादिनाम्नां धर्मप्रदेशकत्वाधिकरणम् ]

**उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥ सि०**

इदानीं नामातिदेशः प्रस्तूयते। तत्र सामानाधिकरण्यनिमित्तत्वान्नामत्वस्य, तस्य चोभयत्रापि भावात्, उभयत्रापि मुख्यनामधेयत्वसम्भवान्न गौणत्वकल्पनयाऽतिदेशकत्वं सम्भवतीति पूर्वः पक्षः। सिद्धान्तं सूत्रव्याख्यया दर्शयति—**नैयमिकस्याग्निहोत्रस्याग्निहोत्रशब्दो नामधेयमित्युक्तम्** "तत्प्रख्यं चान्यशास्त्रम्" इत्यत्र। स[1]**कर्मान्तरे पुनरुच्चार्यमाणो धर्मातिदेशको भवति। कथम्? असति** वतिप्रत्यये वत्यर्थः कथं लभ्यत इत्यर्थः। उत्तरम्—**अग्निहोत्रस्य याऽवगतेतिकर्तव्यता तां शक्नोति लक्षयितुं विनापि** [2]**वतिना,** अभिधेयसम्बन्धात्। किमिति पुनर्लक्षणेति। आह—[3]**वाच्यसंयोगात्।** जुहोतिरयं धर्मान्तरवचन इत्युक्तम्, अतः परशब्दसामानाधिकरण्यादग्निर्माणवक इत्यादिवद् गौणत्वमिति। अथास्मिन्नेव कर्मान्तरेऽग्न्याख्यदेवताविधिरयं भवतु[4]। नह्यत्र नैयमिकवत् तत्प्रख्यशास्त्रान्तरसद्भाव इत्युच्यते, अत आह—**न चायं गुणविधिः, तद्धितचतुर्थ्योरभावात्।**

१. स—नास्ति क. ख.।
२. वतिनार्थसम्बन्धात्—क.।
३. वाक्य—ख. ग.।
४. भवेत्—क.।

दर्शितं[1] ह्येतत्—"न चतुर्थीसमासस्य लक्षणं चात्र विद्यते" इति। तेन देवताविधा-वसामर्थ्यान्न गुणविधिः। किञ्च, **उच्चार्यमाण एव विज्ञातं नामिन[2]मवबोध-यति**। तेनापि न गुणविधित्वमिति। पूर्वपक्षं स्मारयति—**उभयत्र नामधेय-मिति चेत्**। परिहरति—**तन्न**। कुतः? **नामधेयं हि विशिष्टे** कर्मणि **भवति,** कर्मविशेषप्रतिपत्त्यर्था संज्ञा सा। विशिष्टे कर्मान्तरव्यावृत्ताकारेण निरूपिते कर्मणि भवति, न जुहोतिमात्रेण निरूपिते। ततः किमित्याह—**न चेह विशिष्टतास्ति, द्रव्यदेवताभावात्**। न तावदुपदेशेन द्रव्यदेवते लभ्येते। न चातिदेशेनाप्युद्भि-दादि[3]वद्रूपलाभः, नामातिदेशस्य त्वयाऽनिष्टत्वात्। चोदनालिङ्गनिमित्तस्त्वतिदेशो जुहोतिचोदितेषु न सम्भवतीत्यष्टमान्त्ये वक्ष्यते। ततो रूपाभावान्न विशेषावगतिः। तदभा[4]वादेव नामधेयानर्थक्यम्। विशेषप्रतिपत्त्यर्थं हि तदित्युक्तम्। एतेन [5]चैतदपि सूचितं भवति[6]—असति नामातिदेशे रूपाभावात् कर्मान्तरविधिरप्युच्छि-द्येत। न च तद्युक्तम्, कर्मान्तरविधित्वस्य स्थितत्वादिति। नामधेयं हि विशिष्टे भवतीत्यादेरपरा[7] व्याख्या। प्रवृत्तिसद्भावे सति[8] हि नामधेयत्वम्। न च तदिहास्ति, देवतासम्बन्धस्यानवगमात्। तस्मान्नोभयत्र नामधेयत्वम्[9]। अपि **चोभयत्र नामधेयत्वे** शब्दस्यानेका**ऽदृष्टशक्तिकल्पना** स्यात्। तस्मादवश्यंभाविन्यन्य-तरत्र गौणत्वे यत्र गुणाः सन्ति तत्र मुख्यत्वम्। तद्गुणयोगाद् इतरत्र गौणता। नहि निर्गुणे मुख्यस्यान्यत्र[10] गौणता घटते। वाच्यगुणयोगेन हि वृत्तेर्गौणता।

१. उक्तम्—क.।
२. मर्थं बोध—क.।
३. दादिष्विव रूप—क. ख. ग.।
४. भावे च—ख. ग.।
५. च—नास्ति ख. ग.।
६. भवति—नास्ति क.।
७. रपरा वा—क.।
८. सति—नास्ति क।
९. धेयं—ख. ग।
१०. स्यात्र—ख।

निर्गुणे तु वाच्ये कथं गौणता। तस्मान्नैयमिके मुख्यः[1], अत्र तु गौणः। तस्मादग्निहोत्रवज्जुहोतीत्ययमेव वाक्यार्थः ॥१॥

[ २—प्रायणीयनाम्नो धर्मानतिदेशकत्वाधिकरणम् ]

## अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥ सि०

पूर्वाधिकरणापवाद आरभ्यते। तेनैव न्यायेन पूर्वः पक्षः। सिद्धान्तमाह— **प्रयन्ति** प्रारभन्तेऽ**नेनेति प्रायणीयमित्यनेन**[2] **योगेन द्वादशाह इयं प्रायणीयसंज्ञा** प्रथमेऽहनि **प्रवृत्ता। गवामयने** च प्रथमेऽहन्ययं **योगो विद्यत एव।** तस्मात् क्लृप्तयोगवशेन मुख्यत्वोपपत्ते[3] गौण्या वृत्त्या **नास्ति धर्मातिदेशः।** यद्यग्निहोत्रशब्द[4]स्यापि कौण्डपायिनीये होमे प्रवृत्तिनिमित्तमग्निदेवत्यत्वमतिदेशमन्तरेणैव सिद्धं स्यात् ततो नैव धर्मातिदेशः स्यात् यथा आधानाङ्गभूते तूष्णींहोमे। तत्तु नास्तीत्युक्तम्। इह तु मुख्यत्वोपपत्तेर्न गौणत्वं युक्तम्। असत्यपि च नामातिदेशे चोदनालिङ्गवशादेवातिदेशसिद्धेर्नारूपत्वम्। तस्मान्नातिदेश इति। **यत्र तु पञ्चमः षष्ठो वा प्रायणीयशब्देनोक्तः, तस्य योगाभावादनुदाहरणत्वम्।** तत्र पूर्वाधिकरणन्यायेन भवत्येवातिदेशः। **तस्मात्तादृशेन**[5] **न पूर्वाधिकरणापवादः।** ५।

[ ३—विश्वजिति षाडहिकपट्पृष्ठातिदेशाधिकरणम् ]

## विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाद् ज्योतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः ॥ ६ ॥ पू०

किमनुवादमात्रं सर्वपृष्ठशब्दः, उत विकल्पेन प्राप्तयोर्बृहद्रथन्तरयोः सामस्त्यविधानार्थः, आहोस्वित् षाडहिकानां सर्वेषां पृष्ठानामतिदेशक इति चिन्त्यते। ननु चास्य बहुव्रीहित्वाद्द्विनैव लक्षणया श्रुत्यैव धर्मातिदेशकत्वाद्वचनातिदेशाधिकारेऽयं

१. अयमत्र—क., मन्यत्र तु—ग.।

२. नेनेव—क.।

३. पपत्तौ क.।

४. शब्द—नास्ति क.।

५. तादृशो—ग.।

विचारः कर्तव्यः। कथं नामातिदेशेन[1] सङ्गच्छते। सत्यमेतत्, गुणविधिरेवायम्। किन्तु, तथाप्येकपदत्वात् क्रतुसामानाधिकरण्याच्च नामधेयाधिकारे निक्षिप्यते। तत्र ज्योतिष्टोमे "सप्तदशानि पृष्ठानि" इत्यत्र वाक्ये[2] माहेन्द्रादिषु चतुर्षु स्तोत्रेषु पृष्ठशब्दस्य बहुवचनान्तस्य प्रयुक्तत्वात्, तेषां च चोदकतः प्राप्तेर्नाप्राप्तप्राप्त्यर्थः[3] सर्वपृष्ठशब्दः [4]प्रायणीयशब्दवन्नातिदेशकः, किन्त्वनुवादमात्रमिति। [5]यद्वा विकल्पेन प्राप्तयोर्बृहद्रथन्तरयोः समुच्चयो विधीयते। षडहाऽपेक्षणे त्वप्राप्तानि पृष्ठानि, तेषां च सर्वत्वं समुच्चयं[6] विदधद्वाक्यं भिद्येत। तस्मान्नातिदेशक इति ॥६॥

## षडहाद्वा तत्र हि चोदनाः ॥ ७ ॥ सि०

प्रथमपक्षं दूषयति—**ज्योतिष्टोमे "रथन्तरं पृष्ठं भवति" इत्येकस्य पृष्ठस्य विहितत्वाद्** बहुत्वापेक्षिणः **सर्वशब्दस्याभिधेयाभावादानर्थक्य**मर्थशून्यत्वं प्रसज्यते। **षडहे** तु **गायत्रं प्रकृत्य "सर्वाणि पृष्ठानि कार्याणि"** इति **विहितम्। अतस्तत्र सर्वपृष्ठशब्द**स्यार्थवत्त्वम्। तस्मात् षाडहिकपृष्ठानामतिदेशः। यत्तु माहेन्द्रादिषु चतुर्षु पृष्ठशब्दो ज्योतिष्टोमे प्रयुक्तः, तेन तदपेक्षयाऽनुवाद इत्युक्तम्। तत्राह—**ज्योतिष्टोमे तु छत्रिन्यायेन पृष्ठशब्दस्य** माहेन्द्रादिषु **प्रयोगाल्लक्षणा**। किमिति लक्षणा, यावता वचनात् सर्वेषामेव पृष्ठता युक्ता, अत आह—**सप्तदशानि पृष्ठानीति च** पृष्ठानुवादेन **सप्तदशता विधीयते, न पृष्ठता**। चशब्दो हेतौ। संज्ञासंज्ञिसम्बन्धस्याविधेयत्वाद् अनेकार्थविध्यनुपपत्तेश्च न पृष्ठता विधीयते। सामानाधिकरण्यात्तु[7]त्पत्तौ हि नामधेयं विज्ञायते, न गुणविधौ।

---

१. अतिदेशे—ख. ग.।

२. वाक्ये—नास्ति क.।

३. प्राप्तार्थः—ख. ग.।

४. प्रायणीयशब्दवन्नातिदेशकः—नास्ति क.।

५. 'यद्वा' इत्यारभ्य 'विदधद्वा' इत्यन्तं नास्ति ग.।

६. समुच्चयं—नास्ति क.।

७. तु—नास्ति क.।

न चोत्पत्तौ माहेन्द्रादिष्वस्ति पृष्ठशब्दः । एकस्यैव स्तोत्रस्य तत्र पृष्ठत्वं विज्ञातम् । अतोऽत्र सप्तदशावृत्तिविधि[1]परे वाक्ये बहुवचनान्तेन पृष्ठशब्देन वाक्यशेष-सङ्कीर्तितानि माहेन्द्रादीनीति [ नीति पृष्ठानीति ] लक्षणयानूदितानीति गम्यते । न चेह लक्षणाकारणमस्ति ।

द्वितीयं पक्षं दूषयति—**न च विकल्पप्राप्तयोः समुच्चयेनार्थवत्ता ।** कुतः ? **व्यर्थत्वादेव सर्व[2]शब्दस्य ।** बह्वपेक्षो ह्ययं न द्वयोरुपपद्यत इति । तस्मात् पाडहिकातिदेशः । यत्तु वाक्यभेद इति, तत्राह—**सर्वपृष्ठ इति समासोऽयम् । समासेन च विदधता नानेकार्थ[3]विधानं दुष्करम् ।** अत्रैव भाष्योक्तं परिहारान्तरं दर्शयति—**अथवा पृष्ठगता सर्वता[4] साक्षाद् विधीयते । न चाविधाय पृष्ठानि तत्सर्वता विधातुं शक्यते । तस्मादर्थापत्त्या पृष्ठानां विधानम् ।** न[5] च श्रुत्यर्थाभ्यामनेकार्थविधाने[6] वाक्यभेदो भवति । **तस्मात् पाडहिकानि सर्वाणि पृष्ठानि विधीयन्ते ।** पृष्ठशब्दश्चात्र पृष्ठ[7]साधन-भूतरथन्तरादिसामाभिधायी, न स्तोत्राभिधायीति वेदितव्यम् । 'लिङ्गदर्शनाच्च' इति सूत्रार्थमाह—**एवञ्च क्रमविधिपरं वाक्यं** "पवमाने रथन्तरम्, आर्भवे बृहत्" इत्याद्य**पपत्स्यते । तस्मिन् विश्वजिति ।** पृष्ठान्येवात्र पाडहिकानि । विध्यन्तस्तु ज्यौतिष्टोमिक एव, एकाहत्वसामान्यात्, गणधर्मानपेक्षत्वाच्च[8] । नन्वसति पाडहिके विध्यन्ते कथं तदीयपृष्ठलाभः ? नह्युपकारानपेक्षः पदार्थातिदेशः सम्भवति । वचनादिति ब्रूमः । नहि वचनस्यातिभारोऽस्ति । वचनं च पृष्ठानि विदधाति, नोपकारं तज्जनकं वा विध्यन्तम् । यदि हि षडहवदिति श्रूयेत, ततस्तदीयस्य प्रकारस्य पदार्थानां च

१. विधि–नास्ति क. ।
२. 'पृष्ठ–क. ।
३. कगुण–ख. ग. ।
४. सर्वता–नास्ति ख. ।
५. एवं–क. ।
६. नेन–क. ।
७. स्तोत्र–क. ।
८. णाञ्च–ख. ग. ।

विधानं लभ्यते । न त्वेवं श्रूयते । सर्वपृष्ठो भवतीत्येतावच्छ्रूयते । तेन पृष्ठानां रथन्तरादीनां केवलं विधानं "कण्वरथन्तरं पृष्ठं भवति" इतिवत् । तेषां तु पृष्ठत्वं षडहे विज्ञातमिति । अन्यदीयानामन्यत्र विधानादतिदेशत्वम्, उत्तरषट्कान्तर्भावश्च । नह्यस्माकमेकदेशिवत् कार्यतः प्राप्तिरुत्तरषट्कार्थः, किन्त्वतिदेशः । स चात्रापि विनाऽप्युपकारप्राप्त्याऽस्तीति नासङ्गतिः । ये त्वस्याधिकरणस्य लक्षणसङ्गतिसिद्ध्यर्थं वेदवाक्यमेवात्यन्ताप्रतिपन्नषाडहिकविध्यन्तप्राप्तिपरं वर्णयन्ति, नमस्तेभ्यः स्वाभिमतलक्षणसङ्गतिवशेन वेदवाक्यार्थान्यथाभावं कुर्वाणेभ्य इत्युपरम्यते ॥११॥

[ ४—अवभृथनाम्नः सौमिकावभृथधर्मातिदेशकत्वाधिकरणम् ]

## तथावभृथः सोमात् ॥ १२ ॥ सि०

कर्मान्तरविधावप्यवभृथशब्दस्य गौणतावश्यंभाविनी । तद्वरं चोदकसन्निधापित[1]मपां व्युत्सेकमेव गुणवृत्त्याऽवभृथशब्देनानूद्य तत्र तुषादिविधानम् । अस्ति च दर्शपूर्णमासयोर[2]वभृथशब्दप्रयोगः "एव वै दर्शपूर्णमासयोरवभृथः" इति । तस्मात् प्रकृतहानाप्रकृतक्रियाकल्पनादौर्बल्याद्, विशिष्टविधितश्च गुणविधेर्लघीय[3]स्त्वादपां व्युत्सेक एव गुणविधिरिति नावभृथशब्दोऽतिदेशक इति पूर्वः पक्षः ।

नात्रापां व्युत्सेकप्रतिपत्तिहेतुरस्ति, अवभृथशब्दस्यातन्नामत्वात् । "एष वै दर्शपूर्णमासयोरवभृथः" इत्यत्र त्वपां व्युत्सेकस्तुत्यर्थं गुणवृत्त्याऽवभृथशब्दप्रयोगः । न चात्रापि गुणवृत्त्यैव वर्ततामिति वाच्यम्, प्रयोगतात्पर्यावगममन्तरेण गुणवृत्त्यभ्युपगमायोगात् । न चेहापां व्युत्सेकेऽयमवभृथशब्द इति प्रमाणमस्ति, तच्छब्दसामानाधिकरण्याद्य[4]भावात् । तस्मात् [5]तत्प्रत्यया[6]भावात् कर्मान्तरं तुषनिष्कास-

---

1. सन्निहित—क. ।
2. स्तत्राप्य—क. ।
3. बलीयस्त्वा—ख. ग. ।
4. आदि—नास्ति क. ।
5. प्रकृत—क. ।
6. याद्यभा—क. ।

द्रव्यकं विधीयते। तत्समानाधिकरणस्त्ववभृथशब्दः प्रसिद्धावभृथसादृश्येन प्रवर्तमानस्तद्धर्मातिदेशक इति सिद्धान्तः ॥ १२ ॥

[ ५—वरुणप्रघासावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ]

## द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥१६॥ सि०

[1]प्रासङ्गिकमिदमधिकरणम् । कर्मान्तरेऽवभृथशब्दप्रापितविध्यन्तविशिष्टे विधीयमानेऽत्यन्तं[2] गौरवप्रसङ्गान्न[3] तुषनिष्कासं विधातुं[4] शक्यम्। ततो नामातिदेशप्रापितपुरोडाशद्रव्यकमेवेदं कर्म। तुषनिष्कासशब्दस्तु यथाकथञ्चिन्नेयः। एवञ्च नामातिदेशप्राप्तः पुरोडाशो न बाधितो भवि[5]ष्यतीत्येतावतीमाशङ्कां निराकर्तुमिदं सूत्रम्—द्रव्यादेशे तद् द्रव्यम्। कुतः? श्रुतिसंयोगात्। नहि गुणवृत्त्या सामान्येन चावभृथशब्दप्रापितं पुरोडाशम[6]नुगृह्य श्रुत्या विशेषरूपेण च[7] विहितं तुषनिष्कासं त्यक्तुं शक्यते। विशिष्टविधानाच्च न वाक्यभेदः। तस्मात्तुषनिष्कासद्रव्यकमिदं कर्मेति ॥ १६ ॥

[ ६—वैष्णवशब्दस्य सौमिकातिथ्येष्टिधर्मानतिदेशकत्वाधिकरणम् ]

## गुणविधिस्तु न गृह्णीयात् समत्वात् ॥ १७ ॥ सि०

यौगिकं नामधेयं नातिदेशकमित्युक्तम्। इदानीं तु गुणवि[8]धीनामनतिदेशकत्वमुच्यते। न्यायस्तु स एव मुख्यार्थसम्भवे गौणतयातिदेशकत्वं न युक्तमिति।

---

१. 'प्रासङ्गिक' इत्यारभ्य 'प्रापि' इत्यन्तं नास्ति ग.।

२. अत्यन्तं—नास्ति क.।

३. सङ्गात्तुष—क.।

४. तुमश—क.।

५. भवतीति—क.।

६. पुरोडाशस्वरूपं—क.।

७. च—नास्ति क.।

८. विधायकं नाम नातिदेशिकमुच्यते—क.।

विशेषाशङ्का त्वेतावती । तत्र हि यागविधिपरे वाक्ये सत्या गतावनेकार्थविधा[1]ना-योगात् प्रायणीयशब्दस्य च क्लृप्तेनैव योगेन कर्म[2]नामधेयतयाऽनुवादकत्वसम्भवान्न धर्मातिदेशकत्वेन विधानार्थत्वं युक्तम् । इह तु वैष्णवादिपदानामवश्यं विधायकत्व-मङ्गीकर्तव्यम् । तद्वरं धर्मातिदेशकत्वम्, बह्वर्थसमर्पकतया प्रयोजनभूयस्त्वलाभा-दिति । [3]तामेतामाशङ्कां निराकर्तुमिदं सूत्रम्—"गुणविधिस्तु न गृह्णीयात् समत्वात्" इत्युक्तम् ॥ १७ ॥

[ ७—निर्मन्थ्यादिशब्दानां धर्मानतिदेशकत्वाधिकरणम् ]

## निर्मन्थ्यादिषु चैवम् ॥ १८ ॥ सि०

वैष्णवशब्दस्यानतिदेशकत्वेऽपि चोदनालिङ्गेनैव दार्शपौर्णमासिकाग्नेयविध्यन्त-प्राप्तेरितिकर्तव्यताकाङ्क्षा पूर्यते । बर्हिराज्यनिर्मन्थ्यादिशब्दानां त्वनतिदेशकत्वे केन प्रकारेण[4] बर्हिरादीनामुत्पादनमुपादानं चेत्याकाङ्क्षा नान्येन येन केनचित् पूर्यते । तत्र साकाङ्क्षं विधानं स्यात् । तस्मादपेक्षितार्थपूरणाय वरं गौण्यापि वृत्त्यातिदेश इति विशेषाशङ्कायामतिदिश्यते । निर्मन्थ्यादिष्वप्यनतिदेशः, मुख्य-स्वार्थपरत्वसम्भवे जघन्यवृत्त्य[5]नुपपत्तेः[6] । उपादानादि[ उत्पादनादि ]प्रकारस्तु लौकिकः समाश्रयितव्य इति ॥ १८ ॥

[ ८—प्रणयनशब्दस्य सौमिकप्रणयनधर्मानतिदेशकत्वाधिकरणम् ]

## सौमिकं तु प्रणयनमवाच्यं हीतरत् ॥ १९ ॥ पू०

चातुर्मास्यप्रकरणे "द्वयोः प्रणयन्ति । तस्माद् द्वाभ्यामेति" इति[7] सार्थवादकेन

---

१. विधि—ख. ।

२. कर्म—नास्ति क. ।

३. तामेवाशङ्क—क. ।

४. प्रमाणेन—क. ।

५. वृत्ति—नास्ति क. ।

६. पपत्तौ—ख. ग. ।

७. इति—नास्ति क. ।

वाक्येन प्रणयनमुक्तम्। तत्रैव च वाक्यान्तरेण "उत्तरवेद्यामग्निं निदधाति" इत्यग्न्याधारत्वेनोत्तरवेदिर्विनियुक्ता। वाक्यान्तरेण च "उपात्र वपन्ति" इत्युत्तरवेद्युत्पत्तिर्विहिता। "न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये" इति च पर्वद्वये निषिद्धा। तत्र[1] "द्वयोः प्रणयन्ति" इत्यत्राधिकरणद्वयं भाष्यकारेण विचारितम्। प्रथमं तावत् किं सौमिकमिदं प्राकृतं वा प्रणयनमिति पक्षद्वयं विचार्य "सौमिकं तु प्रणयनम्, आवच्यं हीतरत्", "उत्तरवेदिप्रतिषेधश्च तद्वत्" इति सूत्रद्वयेन पूर्वपक्षमुक्त्वा "प्राकृतं वाऽनामत्वात्" इति सिद्धान्तितम्। पुनः श्रुतिप्रयोजनं च "परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा" इति सूत्रेण कथितम्। तत्रापि परिसंख्यार्थतायां दोषत्रयापत्तेर्गुणाश्र[2]वणाच्चार्थवादार्थमेवेत्युक्तम्। अर्थवादप्रयोजनं चोपरितनेऽधिकरणे वक्ष्याम इत्युक्तम्। पुनश्चिन्तितं कतरयोर्द्वयोरिदं प्रणयनमिति। तत्रानियमपक्षमुत्सूत्रं कृत्वा तन्निराकरणेन "प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्" इति [3]सूत्रेण पूर्वपक्षान्तरं परि[4]गृहीतम्। अस्य हि प्रणयनस्य सन्निधौ "उत्तरवेद्यामग्निं निदधाति" इति विहितम्। तत्सन्निधानादेतत् प्रणयनविषयम्। अतो यत्रेदं प्रणयनं तत्रोत्तरवेदिः। यत्र च सा, तत्र प्रतिषेधोऽर्थवान् भवति। प्राप्तिपूर्वको हि स भवति। प्रतिषेधश्च प्रथमोत्तमयोरुपलभ्यते। तस्मात्तत्रैव[5] प्रणयनम्। इतरथा हि यदि मध्यमयोरिदं प्रणयनम्, तत[6] उत्तरवेदेः प्रथमोत्तमयोः प्राप्त्यभावात् प्रतिषेधवचनमनुवादमात्रमनर्थकं स्यादित्युक्त्वा "मध्यमयोर्वा गत्यर्थवादात्" इति सिद्धान्तितम्। एतत्तदर्थवादस्य प्रयोजनम्। तद्दर्शन हि प्रणयनं मध्यमयो[7]र्व्यवतिष्ठते। भवत्वेवं प्रणयनव्यवस्था। किमर्थं तु

१. तत्र–नास्ति क.।

२. श्रवण–नास्ति ग.।

३. सूत्रान्तरेण–क.।

४. परि–नास्ति क.।

५. एव–नास्ति क.।

६. तत्र–क.।

७. रेवात्र–क.।

प्राप्तस्य चोदकेन प्रणयनस्य पुनः श्रवणमिति चोदयित्वा गुणार्थमित्युक्तम्। अनन्तरमेव हि "उत्तरवेद्यामग्निं निदधाति" इति विहितम्। तद्वाक्यान्तरविहितमपि सन्निधानादेतत्प्रणयनविषयं भवति। तदेतदुक्तं भवति—पुनःश्रवणमर्थवादार्थम्। अर्थवादश्च प्रणयनव्यवस्थार्थः। तद्वशेन चोत्तरवेदिर्द्वयोर्मध्यमयोरेव[१] व्यवतिष्ठते। अन्यथा हि प्रकरणाविशेषात् सर्वपर्वसूत्तरवेदिः स्यात्। तदेवमर्थवादमुखेनोत्तरवेद्यामग्निनिधानस्य मध्यमयोरुपसंहारः प्रणयनपुनःश्रुतेः प्रयोजनम्। यत्तूत्तरवेदिप्रतिषेधात् प्रथमोत्तमयोः प्रणयनम्, अन्यथा तत्प्राप्त्यभावादनर्थकः प्रतिषेधः स्यादित्युक्तम्, तस्योत्तरम्—"औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः" इति सूत्रम्। यद्यप्युत्तरवेद्यामग्निं निदधातीति मध्यमयोरेव निविष्टम्, तथापि "उपात्र वपन्ति" इति पर्वविशेषमनारभ्याम्नातोत्तरवेदिः प्रकरणाविशेषात्[1] सर्वत्र स्यात्। नहि, यथा द्वयोः प्रणयन्तीत्यस्य सन्निधावाम्नातमुत्तरवेद्यामग्निं निदधातीत्येतद् मध्यमपर्वद्वयविषयं भवति, तथोपात्र वपन्तीत्यपि; सन्निधानाभावात्। तस्मात् सर्वत्र स्यात्। तन्मा भूदिति प्रथमोत्तमयोः पर्युदस्यते।

तदिदं भाष्यकारीयं व्याख्यानमाक्षिप्यते। तत्र यत् प्राकृतमेवेदं प्रणयनमित्युक्तम्, तत्सूत्रं पठित्वाक्षिपति—**प्राकृते प्रणयने स्थिते "परिसंख्यार्थं श्रवणम्" इत्येवमादीनि सूत्राणि परस्परेणासम्बद्धानि। कथम्?** तत्र यत्तावत् पुनः श्रवणस्य प्रयोजनत्रय[२]मुक्तम्, परिसंख्यार्थं गुणार्थमर्थवादो वेति, तदयुक्तम्; **यदा हि परिसंख्या भवति** द्वयोरेव मध्यमयोः प्रणयन्तीति[३], तदेतरयोर्**द्वयोः प्रणयनाभावादाहवनीयाभावः, तदभावाच्च[४] यागाभावः**। अथो-

1. प्रकरणाविशेषादिति। प्रकरणविशेषमारभ्यानाम्नानादित्यर्थः, न तु प्रकरणस्य अविशेषात् समानत्वादिति।

१. रेवाव-क.।

२. त्रय-नास्ति क.।

३. प्रणयति-क.।

४. तदभावाच्च यागाभावः-नास्ति क.।

च्येत न प्रणयनपरिसंख्येयम् , किन्तु धर्मपरिसंख्या द्वयोरेव प्राकृतं प्रणयनं धर्मवद् नान्ययोरिति, तत्राह—**न च धर्मवद् दर्शपूर्णमासयोः प्रणयनम् , येन धर्ममात्रपरिसंख्यायां** कृतायां[1] केवलमधर्मकं **प्रणयनमि**तरत्रापि **क्रियेत**। तन्न तावत् परिसंख्यार्थम्। **गुणार्थमपि नोपपद्यते। कथम्?** यस्मिन्नेव **वाक्ये**[2] **गुणिनमुच्चार्य गुणो विधीयते यथा–"दध्ना जुहोति", "शरमयं बर्हिर्भवति"** इति; भवतु **तत्र गुणविधिः। इह तु प्रणयनमुच्चार्य न किञ्चिद्विधीयते। उत्तरवेदिविधिरिति चेत्?** अनन्तरमेव ह्युत्तरवेद्यामग्निं निदधातीति विहितमिति। **तन्न, प्रणयनवाक्याद् वाक्यान्तरे उत्तर**[3]**वेदेः** श्रवणात्। तस्मात् प्रणयनवाक्यस्य न गुणार्थता। तथा**र्थवादोऽप्यनुपपन्नः**। कथम्? **यत्र** हि **किञ्चिद्विधीयते तत्रा**[4]**यमर्थवादो** भवति, "विधिना त्वेकवाक्यत्वात्" इत्युक्तम्। **प्रणयनं च दर्शपूर्णमासयोर्विधीयते। इह तु** वाक्ये तद**विधानात् किमर्थवादेन**। तस्मादिदं तावत् सूत्रं प्राकृते प्रणयने स्थिते न सङ्गच्छते।

अत्रैवार्थवाददूषणप्रस्तावात् प्रथमोत्तमयोः प्रणयनमित्यनन्तरं द्वितीयाधिकरणपूर्वपक्षसूत्रमुल्लङ्घ्य सिद्धान्तसूत्रं दूषयति—**मध्यमयोर्वा गत्यर्थवादादित्यनुपपन्नम्**। कथम्? **वरुणप्रघाससाकमेधयोर्विधीयमाने पुनः श्रवणात्**[5] प्रणयने विध्येकवाक्यत**योपपद्येतार्थवादः**, विध्यभावे त्वर्थवादस्यैवाभावात् कथं तद्वशेन मध्यमयोः प्रणयनं व्यवस्थाप्येत। विधिव्याप्ता ह्यर्थवादता विधिनिवृत्तौ निवर्तते, वृक्षत्वव्याप्तशिंशपात्वमिव वृक्षत्वनिवृत्तौ। अथ विधीयत एवात्र प्रणयनमित्युच्येत—तत्राह, **तस्मिन् विधिपक्षे उक्तो दोषः परिसंख्येति**।

---

१. कृतायां–नास्ति क.।

२. यत्र तस्मिन्नेव वाक्ये–ख. ग।

३. उत्तर–नास्ति क.।

४. तत्रार्थवादो–क.।

५. श्रवणात्–नास्ति क.।

प्राकृतस्य हि प्रणयनस्य चोदकादेव प्राप्तत्वान्न प्राप्त्यर्थं विधानं सं[1]भवतीति परिसंख्यार्थता स्यात् । तत्र चोक्तमेव दूषणमिति । तथा '**प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्**' इतीदमपि सूत्रं **प्राकृते प्रणयने स्थिते न सम्बध्यते** । कथम् ? उत्तरम्—अस्य हि[2] सूत्रस्यायमर्थः—प्रणयनेनाग्निः प्राप्यते । अतो **यत्र प्रणयनं तत्राग्निः, तत्रैव चोत्तरवेदिः प्राप्नोति** । कथम् ? **अग्निसंस्कारिका हि सा** । तेन **यत्र** सा वैश्वदेवशुनासीरीययोः प्रथमोत्तमयोः **प्रतिषिध्यते तत्राग्निर्विद्यते** । प्राप्तिपूर्वको हि प्रतिषेधः । स च वैश्वदेवशुनासीरीययोरुपलभ्यते—"न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये" इति । तेन तयोस्तस्याः प्राप्तिरनुमीयते, तत्प्राप्त्या चाग्निः । नह्यसत्यग्नावग्निसंस्कारिकायाः प्राप्तिर्घटते । **तत्रैव च प्रणयनमनु**मीयते । नहि प्रणयनमन्तरेणाग्निर्भवतीति । तदनेनो**त्तरवेदिप्रतिषेधेन** लिङ्गेनानुमानपरम्परया **प्रथमोत्तमयोः प्रणयन**मवसीयत[3] इति । तच्चेदं सूत्रमसम्बद्धमिति । कथमित्याह—**प्राकृते हि प्रणयने पूर्वं स्थिते संशयस्यैवाभावः, अनियमपक्षस्यानुत्थानं** च । अस्यार्थः—इदं हि सूत्रं कतरयोर्द्वयो[4]रिति संशये[5] तत्र चानियमपक्षे प्राप्ते तदुत्तरतया व्याख्यातम् । तच्चेदमयुक्तम् । नहि प्राकृतं प्रणयनं द्वयोरेव[6] कर्तव्यं येन कतरयोरिति सन्दिह्येत । सर्वेष्वेव हि पर्वसु तच्चोदकप्राप्त्या कर्तव्यम् । नहि द्वयोः प्रणयन्तीत्येतत्परिसंख्यार्थमिति भाष्यकारस्याभिमतम् । स ह्यर्थवादार्थतामस्य प्रथमाधिकरणे[7] गुणार्थतां च[8] द्वितीयाधिकरणे दर्शितवान् । तेन प्रणयनस्य प्राकृतस्य

---

१. सं—नास्ति क. ।

२. हि—नास्ति क. ।

३. अवसीयते—नास्ति क. ।

४. द्वयोः—नास्ति क. ।

५. 'रिति संशये' इत्यतः 'द्वयोरेव' इत्यन्तं नास्ति ग. ।

६. द्वयोरिति—क. ।

७. दर्शयित्वा—अधिकः क. ।

८. च—नास्ति क. ।

सर्वेषु भावात् कतरयोर्द्वयो[1]रिति सन्देहाभावः। सन्देहाभावाच्चानियमपक्षो नोत्तिष्ठति। तेन तदुत्तरतया प्रथमोत्तमयोरिति सूत्रं न सङ्गच्छते। यद्युच्येत न प्रणयनस्वरूपं सन्दिह्यते, किन्तु द्वयोः प्रणयन्तीति कतरयोर्द्वयोः प्रणयनमनुकीर्त्यत इति। तदयुक्तम्, प्रयोजनाभावात्। अनुवादमात्रविचारस्य हि न किञ्चित् प्रयोजनमस्ति, अनुष्ठानानौपयिकत्वात्। ननूत्तरवेदिविषयनिरूपणं प्रयोजनम्। यत्र हीदं प्रणयनमनुकीर्तितं तत्रोत्तरवेदिः। अस्यानन्तरम् "उत्तरवेद्यामग्निं निदधाति" इति विहितम्। मैवम्। नहि यत्रेदं प्रणयनं तत्रोत्तरवेदिः। सा ह्यग्निनिधानानुवादेन विहिता [2]प्रकरणाविशेषाच्चोदकप्राप्ताग्निप्रणयनसद्भावाच्चतुर्ष्वपि पर्वसु भवति। ननु सन्निधिविशेषादस्मिन्नेव प्रणयने स्यात्? न, सन्निधानात् प्रकरणस्य बलीयस्त्वात्। [3]यदि च द्वयोः प्रणयन्तीत्येतेनोत्तरवेद्यामग्निं निदधातीत्येतदेकं वाक्यं स्यात्, ततो वाक्येनैव यत्रेदं प्रणयनं तत्रोत्तरवेदिः स्यात्। न च तदस्ति, वाक्यान्तरत्वात्। तस्मान्नानेनोत्तरवेदेरुपसंहारः सिध्यतीति व्यर्थमेतत् कतरयोर्द्वयो[4]रिति। तस्मात् संशयाभावादनियमपक्षाभावाच्च तदुत्तरार्थं प्रथमोत्तमयोरिति सूत्रमसङ्गतम्। स्वयमप्यनुपपन्नमित्याह—**उत्तरवेदेश्चाप्रसङ्गादुत्तरवेदिप्रतिषेधेन यः पक्षः प्रथमोत्तमयोरिति तस्य मूलाभावः।** नहि प्राकृतस्य प्रणयनस्योत्तरवेदिरस्ति यत्प्रतिषेधेन लिङ्गेन प्रथमोत्तमयोः प्रणयनमुच्यते। ततो निर्मूलोऽयं पक्ष इति। तस्मादिदमपि सूत्रमसङ्गतम्। अतः परं तु यत्—"**मध्यमयोर्वा गत्यर्थवादात्**" इति सूत्रम्[5], **तत्प्रागेवोक्तम्।** अर्थवादत्वदूषणप्रस्तावे तस्य दूषणमुक्तमित्यर्थः। तदेव स्मरयति—**अविधानात् प्रणयनस्यार्थवादो न घटते।** तथा—"औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः" इतीदमपि सूत्रमसङ्गतमिति दर्शयन् सूत्रार्थं तावद् भाष्यव्याख्यया दर्शयति।

---

१. द्वयोः—नास्ति क.।

२. प्रमाण—ख.।

३. नहि—क.।

४. द्वयोः—नास्ति क.।

५. सूत्रं—नास्ति क.।

**ननु वरुणप्रघासानां गुणवादप्राप्तावेवायं तेषामेव अत्रेति वादः स्यादिति कोऽयं** सचोद्यपरिहारस्य ग्रन्थस्यार्थः ? तं दर्शयति—**"उपात्र वपन्ति" इत्यवान्तरप्रकरणाद्वरुणप्रघासानामेवोत्तरवेदेः प्राप्तत्वात्** । ल्यब्लोपे पञ्चमी। नन्वित्यादिना वरुणप्रघासानामेवोत्तरवेदिप्राप्तिं चोदयित्वा **प्रथमोत्तमयोः** [1]**प्रतिषेधानुपपत्तिं** निराकरणं चोद्यस्याह—एतदुक्तं भवति। उत्तर[औत्तर]वेदिकोऽनारभ्यवादप्रतिषेध इति यदुक्तम्, तदयुक्तम् । नह्युपात्र वपन्तीत्यनारभ्यवादः, किन्तु श्रुत्यादिविहितवरुण[वारुण]प्रघासिकाङ्ग[2]संदंशगृहीतत्वात् तेषामेवाङ्गम्। तस्माद् द्वयोः प्रणयन्तीत्यनेनैव प्राप्तोत्तरवेदिः प्रतिषिध्यते "न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये" इति । तदनेन [3]प्रतिषेधेन लिङ्गेन प्रथमोत्तमयोरिदं प्रणयनं न मध्यमयोरिति चोद्यनिराकरणार्थमिदं भाष्यमिति ।

निराकरणभाष्यम्—**तत्र** प्रतिषेधे **त्रीण्यपि पर्वाण्युत्कीर्तयेद्** इत्यनुभाष्य व्याचष्टे—**यद्यवान्तरप्रकरणेन वरुणप्रघासानामेवोत्तरवेदिः** स्यात्, [4]**तत्रेतरेषां त्रयाणामपि** पर्वणा**मुत्तरवेदेरभाव**[5]सम्बन्धात् **कार्यः प्रतिषेधः, सामर्थ्यात्** । अयमर्थः—द्वयोः प्रणयन्तीत्येतत्तावत् "तस्माद् द्वाभ्यामेति" इति वाक्यशेषाद्गम[6]नसाधनोरूप [साधनोरुरूप] संस्तुतमध्यमपर्वद्वयविषयं निश्चितं नान्यत्र नेतुं शक्यम् । तस्मादुपात्र वपन्तीत्यस्यैवायं प्रतिषेधः "न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये" इति। तद्यदि वरुणप्रघासानामेवेदमुपात्र वपन्ती-

---

१. प्रतिषेधेना–ख. ।

२. ङ्गानां–क. ।

३. प्रतिषिद्ध–क. ।

४ त्रोत्त–क. ।

५. अभाव–नास्ति क. ।

६. दयन–क. ।

त्यङ्गं विधीयते, ततोऽन्येषां प्राप्त्यभावात् सामर्थ्यात् प्राप्तस्य प्रतिषेधस्यानुवादमात्रमिदं स्यात्। तत्र त्रयाणामपि कीर्तनमनुवादे स्यान्न द्वयोरेवेति सामर्थ्याद् यः प्रतिषेधः स त्रयाणामपि कार्यः स्यादित्यन्वयः। किञ्च, **न** चायं **नित्यानु**[1]**वादः**, आनर्थक्यापत्तेरिति भावः। नन्वनुवादेऽपि[2] प्रतिषेधो दृष्टः, "न गिरागिरेति ब्रूयात्" इतिवत्[3], अत आह—**यत्रार्थवादत्वेन प्रतिषेधो** यथा[4] न गिरागिरेति गिरापदप्रतिषेधस्तन्निद[न्द]यैरापदस्तुत्यर्थः। **तत्र नित्यानुवादः** प्रतिषेधो **भवति**। न त्विहैवमस्ति। **तस्मादनारभ्यवादश्रवणाच्चातुर्मास्यानामविशेषेण प्राप्तोत्तरवेदिः प्रथमोत्तमयोः पर्युदस्यते,** "नानुयाजेषु ये यजामहं करोति" इतिवत् "न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये" इति। वरुणप्रघासविषयत्वे हि[5] नायं पर्युदासः सम्बध्यते। नहि सम्भवति वरुणप्रघासेषूत्तरवेदिमुपवपेद्वैश्वदेवादि[6]वर्जमिति। सम्भवति त्वेवं चातुर्मास्येषूत्तरवेदिमुपवपेत् प्रथमोत्तमपर्ववर्जमिति। तस्मादेतद्बलादेवावान्तरप्रकरणं बाधित्वा चातुर्मास्यानामेवात्रेति वादः[7] स्यात्। तदस्यार्थकथनेनैव दूषणं सूचितम्। तथा हि प्राकृतप्रणयनस्य[8] पुनःश्रवणमर्थवादद्वारेण मध्यमयोः पर्वणोरुत्तरवेद्याख्यगुणविधानार्थमित्युक्तम्। तेनेदं पर्युदासाभिधानं न सङ्गच्छते, उपात्र वपन्तीत्यनेनैव पर्युदाससहितेन मध्यमयोरे[9]वोत्तरवेद्युत्पत्तिर्विहिता नेतरयोः। यत्र चोत्पत्तिस्तत्रैव विनियोग इति

---

१. चायमनुवादः—क.।

२. वादोऽपि—ख. ग.।

३. वत्—नास्ति क.।

४. कोष्ठान्तर्गतः—नास्ति ख.।

५. हि—नास्ति क.।

६. आदि—नास्ति क.।

७. वाद इत्यस्यार्थः—क.।

८. पक्षस्य—क.।

९. एवेति—नास्ति ग.।

"उत्तरवेद्यामग्निं निदधाति" इतीदमपि विनियोगविधानं मध्यमयोः पर्वणो[1] र्निविशत इति व्यर्थं द्वयोः प्रणयन्तीत्येतत् स्यात् ।

अथवा अनेनैव मध्यमयोरुत्तरवेदेरूपसंहारात् पर्युदासानर्थक्यम् । तथा— हि "उपात्र वपन्ति" इत्युत्तरवेदिरुत्पादिता विनियोगमपेक्ष्य[क्ष]माणा यावदनुपपत्त्या सर्वपर्वसु विनियोगश्रुतिं कल्पयितुमुपक्रमते, तावदेव प्रत्यक्षेणोत्तरवेद्यामग्निं निदधातीत्यनेन विनियोगेन मध्यमपर्वविषयेणानुपपत्तिक्षयान्नान्यत्र[2] विनियोगः कल्प्यते, साप्तदश्यवत् । तेन प्राप्त्यभावात् पर्युदासानर्थक्यम् । तेन यदिदं न वैश्वदेव उत्तरवेदिमुपवपन्तीत्यस्यानारभ्यवादपर्यु[3]दासेनार्थवत्त्वाभिधानम्, यच्च द्वयोः प्रणयन्तीत्युत्तरवेद्यर्थत्वाभिधानम्, तदुभयं मिथो व्याहतमिति । ये तु न वैश्वदेव उत्तरवेदिमित्यस्यानुवादत्वाङ्गीकरणेनैव द्वयोः प्रणयन्तीत्यस्योत्तरवेद्युपसंहारार्थतयाऽर्थवत्तां समर्थयन्ते, ते हि सूत्रं तावदवजानते "औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः" इति । अनेन हि यत्पूर्वपक्षवादिनाभिहितम् प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधान्मध्यमयोर्हि प्रणयने स ति तयोरेवोत्तरवेदिप्राप्तेर्न वैश्वदेव उत्तरवेदिमुपवपन्तीति प्रतिषेधोऽनर्थकः स्यादिति, तत्परिहारोऽभिधीयते । पर्वविशेषमनारभ्य चातुर्मास्येषूत्तरवेदिराम्नाता । तस्याः प्रथमोत्तमयोः प्रतिषेधार्थमिदम् । पर्युदासार्थमित्यर्थः । ततश्च नान[4]र्थक्यमिति । तदिदमनुवादत्वाङ्गीकरणे[5]ऽनुपयोगि स्यात् । न चानुवादत्वमेवानेनोच्यते, अनारभ्यविध्युपन्यासानर्थक्यात् । असत्यपि हि तस्मिन्ननुवादत्वमुपपद्यत एव । अथ प्रथमोत्तमयोर्विशेषतः प्रतिषेधानुवादो नेतरयोरप्रा[6]प्तौ घटत इति तदर्थोऽनारभ्य विधिः, एवमपि द्वयोः पर्वणोर्वि[7]धि[र्वेदि] निराकरणमनुपयोगि स्यात् । सत्यपि हि मध्यमयोरत्रेति वादे

---

१. पर्वणोः—नास्ति क. ।
२. अन्यत्र—नास्ति ग. ।
३. र्युदासार्थ—क. ।
४. नर्थकमि—क. ।
५. णेनानवधारितः स्यात्—ग. ।
६. रप्राप्तौ—नास्ति ग. ।
७. वाद—ख. ।

[1]इतरयोर्विशेषतोऽनुवादो घटत एव। न चानारभ्यवादत्वसमर्थनमुपसंहारोपपत्यर्थम्, उपसंहारस्य[2] लिङ्गसमर्थनसूत्रागम्यत्वात्। तस्मादस्ति सूत्रभाष्य[3]विरोधः। अपि च, अवश्याङ्गीकर्तव्येऽन्यतरस्यानुवादत्वे द्वयोः प्रणयन्तीत्यस्यैवाङ्गीकर्तु[4]मुचितम्, न तु न वैश्यदेव उत्तरवेदिमुपवपन्तीत्यस्य। कथम्? द्वयोः प्रणयन्तीत्यनेन ह्यर्थवादद्वारेण मध्यमयोरुत्तरवेद्युपसंहारः क्लिष्टः स्यात्, न वैश्वदेव उत्तरवेदिमुपवपन्तीत्यनेन तु स्पष्टः पर्युदासः। तस्मादनेनै[5]व मध्यमयोरुत्तरवेदिसिद्धेर्न द्वयोः प्रणयन्तीत्यस्योत्तरवेद्युपसंहारार्थताऽवकल्पते। कथं चानेन वाक्यान्तरविहितोत्तरवेदिरुपसंह्रियते। यदि मतम्—प्रणयनार्था खलूत्तरवेदिः। प्रणयनस्य च[6] मध्यमयोर्निविष्टत्वात् सापि तत्रैव निविशत इति। तदयुक्तम्, प्रथमोत्तमयोरपि चोदकतः प्रणयनसद्भावात्। असति हि तस्मिन्नाहवनीयाभावाद्यागाभावः स्यादित्युक्तम्। तस्मिंश्च सति तदङ्गं प्रणयनमपि स्यादेव। न च द्वयोः प्रणयन्तीत्यनेनोक्तं यत् प्रणयनं तस्यैवाङ्गमुत्तरवेदिरिति वाच्यम्, प्रमाणाभावात्। वाक्यान्तरेणोत्तरवेदेः शासनात् सन्निधिमात्राच्च प्रकरणस्य बलीयस्त्वात्। तस्मात् पर्युदासवशादेव मध्यमयोः प्रणयनसिद्धिः, न द्वयोः प्रणयन्तीत्यनेन। तस्मादयमेवानुवादः। न वैश्वदेव उत्तरवेदिमुपवपन्तीत्ययं तु पर्युदासविधिरिति। प्रकृतमाक्षेपमुपसंहरति—**एवं प्राकृते प्रणयने सूत्राणि न घटन्ते**। भाष्यव्याख्यानमाक्षिप्येदानीं स्वयं व्याचष्टे—**इत्यतोऽन्यथा वर्ण्यते। इह हि त्रयः पक्षाः**—द्वयोः प्रणयन्तीति **किमिदं दार्शपौर्णमासिकं**[7] **प्रणयनमनूद्यते**; किं वा **सौमिकं** सोमप्रणयनधर्मकं प्रणयनान्तरं

---

1. इतरयोरनु—क.।
2. उपसंहारस्य—नास्ति क.।
3. भाष्यकार—क.।
4. कर्तव्यत्व—क.।
5. एव—नास्ति क.।
6. च—नास्ति क.।
7. दार्शिकं—ख. ग.।

विधीयते; **किमपूर्वं वेति** न दर्शपूर्णमासपूर्वम्, नापि सोमपूर्वम्, किन्तु प्रणयनान्तरमपूर्वं विधीयत इति। प्रणयतिशब्दस्यातिदेशकत्वनिराकरणार्थमधिकरणम्। तत्र सन्निहितातिक्रमकारणाभावात् केनापि प्रयोजनेन **दार्शिकमेवेदमित्ये**[1]वमुत्सूत्रं प्रथमं **पक्षं**[2] **कृत्वा** प्रणयनं तु[3] **सौमिकमित्यनेन** तुशब्देन **निवार्यते**[4]। **एवं च तुशब्दोऽर्थवान्** भवति **प्रणयनं त्विति**। इतरथा ह्यनुपन्यस्ते पक्षान्तरे मन्दप्रयोजनस्तुशब्दः स्यात्। अयं च सूत्रार्थः—पुनःश्रुतिर्ह्यनन्यार्था भेदिका भवति। तादृशी चेयम्। नह्यन्यदस्याः[5] प्रयोजनं सम्भवतीत्युक्तम्। तस्मात् प्रणयनान्तरं विधीयते। तदपि यदि प्रणयनमात्रं स्यात्, ततश्चोदकप्राप्तान्न [6]कश्चिद् विशेषः स्यात्। तस्माद्विशिष्टं प्रणयनं विधीयते। विशेषश्च धर्मविशेषाद् भवति। सौमिकं च धर्मवत्। अतस्तद्धर्मवत् प्रणयनं विधीयते। "उत्तवेदिप्रतिषेधश्च तद्वत्" इति सूत्रं भाष्ये व्याख्यातमेव।

अस्मिंश्च पक्षे तेनैव[7] प्रतिषेधलिङ्गेन प्रथमोत्तमयोरिदं सौमिकं प्रणयनम्। यदि हि मध्यमयोः स्यात्, ततः प्रथमोत्तमयोरुत्तरवेदिप्राप्त्यभावात् त[8]त्प्रतिषेधो नावकल्पेत। न चानारभ्यविधेरुपात्र वपन्तीत्यस्यायं प्रतिषेध इति वक्तव्यम्। यदा हि द्वयोः प्रणयन्तीत्येतत् सौमिकं प्रणयनं मध्यमयोरर्थवादवशान्निविष्टम्, तदा ते[9]-

---

१. मित्यसूत्रम्—क.।

२. पूर्वपक्षं—क.।

३. तु—नास्ति क.।

४. विचार्यते—क.।

५. अन्यत्—नास्ति ख. ग.।

६. कश्चिद्वि—नास्ति क.।

७. एव—नास्ति क.।

८. तत्—नास्ति क.।

९. तदात्मकैव—क.।

नैव तयोरुत्तरवेदेरपि सिद्धत्वाद् उपात्र वपन्तीत्येतत् केवलं वैश्वदेवशुनासीरीयार्थं स्यात् । तयोरेव च[1] प्रतिषेध इति व्याघातः स्यात् । ततो[2]ऽगत्या ग्रहणाग्रहणवद्विकल्पः स्यात् । स चान्याय्यः । तस्माद् गत्यर्थवादं यथाकथञ्चिन्नीत्वा प्रथमोत्तमयोरिदं सौमिकं प्रणयनं विधीयते द्वयोः प्रणयन्तीति । न वैश्वदेव उत्तरवेदिमिति चास्यैव शेषः । तदयमर्थः—वैश्वदेवशुनासीरीययोरुत्तरवेदिवर्ज्यं [वर्जं] सौमिकं प्रणयनं कुर्यादिति । उपात्र वपन्तीत्येतत्तु मध्यमयोरुत्तरवेदिमप्राप्तां विधत्त इति[3] । एवं सर्वेषामर्थवत्ता भवति ।

**प्राकृतं वानामत्वादिति** सिद्धान्तसूत्रम् । तस्यार्थः—**अपूर्वम**प्रकृतिपूर्वं **प्रणयनान्तरं वरुणप्रघाससाकमेधयोर्विधीयते,** गत्यर्थवादात् । यत्तु प्रणयनमात्रमविशिष्टं न चोदकप्राप्ताद् द्विविशिष्यत इत्युक्तम्, तत्राह—शाखान्तरे **ह्यग्निप्रणयनोत्तरकालम्—"आहवनीयाद्** द्वावध्वर्युप्रतिप्रस्थातारावग्नी **प्रणयतः" इति श्रूयते** । तदेकवाक्यतया द्वयोः प्रणयन्तीत्यनेनाप्याहवनीयात् प्रणयनं विधीयते । तेन[4] चोदकप्राप्तं यद्गार्हपत्यात् प्रणयनम्, ततो विलक्षणमिदं तदुत्तरकालमाहवनीयाद् विहारयोः प्रणयनं पशुबन्धवदिति[5] । ननु नातः प्रागाहवनीयो विद्यते, होमानामुत्तरकालत्वादाहवनीयस्य प्राक्तेभ्यः प्रयोजनाभावात् । अतो देशलक्षणार्थोऽयमाहवनीयशब्दः । सप्तम्यर्थे च पञ्चमी । आहवनीयदेशे प्रणयन्तीति । अत आह—**प्रागपि होमादाहवनीयो [6]व्रतश्रपणनिर्वापोपस्थानप्रायश्चित्त[7]प्रयुक्तो विद्यते । तस्मान्न देश-**

---

१. च—नास्ति क. ।

२. तत्रा—ख. ग. ।

३. इत्येषामर्थवत्ता—क. ।

४. ते—नास्ति क. ।

५. इति—नास्ति क. ।

६. श्रुतश्रवण—पू. मु. पा. ।

७. तैः—पू. मु. पा. ।

**लक्षणार्थ आहवनीयशब्दः**[1] । **एवं चेत् प्रणयनान्तरम**दार्शिकमसौमिकं[2] च **विधीयते** । कथं तर्हि प्राकृतं वेति सूत्रमत आह—**प्राकृतं वेति स्वाभाविकमित्यर्थः** । यदेव प्रणयतिशब्दाच्चोदकं सोमं चानालोच्य स्वतः प्रणयनमात्रं गम्यते, तदेव विधीयते । तत्र च[3] हेतु**रनामत्वादिति भाष्ये व्याख्यात एव** । नहि प्रणयतिशब्दः सौमिकस्य प्रणयनस्य वाचकः, यत्तद्धर्मातिदेशकः स्यात् । न चानर्थक्यादपि तत्परत्वम्, प्रणयनान्तरविधानेनैवार्थवत्त्वादिति । यदि प्रणयनान्तरविधान[4]मिदम्, न प्राकृतं [त] पुनःश्रवणम्,[5] किमर्थं तर्हि पुनःश्रुतिप्रयोजनकथनम्? [6]अत आह—नैवं [ नैव ] पुनःश्रुतिप्रयोजनकथनम् । किन्त्वधिकरणपक्षाणां त्रयाणामपि यथाक्रमं[7] सूत्रत्रयेण प्रयोजनं कथ्यते । तत्र दार्शिकमेवेदं प्रणयनमित्यस्य **प्रथम**पक्षस्य **प्रयोजनसूत्रमिदम्—"परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वेति । यथासम्भवमेतेषु** प्रयोजनेषु **पुनःश्रुति**र्योज्या । ततश्च प्राकृतमेवाविशिष्टमनुष्ठानं चतुर्ष्वपि पर्वसु स्यात्, न ततो विशिष्येतेति । **प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादित्ये**तदप्यस्मिन्नेवाधिकरणे **मध्यमस्य पक्षस्य प्रयोजनसूत्रम्**, न त्वधिकरणान्तरपूर्वपक्षसूत्रम् । कथम्? अपूर्वे प्रणयने स्थिते नोत्तरवेदिप्रतिषेधेन लिङ्गेन प्रथमोत्तमयोरिति [8]शक्यते वक्तुम् । नह्यपूर्वस्य प्रणयनस्योत्तरवेदिरङ्गमिति प्रमाणमस्ति । तेन गत्यर्थवादवशेनैवास्य मध्यमविषयत्वनिश्चयान्नाधिकरणान्तरमारम्भणीयम् । अतो मध्यम-

---

१. शब्दः—नास्ति क. ।

२. पौर्णमासिकं—अधिकः क. ।

३. च—नास्ति क. ।

४. इदं—नास्ति क. ।

५. पुनःश्रवणं—नास्ति क. ।

६. अतः इत्यारभ्य कथनम् इत्यन्तं नास्ति ख. ।

७. यथाक्रमं—नास्ति क. ।

८. शक्यम्—ख. ।

पक्षप्रयोजनसूत्रमेवेदम् । तस्मिन् पक्षे नाविशिष्टमनुष्ठानम्, किन्तु प्रथमोत्तमयोः पर्वणोः सौमिकप्रणयनधर्मकप्रणयनविधानात्तद्धर्माः कर्तव्याः । तत्र तूत्तरवेदिमात्रं न भवति, प्रतिषेधात् । अवि[ अव ]शिष्टं तु वैसर्जनहोमादि भवत्येव चोदकप्राप्तं प्रणयतिशब्दातिदेशात् प्राप्तम् । उत्तरवेदिमात्रप्रतिषेधात्तदतिरिक्तं सौमिकं प्रणयनं कर्तव्यमिति [1]सूत्रयोजना । "मध्यमयोर्वा गत्यर्थवादात्" इति [2]तृतीयस्य सिद्धान्तपक्षस्य प्रयोजनसूत्रम् । गत्यर्थवादान्मध्यमयोर्**द्वयोः पर्वणोः प्रणयनान्तर**माहवनीयाद् **भवतीति** ।

यदि प्रथमोत्तमयोः प्रणयनमित्येतत् सूत्रं मध्यमपक्षप्रयोजनकथनमात्रम्, न तु पूर्वपक्षसूत्रम्, तथा सति तत्परिहारार्थम् "औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः"[3] इत्येतदनर्थकं स्यादत आह—नायमस्य परिहारः, किन्तु **"उत्तरवेदिप्रतिषेधश्च तद्वत्" इत्यस्य** सौमिकं प्रणयनमित्यत्रोक्तस्य **औत्तरवेदिकोऽनारभ्यवादप्रतिषेध इत्येतत् परिहारसूत्रम्** । तद्धि नाद्यापि परिहृतम् । अतस्तत्परिहारार्थमिदं सूत्रम् । तच्च **भाष्ये व्याख्यातमेव** । नहि द्वयोः प्रणयन्तीत्यनेन प्राप्तोत्तरवेदिप्रतिषेधोऽयम् [म्, येन] न वैश्वदेव उत्तरवेदिमुपवपन्ति [4]न शुनासीरीय इत्येतत्[5] सौमिकप्रणयनलिङ्गं स्यात्; किन्तु "उपात्र वपन्ति" इति "उत्तरवेद्यामग्निं निदधाति" इति वचनान्तराभ्यां पर्वविशेषमनारभ्याम्नाताभ्यामविशेषेणोत्तरवेदिः प्राप्ता प्रथमोत्तमयोः पर्युदस्यते । अनेन च ज्ञायते सूत्रकारस्याप्यैकाधिक[6]रण्यमेवाभि-

---

१. सूत्रप्रयोजनम्—क. ।

२. तृतीयम्—क. ।

३. इत्यनर्थ—क. ।

४. न शुनासीरीये नास्ति क. ।

५ 'एतत्' स्थाने 'यतः'—क. ख.

६. करण्यमभि—क. ।

मतमिति। अधिकरणभेदे हि प्रथमाधिकरणोक्तं लिङ्गं तत्रैव परिहृतं स्यात्। तस्मादेकमिदं सप्तसूत्रकं त्रिपक्षमधिकरणमिति ॥२४॥

[ १०—स्वरसामादिशब्दानां धर्मातिदेशकत्वाधिकरणम् ]

## स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ २६ ॥ सि०

का पुनश्चोदनालिङ्गनिमित्तस्यातिदेशस्याष्टमिकस्य नामधेयप्रस्तावे सङ्गतिः? प्रासङ्गिकीत्याह—**अपवाद**[1]**प्रसङ्गेनेदमारभ्यते**। गुणविधिषु नामातिदेशोऽपोदितः। तत्प्रसङ्गेनात्र पूर्वपक्षमभिधाय तदपवादकतया सिद्धान्तोऽभिधीयत इति सङ्गतिः। पूर्वपक्षमाह—**नामधेयेन ह्यतिदेशो** भवति। **स्वराणि**[2] **सामान्यस्येति**[3] **यथैव गवामयने गुणविधिस्तथेतरत्रापि पृष्ठ्यः षडहो**[4] **द्वौ स्वरसामानावित्यत्र**। एवमा**मिक्षैककपालावपि द्रव्यविधित्वाद्**[5] **गुणविधी। एवं गुणविधित्वात्** स्वरसामादिष्व**तिदेशा**[6]**भावे प्राप्ते यस्य लिङ्गमर्थसंयोगादित्यनेन न्यायेनातिदेशः प्राप्यते,** स्वरसामत्वादिसामान्यादिति ॥ २६ ॥

[ ११—अनोवासःप्रभृतिशब्दानामाकृतिनिमित्तताधिकरणम् ]

## कर्मजे कर्म यूपवत् ॥ २८ ॥ पू०

कर्मनामाग्निहोत्रादि, यौगिकं च प्रायणीयादि विचारितम्। कर्मनामवदेव संस्कारनाम्नोऽपि [1]यूपादेरतिदेशकत्वं सिद्धम्। तत्प्रसङ्गेन त्विदानीं वासःप्रभृती-

---

1. यूपशब्द आदिर्यस्य तद् यूपादि। तस्य कर्मनाम्न इत्यर्थः।

१. अपवादापवाद—क.।

२. सस्वराणि—क.।

३. तु—अधिक क. ग.।

४. षडहादौ—क.।

५. त्वात्—नास्ति क.।

६. देशत्वा—क.।

नां संस्कारनामत्वमेवास्ति नास्तीति विचार्यते। तन्तुवानतक्षणादिक्रियाणां मुख्यत्वात्, तत्पूर्वकत्वाज्जातेः मुख्यातिक्रमकारणाभावात् क्रियानिमित्ता वासःप्रभृतयः शब्दाः। तेन वाससि विहिते क्रियैव विहिता भवतीति वासःशब्देन लोकसिद्धा वानक्रिया कर्माङ्गत्वेनातिदिश्यत इति पूर्वः पक्षः ॥ २८ ॥

सिद्धान्तमाह—

**रूपं वाऽशेषभूतत्वात् ॥ २९ ॥ सि०**

**आकृतिवचना एवैते**। कुतः? **नह्यत्र क्रियोच्चार्यते यथा पाचको लावक** इति धातुभागेन क्रियाभिधीयते, नैवमिह केनचित् भागेन क्रियोच्यते। तत्राखण्डेनैव शब्देन क्रियामुक्ता[ क्त्वा ] तदभिव्यक्ताकृत्यभिधाने गौरवं स्यात्। विनष्टायामपि च[1] क्रियायां जातिमात्रे प्रयोगाद् जातेरेवाभिधेयत्वं न क्रियायाः। न चेह यूपवत् क्रियाजन्यमदृष्टमस्ति, यद्विनष्टायामपि क्रियायां वाच्यं स्यात्। तस्माज्जातिमात्रमत्राङ्गं न क्रिया, वाच्यत्वाभावात्। अथावाच्यापि क्रियैव[2] लक्षणयाभिधीयत इत्युच्येत, तत्राह—**शब्देनाकृतिरेव बोध्यते। क्रिया लक्षणयावगम्यते**। **श्रुतिश्च लक्षणाया ज्यायसीति** ॥ २९ ॥

[ १२—गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधिकरणम् ]

**विशये लौकिकः स्यात् सर्वार्थत्वात् ॥ ३० ॥ सि०**

**न वैदिकमर्थनिर्देशात् ॥ ३१ ॥**

किमग्निशब्दः संस्कृताग्नि[4]प्रापकः, उतायमपि वासःप्रभृतिवज्जातिमात्रप्रापक इति प्रसङ्गाच्चिन्त्यते। लिङ्गाल्लौकिकवैदिकसर्वाग्निकार्यार्थतां वचने सति लिङ्गविनियोगाऽनवकल्पनाद् द्वादशे निराकृत्य वैदिककर्मार्थत्वं स्थितम्। इह तु

---

१. च—नास्ति क.।

२. एव—नास्ति क.।

३. तु—नास्ति क.।

४. भिप्रायकः—ग.।

वैदिकेऽपि यत्राग्निसामान्यं विनियुक्तम्, तत्र नाहवनीयादीनां ग्रहणमित्युच्यते। तत्र कार्यार्थमर्जिता[1] आहवनीयादयोऽग्निविनियोगेषु सर्वेष्वव्यवस्थया सर्वे ग्रहीतव्याः। यत्तु क्वचिद्विशेषरूपेण श्रवणं "यदाहवनीये जुहोति" इति तद्व्यवस्थार्थमिति पूर्वः पक्षः। सिद्धान्तमाह—**आहवनीयादयः कैमर्थ्याभिलाषिणो** "यदाहवनीये जुहोति" इत्यादिभिर्होमादौ **प्रयोजने दत्ते निराकाङ्क्षीभूताः। तेनान्यत्र शेषभाव एषां नास्ति प्रमाणम्।** "अग्निमुपनिधाय स्तुवीत" इत्येवमादयोऽपि लोकसिद्धाग्नि[2]मात्रनिराकाङ्क्षा नाहवनीयादीन् गृह्णन्ति। यदि तु मा भूदाहवनीयादिरूपस्योपनिधानाङ्गत्वं लौकिकेन त्वग्निरूपेणाहवनीयादीनामपि ग्रहणं भवत्वित्युच्यते; तदयुक्तम्, असति वचने क्लृप्त[3]देशादाहवनीयादीनां चालने दोषप्रसङ्गात्। श्रूयते हि—"वि वा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहिताग्नेरग्निरपक्षायति" इति। अथ धैष्ण्याग्नयः कस्मान्न गृह्यन्ते? [4]अत आह—**धैष्ण्या अपि च व्याघारणार्थमुत्पन्नाः, तेनैव निराकाङ्क्षा नान्यत्र विनियोक्तव्याः। व्याघारणे** तु **कृते** तन्मात्रार्थत्वात्तेषामपि "**अपवृक्ते**[5] **कर्मणि लौकिकः**" **इति** हेतोः **प्रसङ्गाद्** व्याघारणार्थतयापि विहितानामु**पधानेऽपि सम्भवति योऽन्य आनीयते, तत्र प्रयत्नः कर्तव्यः।** स चायुक्तः। तेन यदि कृते व्याघारणे ध्रियते, ततो लाघवात्तेषामेवोपधानमुचितमिति सौकर्यमात्रमुक्त**मिति** ॥३०–३१॥

[ १३—उपशये यूपशब्दस्य संस्कारानतिदेशकत्वाधिकरणम् ]

## संस्कृतः स्यात्तच्छब्दत्वात् ॥ ३२ ॥ पू०

अयूपे यूपशब्दस्तद्धर्माणां विधायकोऽग्निहोत्रादिशब्दवत्। तेनोपशये जोषणादयः कर्तव्याः। न वा[1]। कुतः? नात्र यूपत्वं विधीयते, विध्यश्रवणात्; पुरुषव्यापारा-

---

1. नवेति। कर्तव्याः, इति शेषः।

१. गार्हपत्या–क.।

२. ग्निजातमात्र–ग.।

३. क्लृप्तात्–ग.।

४. अत आह–नास्ति क.।

५. अपवृक्ते–क.।

श्रवणाच्च भवत्यर्थस्यापुरुषव्यापारत्वेनाविधेयत्वात् । न च वचनानर्थक्यम्, येन लक्षणयाऽध्याहारेण विपरिणामेन वा[१] कर्तव्यतावचनो ल[२]भ्यते, विध्यन्तरार्थवादत्वेनार्थवत्त्वात्, यूपशब्दस्य च कतिपयच्छेदनादिसादृश्यादप्यु[३]पपत्तेः । तस्मादुपशरे जोषणादीनामक्रियेति ॥ ३३ ॥

[ १४—पृष्ठशब्दस्य ऋङ्मन्त्रवाचित्वाधिकरणम् ]

**कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ॥ ३५ ॥ पू०**

पृष्ठशब्दः कर्मणो वाचक इति स्थितम् । तत्र यदि ऋचामपि वाचकः स्यात्, अनेकार्थत्वं स्यात् । लक्षणाश्रयणे च[1] स एव दोषः । तस्मात् कर्मवचनः सन्निह प्रकरणान्तरत्वात् कर्मान्तरे वर्तमानो मुख्यपृष्ठधर्मातिदेशको भवति, कौण्डपायिनामयनेऽग्निहोत्रशब्दवत् । पृष्ठैरिति चेत्थंभावलक्षणे तृतीया । उपतिष्ठतिश्च समीपस्थितिवचनः । तदयमर्थः—पृष्ठसदृशैः कर्मभिरग्निमुपतिष्ठते । अग्निसमीपे तिष्ठन् पृष्ठसदृशानि कर्माणि कुर्यादिति यावत् । आत्मनेपदं तु "व्यत्ययो बहुलम्" इति भविष्यतीति पूर्वः पक्षः ॥ ३४ ॥

सिद्धान्तमाह—

**अभिधानोपदेशाद्वा विप्रतिषेधाद् द्रव्येषु पृष्ठशब्दः स्यात् ॥३६॥ सि०**

[४]**द्रव्यवचनः पृष्ठशब्दः । कुतः ?** उपतिष्ठत इत्यात्**मनेपदं मन्त्रकरणे** वर्तमानादुपपूर्वात्तिष्ठतेः **स्मर्यते** । नह्यत्र व्यत्यये प्रमाणमस्ति । तेनात्मने[५]पदाद् मन्त्रकरण[६]मेव प्रतीमः । **तच्च मन्त्रकरणं नाभिधानमन्तरेण सम्भवतीति** तद-

---

1. स एवेति । लक्षणाश्रयणमेवेत्यर्थः । दोषः इति विधेयानुसारेण पुंस्त्वम् ।

१. वा—नास्ति क. ।

२. लक्ष्यते—क. ।

३. अपि—नास्ति क. ।

४. ऋग्द्रव्य—ग. ।

५. पदे—क. ।

६. ण एव—क. ।

**भिधाता** धातुरात्मनेपदादेव लिङ्गाद**नुमीयतेऽपरस्त**स्मादुपतिष्ठतेः[१]। न ह्यभिधान-मन्तरेण समीपस्थानमात्रस्य मन्त्रकरणता सम्भव[२]ती**त्यतोऽत्र श्रुतानुमितौ द्वौ धातू** उपतिष्ठतिरभिदधातिश्च। नन्वेवमुभयार्थविधानाद्वाक्यं भिद्येतात आह—**तत्र तिष्ठतिः सामर्थ्यात् प्राप्तोऽनूद्यते** निर्वपतिवत्। **उपसर्गार्थोऽप्यनुवाद एव,** [३]**सामीप्यस्य प्राप्तत्वात्।** कथं पुनरनयोः प्राप्तिरित्यत आह—**यस्योपस्थान-मभिधानं क्रियते तस्य समीप एव स्थित्वा तत्[४] क्रियते नान्यथा।** "त्वामिद्धि हवामहे", "अभि त्वा शूर नोनुमः" इत्यादिसन्निहिताभिधानलिङ्गात्। तस्मात्तदनुवादेनाभिधानमेवात्र विधीयते। पृष्ठैरिति च करणे तृतीया, कारक-विभक्तेर्बलीयस्त्वाद्। अभिधानस्य च[५] मन्त्रः करणम्। अतो लक्षणया मन्त्रवचनः पृष्ठशब्दः।

नन्वेवं लक्षणा स्यात्? सत्यम्, [1]स तु न दोष इत्याह—यस्मादेवमुप-ग्रहस्य मन्त्रकरणे विशेष[६]स्मरणम्, **तस्मादुपग्रहानुग्रहात् पृष्ठशब्द आत्मीयान् मन्त्रान् लक्षयति।** अथ पृष्ठशब्दं श्रुतिवृत्तं गृहीत्वा उपग्रह एव कस्मादन्यायेन न[७] नीयतेऽत आह—**पृष्ठशब्दे श्रुतिवृत्ते गृह्यमाणे ह्यत्यन्तं बाध एवा[८]त्मने-पदस्य स्यात्,** असाधुत्वप्रसङ्गात्[९] [ङ्गश्च]। पृष्ठशब्दस्य तु लक्षणया नीयमानस्य

1. स त्विति। पूर्वोक्तं लक्षणाभवनमित्यर्थः। दोषपदसमभिव्याहारात् पुंस्त्वम्।

१. तिष्ठते—ग.
२. इति—नास्ति ग.।
३. समीप्यानुवादः—क. ख.।
४. तत्—नास्ति क.।
५. च—नास्ति क.।
६. विशेषे—ख. ग.।
७. न—नास्ति ग.।
८. एव—नास्ति क.।
९. प्रसङ्गाच्च—क.।

न तीव बाधः । किञ्च, पृष्ठशब्दस्यासामञ्जस्यं त्वत्पक्षेऽपि तुल्यम्, [1]गौणत्वात् । **तस्मादात्मने**पदानुरोधात् **पृष्ठशब्दो मन्त्राभिधायी** । न चात्र "अकर्म-काच्च" इत्यात्मनेपदं भवतीति भ्रमितव्यम, अकर्मकत्वे सत्यनन्तरवाक्ये "बृहद्रथ-न्तराभ्यां पक्षौ यज्ञायज्ञीयेन पुच्छम्" इत्यत्रानुषङ्गासम्भवात् । तस्मान्मन्त्रकरण एवेदमात्मनेपदम् । अत्र चोद्यभाष्यम् "आह—नैतद्युक्तम्" इत्यादि । तस्यार्थमाह— **उपस्थानवचनः** सन् उपतिष्ठतिः **कथमभिधाने वर्तते** । मन्त्रकरणे हि व्यापारे वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदमित्युक्तम् । मन्त्रश्चाभिधानस्य करणम्, नान्यस्य । ततश्चोपतिष्ठतिनाऽभिधाने वर्तितव्यम् । न चासौ तत्र वर्तितुं शक्नोति । स हि श्रुत्या समीपस्थितिमात्रं शक्नोति वक्तुम्, आत्मनेपदात्तु लिङ्गादभिधानार्थता स्यात् । तच्च दुर्बलं श्रुतेः । तस्माद् मन्त्रकरण आत्मनेपदमित्ययुक्तमिति ।

'उच्यते नैवात्र श्रुतिर्बाध्यत' इत्यादिपरिहारभाष्यार्थमाह **धातूपसर्गयो-र्योऽर्थः सोऽभिधानसामर्थ्यलभ्यत्वान्न विरुध्यते** । अयमर्थः—नैवात्रोपतिष्ठ-तिरभिधाने वर्तते येन श्रुत्यर्थबाधः स्यात् । किन्तु स्वार्थमेव समीपस्थानमर्थप्राप्तमनु-वदति । आत्मनेपदानुमितं त्वभिधानं मन्त्रकरणं विधीयत इति । **इतरस्तु** स्वाभिप्राय-माविष्कुर्वन्नाह—एवमप्यानुमानिकस्या**भिधानस्य मन्त्रः** करणम्, **न** श्रुतस्योप-**तिष्ठतेः** । ततः किमित्यत आह—**एवं चेदभिधानार्थः सन्मन्त्रः कथमुप-तिष्ठतेस्तादर्थ्यं प्रतिपद्यते** । तादर्थ्ये चासति कथं पृष्ठैरुपतिष्ठते इति समभि-व्याहारः । कथं च मन्त्रकरणे प्रवृत्तिरुपतिष्ठतेरिति । परिहारभाष्याभिप्रायमाह— **उच्यते, यथा दीक्षणीयादयः पुरुषसंस्काराः** "फलसंयोगात्तु स्वामिसंयुक्तं प्रधानस्य" इत्यनेन न्यायेन भोक्तृत्वांशपातित्वात् **फलप्रतिग्रहणयोग्यं पुरुषं कुर्वतो [कुर्वन्तो] यागस्य कार्येऽपि**[1] भोक्तृत्वांशे **वर्तमानास्तदर्था** यागार्था भवन्ति, **एवमिहाप्युपतिष्ठतेरभिधानं कार्यम्**[2] । एवं च तद-

1. पूर्वपक्षग्रन्थे पृष्ठसदृशानि कर्माणि कुर्यादित्यर्थवर्णनाद् वर्णितं गौणत्वम् ।

१. अपि—नास्ति क. ।

२. एवं भूतमपि—क. ।

[म]भिधानव्यापारं कुर्वन्तो मन्त्रास्तदर्थतामुपस्थानार्थतां प्रतिपद्यन्ते। तदिदमुक्तं भाष्यकारेण [1]अभिधानमुपस्थानप्रयोजनभूतमभिनिर्वर्तयन्मन्त्र उपस्थानस्य करणं भवति, [1]यतोऽस्योपस्थानस्य प्रयोजनमभिधानं निर्वर्तयति। [2]किमेतावतोपस्थानस्य करणं भवति? बाढम्। नहि निष्प्रयोजनमुपस्थानमनुष्ठीयते। तेन प्रयोजनायत्तत्वादुपस्थानस्य प्रयोजनमभिनिर्वर्त्तयतोऽपि मन्त्रस्य तद्वारेण भवत्युपस्थान- [ निर्वर्तकत्वम् ] निर्वर्त्तकम्। तस्मात् पृष्ठैरुपतिष्ठत इति समभिव्याहारो मन्त्रकरणार्थत्वं चोपतिष्ठतेरुपपद्यते। तदेष संक्षेपः—

आत्मनेपदसामर्थ्यादुपपूर्वस्य तिष्ठतेः।
व्यापारे मन्त्रकरणे वृत्तिस्तावत् प्रतीयते॥
समीपस्थितिमात्रं च स्वशक्त्याभिदधात्यसौ।
मन्त्रसाधनता तस्य स्वयं नैवोपपद्यते॥
अभिधानार्थतायां तु तन्मुखेन भवत्यसौ।
अभिधानार्थता तस्मादुपस्थानस्य कल्प्यते॥
आत्मनेपदसामर्थ्यान्नान्यथा तद्धि युज्यते।
एवं च पृष्ठशब्देन युक्ता मन्त्रस्य लक्षणा॥
तन्नायं पृष्ठधर्माणां पृष्ठशब्दोऽतिदेशकः।
तन्मन्त्रकरणं त्वग्नेरभिधानं विधीयते॥

इति पार्थसारथिमिश्रविरचिते श्रीतन्त्ररत्ने
सप्तमस्य तृतीयः पादः॥ ३॥

---

[ १—अविहितेतिकर्तव्यताकेषु सौर्यादिष्वितिकर्तव्यताया अतिदेशाधिकरणम् ]

## इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम्॥ १॥ सि०

नाम्नातिदेशोऽभिहितः। इदानीमानुमानिकेन वचनेनातिदेश

---

1. अभिधानमिति। अत आरभ्य तस्मादित्यन्तं स्वीयेव्याख्यानदेस्साकं भाष्यग्रन्थानुवादः।

१. अतो—क.।

२. किमभिधानं निवर्तयन्नुप—क.।

**उच्यते**। अत्र भाष्यकारेण—"सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इत्युदाहृत्य तत्रातिदेशेनेतिकर्तव्यताप्राप्तिं चिन्तयितुम्, अपूर्वम्, तद्भेदाधीनत्वात्तस्यास्तद्भेदम्, तत्स्वरूपं च [1]न्यायत्रयेण साधितं दर्शितम्। "यजतिस्तु द्रव्यफलभोक्तृसंयोगात्" इत्यत्र हि यागचोदनेयम्, न तु दार्शपौर्णमासिके निर्वापे गुणविधिरित्युक्तम्। यदि हि गुणविधिः स्यात्, ततो दर्शपूर्णमासापूर्वव्यतिरिक्तापूर्वाभावात् क्वातिदेशः स्यात्? यागान्तरं त्विदं चोद्यते। तत्रापि यदि कामस्य गुणत्वं[2] कर्मणश्च प्राधान्यं स्यात्, ततोऽपूर्वाभावान्नातिदेशः सिध्येत्। स्वर्गकामाधिकरणे तु कर्मणः फलसाधनत्व स्थितम्। तदपि यदि क्रियैव स्थित्वा [3]फलं साधयेत्, ततोऽप्यपूर्वं न स्यात्। सा तु भङ्गुरत्वादपूर्वद्वारेणैव फलसाधनमित्युक्तम्। तस्माद्यागेनापूर्वं कृत्वा ब्रह्मवर्चसं साधयेदिति वाक्यार्थ इति। तत्र चोदितं तृतीयानिर्दिष्टेषु ज्योतिष्टोमादिषु युक्तः फलं प्रति गुणभावः। सौर्यादिषु तृतीयानिर्देशाभावात् कथं करण[4]मिति। तत्रोत्तरम्—**किमत्र तृतीयया कार्यम्, यदा स्वभावसिद्ध [5]एव कर्मणां गुणभावः** फलं प्रतीति। तदनुभाष्याक्षिपति—**एतदयुक्तम्**। कुतः? **साध्यसाधनसम्बन्धस्य वैदिकत्वात्**। भवतु वैदिकत्वम्, ततः किमित्याह—**यथाश्रुतं तथा भवति**। वैदिको ह्यर्थो यथाश्रुत्यैव ग्रहीतव्यो न तामना· दृत्येति। तथापि किमित्याह—**न चाश्रवणे तृतीयायाः फलसाधनतां** यागः **प्रतिपद्यते**। तृतीयैव हि कारणत्वस्य[6] श्रुतिरिति तदभावे न कारणत्वसिद्धिरिति। ननु कर्मस्वाभाव्यादेव सिध्यत्यत आह—**न च सामान्यतोदृष्टम्—लौकिकं कर्म गुणभूतं दृष्टम्। अनेनापि च [7]कर्मत्वाद् गुणभूतेन भवितव्यमिति।**

---

१. न्यायत्रयसा—क.।

२. अत्र ४२-४३ पत्रयोर्भ्रंशः खपुस्तके।

३. फलं—नास्ति ग.।

४. णत्व—क.।

५. एष—पू. मु. पा.।

६. करणत्वश्रुति—ग.

७. कर्मणा—पू. मु.

सामान्यतोदृष्टस्यैवंजातीयेष्वप्रमाणत्वात्। **अतः कोऽस्य ग्रन्थस्यार्थः?** समाधत्ते—**यजेतेत्युच्चरिते** भावनावगमात् **तिस्र आकाङ्क्षाः** समुत्पद्यन्ते। **तत्र** किमित्याकाङ्क्षायां **नित्यमेव पुरुषार्थाक्षेपः**, नह्यन्यथा विधिः सम्भवतीति। नन्वेवं पुरुषार्थतैव प्रयाजादीनां स्यादत आह—**साक्षात् पारम्पर्येण** वा पुरुषार्थ आक्षिप्यते भाव्यतया। न तु साक्षादेव। तेनोपपन्नं क्रत्वर्थत्वं प्रयाजादीनामिति। एवं च सति **धातुस्तत्करणं भवति, पुरुषार्थस्य तु कर्मभूतत्वात्। अत आह** भाष्यकारः—**स्वभावसिद्धः कर्मणां गुणभाव इति**[१]। पुरुषार्थभाव्यवत्या[२] भावनया सम्बध्यमानं कर्म स्वयमपुरुषार्थस्वभावात् करणत्वेनैव सम्बध्यत इति भाष्यार्थः। **अथवा स्वर्गं प्रार्थयमानस्य** तदर्थं च **करणमभिलषतस्तृतीयया करणं निर्दिश्यते**। तेन यादृश्यां **करणविवक्षायां दर्शपूर्णमासादीनि** तृतीयया[३] **निर्दिश्यन्ते। स्वर्गं प्रार्थयमानः** केनाभ्युपायेन **कुर्यात्**। तत्रोपायत्वेन **यागं कुर्यादिति**। तथे**दृश्यामे**[४]**व विवक्षाया**मतृतीयान्ता अपि **सौर्यादयो विधीयन्ते**। तस्मात्तेषामपि फलं प्रति गुणत्वम्। स्वभावसिद्धः कर्मणां[५] गुणभाव इति। कर्माणि हि स्वभावतः करणापेक्षायां विधीयन्ते। ततो गुणभाव इति भाष्यार्थः। ननु फलमेव पुरुषैराकाङ्क्ष्यते न करणम्, दुःखात्मकत्वादत आह—**भवति हि द्वि**[६]**प्रकारस्यापि** लोकेऽपेक्षा साध्यस्य साधनस्य च। **तस्मादविरोधो** भाष्यस्य। तस्माद् यागोऽपूर्वस्य साधनम्। तेन तु कथमपूर्वं साध्यत इत्येतन्न ज्ञायते। इह यागेनापूर्वं साधयेदित्येतावदेवोक्तम्। इत्थं साधयेदितीतिकर्तव्यता यागगतव्यापारात्मिका नोक्ता। भवितव्यं च तया। सर्वत्र हि करणगतव्यापार-

---

**१. इति–नास्ति क.।**

**२. वत्यां भावनायां–क.।**

**३. तृतीयया–नास्ति क.।**

**४. वापेक्षाया–क.।**

**५. कर्मणा–क.।**

**६. द्विः प्रकारस्य–पू० मु०।**

विशेषेऽनुष्ठिते तेन कार्यं कृतं भवति नान्यथा, तद्यथा[1] परशुगतोद्यमननिपातनानुष्ठाने सति परशुना छिन्नं भवतीत्युक्त्वा भाष्यकारेणोक्तम्—**येषां चार्थानां ज्ञायत एवेतिकर्तव्यता, तेषां कर्तव्यतामात्रमुपदिश्यते यथा ओदनं पचेद् इति**। तत्र यथा पाकेनौदनः[2] क्रियते, येन पाकगतव्यापारेण सिध्यत्योदनः, तथा ज्ञातमेव। तथा निर्वर्तनमेव पाकगतो व्यापारः। निर्वर्तितमात्रोऽसावोदनं निर्वर्तयतीति[3]। पाकश्च यथा काष्ठादिभिः क्रियते तथा ज्ञातमेवाग्निसमिन्धनात्मासौ व्यापार इति। तदनुभाष्यमाक्षिपति—[4]**अयुक्तमिदम्। ओदनं [5]पचेदित्यत्रापि तिस्र आकाङ्क्षा [6]उत्पद्यन्त एव। एवं चेत्, किं केन कथमित्याकाङ्क्षायां सत्यामितिकर्तव्यतापि सम्बध्यत** एव। इयांस्तु विशेषः—**प्रत्यक्षादिना यत्र** पाक इतिकर्तव्यता **निर्दिश्यते**। प्रमाणान्तरोपलक्षणार्थं प्रत्यक्षग्रहणम्। श्रुतार्थापत्तिकल्पितेन शास्त्रेण निर्दिश्यत इत्यर्थः। **इह** तु दर्शपूर्णमासादौ **शास्त्रेण निर्दिश्यते**। पठितेन शास्त्रेणेत्यर्थः। **आकाङ्क्षात्रयं तुल्यमेव। अत ओदनं पचेद् इत्यत्र केवलः पाको नैव निर्दिश्यते**। प्रमाणान्तरकल्पितशास्त्रसमर्थितेतिकर्तव्यतायुक्त एव तु निर्दिश्यते। अतः कर्तव्यतामात्रमुपदिश्यत इत्ययुक्तमिति। समाधत्ते—**फलेन तु ग्रन्थो** योजयितव्यः। इतिकर्तव्यताविधायकं शास्त्रमितिकर्तव्यताशब्देनोच्यते फलत इत्यर्थः। [7]ततश्चायमर्थः—[8]**पचेदित्येतावत्यपि** श्रुतेन शब्देन **निर्दिष्टे कथमित्यपेक्षायां ज्ञायत एव** श्रुतार्थापत्त्या **इतिकर्तव्यताविधिः**। तेनायं भाष्यार्थः—यत्र प्रमाणान्तरेणैवेतिकर्तव्यताशास्त्रं कल्पयितुं शक्यते, तत्र प्रधानमात्रमेव प्रत्यक्षेण शास्त्रेण निर्दिश्यते। यत्र तु न शक्यते दर्शपूर्ण-

१. तद्यथा—नास्ति क.।
२. दनं—क.।
३. इति—नास्ति क.।
४. नन्वयुक्त—पू० मु०।
५. दित्युक्ते—क.।
६. विद्यन्ते—क.।
७. ततश्चायमर्थः—नास्ति क.।
८. पचेतेत्ये—क.।

मासादौ तत्र प्रत्यक्षेणैव शास्त्रेण सेतिकर्तव्यताकं प्रधानं निर्दिश्यते। सौर्यादौ च प्रधानमात्रं निर्दिश्यते। तस्मात्त[1]त्रान्यतः प्राप्तिरितिकर्तव्यतायाः प्रतीयत इति। अत्रैव सूत्रं योजयति—**यत्र सौर्यादावितिकर्तव्यता समीपे [2]नाम्नायते, तत्र कथंभावसाकाङ्क्षत्वात्** [1]**कस्याप्यन्यसम्बन्धिन्येतिकर्तव्यतया भवितव्यम्। यथा विश्वजिति किं[3]मंशसाकाङ्क्षत्वात् फलमनुषज्यते।** अध्याह्रियत इत्यर्थः। **एवमिहापीति**कर्तव्यता [4]यतः कुतश्चिदध्याहर्तव्येति।

कः पुनरत्र पूर्वः पक्षः, यन्निवृत्त्यर्थं सूत्रमत आह—**इदं सूत्रमुत्तरविवक्षार्थम्।** नात्र पूर्वपक्षेण कार्यमस्ति। **न्यायादेव** हि स्पष्टादेत**ज्ज्ञायते। भवितव्यमिति**कर्तव्यतयात्रेति। नहि करणमितिकर्तव्यताशून्यं किञ्चिदस्तीति।

येऽपि तावद्यागं कुर्यात्, [5]कृतेन च तेन स्वर्गो भवति इत्येवं वाक्यार्थं मन्यन्ते, तेषां[2] मते यद्यपि यागगतस्य व्यापारस्य कृतिरूपस्य निष्पादनापरपर्यायस्य निर्दिष्टत्वाद् द्रव्यादिभिश्च यागकृतेर्ज्ञातप्रकारत्वान्न स्वरसत इतिकर्तव्यताकाङ्क्षास्ति, तथापि [6]तेऽपि शिष्टाचारप्रामाण्यादितिकर्तव्यतामनुमन्यन्ते। किं पुनर्ये यागेनापूर्वं कुर्यादिति मन्यन्ते। तन्मते हि यागगतव्यापारविशेषानिर्देशादितिकर्तव्यतापेक्षत्वात् प्रमाणान्तर[रत]श्चानवगमात् साकाङ्क्षं वाक्यमवश्यमितिकर्तव्यता[7]शास्त्रेण पूरयितव्यमिति [8]विस्पष्टमेव। तस्मादुत्तरविवक्षार्थमेवैतत्।

---

1. कस्यापीत्येव सर्वत्र पाठः। तथाप्यन्यसंबन्धीति समासैकदेशेऽन्येत्यत्रान्वयासंभवाद् अन्यस्येति व्यस्तपाठेन भाव्यम्। कस्येत्यत्र तस्येति वा भाव्यम्।
2. तेषामिति। प्राभाकराणामित्यर्थः। तन्मते हि उत्पत्तिविधावपि धात्वर्थस्य कर्मत्वेनैवान्वयः।

१. त्र नान्यतः—क.।
२. नाम्नाता—क.।
३. किमंशस्य—क. ख.।
४. यतः—नास्ति ग.।
५. कृतेन—नास्ति क.।
६. तेऽपि—नास्ति क.।
७. मात्रेण—क.।
८. स्पष्टमेतत्—ख.।

**इदं तु** विचार्यते—**किमसौ लौकिकी वैदिकी वेति** । तत्र दृष्टप्रवृत्ते-र्लौकिक्या भूयोदर्शनेन यागव्याप्त्यवगमात् सैव सौर्यादावप्य[1]नुमीयते । वैदिकी तु न दृष्टप्रवृत्तिः । [2]किञ्चासौ प्रकरणादिभिर्दर्शपूर्णमासादिषु निबद्धा तद्विरोधान्नान्यत्र नेतुं शक्यत इति पूर्वः पक्षः ॥ १ ॥

तत्र सिद्धान्तैकदेशी प्रयाजादिदर्शनेन वैदिक्याः प्राप्तिमाह । तस्योत्तरं पूर्वपक्षसूत्रम्—

## अपि वाऽन्यायपूर्वत्वाद् यत्र नित्यानुवादवचनानि स्युः ॥५॥

अत्र भाष्यकारेण नात्र प्रयाजानुवादेन कृष्णलहोमविधानम् , किन्तु वचनमिदं प्रयाजा[3]नामित्युक्त्वा, **कथं पुनः प्रयाजाः कृष्णलहोमश्च युगपच्छक्या** [4]**विधातुम् , भिद्येत हि तथा वाक्यमिति** चोदयित्वोक्तम्—**एवं तर्हि न प्रयाजान् वक्ष्यति, प्रयाजेषु कृष्णलहोमं विधास्यति । न चासत्सु प्रयाजेषु** तद्विशिष्टः **कृष्णलहोमः शक्यते** [5]विधातुमिति **अर्थात् प्रयाजान् करिष्यतीति** । तदनुभाष्याक्षिपति—**अयुक्तमिदम् , विशिष्टविधाने** हि सति **न भवति** तत्र[6] **वीप्सा,** उद्देश्यविषयत्वाद्वीप्सायाः । उद्देशस्य [7]त्ववगतार्थ-विषयत्वात् । **यथा ग्रामो ग्रामो रमणीय इत्यवगते ग्रामार्थे वीप्सा,** [8]एव-मिहाप्यवगते प्रयाजार्थे वीप्सा भवितुमर्हति । **अनवगतश्चात्र** विशिष्टविधिपक्षे **प्रयाजार्थः,** तस्यापि तदा **विधेयत्वात्** । तत्रावगतार्थगोचरा वीप्सा विरुध्येत ।

---

१. अपि—नास्ति क. ।

२. किन्तु—क. ।

३. जादीनां—क. ।

४. वक्तुं—क. ।

५. वक्तुं—क. ।

६. तत्र—नास्ति ख. ग. ।

७. चा—ख. ग. ।

८. एवमिहाप्यवगते प्रयाजार्थे वीप्सा—नास्ति क. ।

**तस्मादन्यथा सूत्रं वर्ण्यते—"प्रयाजे प्रयाजे कृष्णलं जुहोति" इति** नानेन प्रयाजा विधीयन्ते, समिधो यजतीत्येवमादिभिर्दर्शपूर्णमासयोर्विहितत्वात्। एवं चेद् यत्र प्रयाजा विद्यन्ते तत्र प्रयाजे[1] प्रयाजे कृष्णलं जुहोतीत्यु-**पपद्यते** गुणविधिः। वीप्सा च प्रयाजानामुद्देश्यत्वादुपपद्यते। तेन—"अर्द्धं बर्हिषो लुनाति" इतिवदिदमपि यत्रेत्यस्यैवोदाहरणम्। वचनो-दाहरणं तु पृषदाज्येनानुयाजान् यजतीत्यादि द्रष्टव्यमिति। तस्माद् लिङ्गस्या-साधकत्वात् दृष्टप्रवृत्तिर्लौकिक्येवेतिकर्तव्यता। अत्रानन्तरम् अथ कस्मान्नोभयोः प्रवृत्तिरित्याशङ्क्य, एकया नैराकाङ्क्ष्यान्नोभयप्रवृत्तिर्युक्ता। तस्माल्लौकिक्ये-वेत्युक्त्वा पुनः शङ्कितम्—

**भागित्वात्तु नियम्येत गुणानामभिधानत्वात् सम्बन्धानभिधानवद् यथा धेनुः किशोरेण ॥७॥**

यथैव लौकिकी यागान्वयिनी दृष्टा, तथैव वैदिक्यपि दर्शपूर्णमासान्वयिनी दृष्टैव। तेनोभयोस्तुल्ये भागित्वे लौकिक्येव नियन्तुं न शक्यते, वैदिक्येव प्रया-जादिलिङ्गदर्शनेन नियम्यते। ननु न दर्शनमात्रं प्रापकं भवितुमर्हतीति। सत्यं न प्रापकम्, नियामकं तु भवत्येव। अवश्यं ह्यत्र कयाचिद् भवितव्यम्। उभे अपि च[2]यागान्वयिन्यौ दृष्टे भागिन्यौ। तयोर्लिङ्गबलाद्वैदिकी नियम्यते ॥ ७ ॥

तत्रोत्तरम्—

**उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात् ॥ ८ ॥**

समा हि प्रयाजा[3]नुयाजादयः, सर्वेषां दर्शपूर्णमासाङ्गत्वात्। न त्वनुयाजादयः प्रयाजाङ्गम्, यतः प्रयाजप्रवृत्त्या प्रवर्तेरन्। [4]अतो न प्रयाजादिदर्शनमात्रात्[5]

---

१. प्रयाजे–नास्ति क.।

२. यागापूर्वान्व–क.।

३. नुयाजा–नास्ति क.।

४. तत्र–क.।

५. मात्र–नास्ति क.।

सकल[1]दार्शपौर्णमासिकविध्यन्तप्राप्तिः शक्याऽध्यवसातुम् । ननु भागित्वं प्रापकम्, लिङ्गं तु नियामकमात्रमित्युक्तम् । सत्यमुक्तम्, न तु भागित्वेन प्राप्तिर्वैदिक्याः सम्भवति । भूयोदर्शनगम्या हि व्याप्तिर्न सकृद्दर्शनगम्या । लौकिकी च बहुशो यागान्वयिनी दृष्टा । तेन सैव सौर्यादावप्यनुमातुं शक्यते, न वैदिकी, तस्याः दर्शपूर्णमासमात्रान्वयदर्शनात्, प्रकारणादिभिश्च तत्रैव निबद्धत्वात् । असत्यां च प्राप्तौ न लिङ्गं क्षममिति प्रापकान्तरं मृग्यम् । न च तदस्ति ॥ ८ ॥

ननु प्रधानविधिरेव कस्मान्न प्रापकः ? स ह्यनितिकर्तव्यताकप्रधानासम्भवात् सहैव तया प्रधानं विधत्ते । का पुनस्तेन विधीयत इति सन्देहे वाक्यशेषस्थानीयात् प्रयाजादि[2]दर्शनाद् वैदिकी निर्णीयते । तत्रोत्तरम्—

**उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥**

[3]न सौर्यं चरुं निर्वपेदित्यनेनाङ्गानि शक्यन्ते वक्तुम्, अनुक्तानां च विधानं न सम्भवति । यदि हि[4] पदान्तरेण वाक्यान्तरेण वा श्रुतेन वा[5] कल्पितेन वाङ्गान्युपस्थाप्येरन्, ततः प्रधानविधिना विधीयेरन् । नत्वेवमस्ति । यदि तु प्रधानवचनेनैव शब्देनाङ्गान्य[6]प्युच्येरन्, ततस्तेषामपि फलसम्बन्धात् प्राधान्यं स्यान्नाङ्गत्वम् । तस्माद् दृष्टप्रवृत्तित्वाल्लौकिक्येवेतिकर्तव्यतेति ॥ ९ ॥

**विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथा हि लिङ्गदर्शनम् ॥१०॥**

**कथं[7]भावाकाङ्क्षायां** यत्र सौर्यादिचोदनायां तद्व्यावृत्तिक्ष**मेतिकर्तव्यता** समीपे **नाम्नायते । तत्र कथंभावस्याव्यावृत्तत्वादियं चोदना स्वस-**

१. पूर्णमास–क. ।

२. आदि–नास्ति क. ।

३. नहि–क. ।

४. हि–नास्ति क. ।

५. वा–नास्ति क. ।

६. अपि–नास्ति ख. ग. ।

७. भावापेक्षा–क. ।

**दृशं वाक्य**मुपमानेन **बुद्धावुपस्थापयति । तद्वाक्यमवबोधितं** सम्बन्धा-**द्वाक्यार्थमवबोधयति । स च वाक्यार्थः फलकरणेतिकर्तव्यता-संयुक्तः । तत्र फलकरणे** त्विह सौर्यादि[1]चोदनाया**मनाकाङ्क्षितत्वान्न सम्बध्येते । इतिकर्तव्यता त्वपेक्षिता सम्बध्यते ।** केन प्रकारेण सम्बध्यत इत्यपेक्षायामुक्तमेव प्रकारं संक्षिप्य दर्शयति—**उपमितलक्षितप्रापणेन** उपमितेन वाक्यान्तरेण या लक्षितेतिकर्तव्यता तत्प्रापणेनेति । ततः किमित्याह—[2]**सदृशं च वैदिकेन भवति, न तु लौकिकेनेति ।** वैदिकस्य हि सौर्यादि[3]-वाक्यस्य वैदिकत्वसामान्याद्वैदिकमेव सदृशं शीघ्रं[4] बुद्धावुपतिष्ठते, न तु[5] लौकिकम् । अतस्तस्य नोपमानं सम्भवति । ननु मा भूदुपमानम्, अनुमानं तु भविष्यति दृष्टप्रवृत्तित्वात्[6] । न, व्यभिचारात् । दृष्टा हि गणयागादयोऽनेवमितिकर्तव्यताकाः । तस्मान्नानुमानम्, न चोपमानमसदृशत्वात् । ननु लौकिक्यप्यनुमितवेदविहितत्वाद्वैदिकतुल्यैव ? सत्यम् । तस्यास्तु वैदिकत्वं परप्रत्ययादनुमीयमानं विलम्बितं भवति । इतरस्यास्तु शीघ्रं प्रत्यक्षेण वैदिकत्वमवगम्यते । तस्मात्तदेव शीघ्रमुपमीयते । किञ्च, प्रत्यक्षवेदविहितस्य प्रत्यक्षवेदविहितमेव सुसदृशम्, नानुमितवेदविहितम् । तस्मादपि वैदिकी ।

ननु लौकिक्यपि केषाञ्चित् प्रत्यक्षवेदमूलैव, नित्यानुमेयवेदमूलत्वनिराकरणात् । अतः कथं वैदिकी सदृशी, न लौकिकीति ? उच्यते । सत्यमेतत् । तथापि वैदिक्येव सदृशी । कथम् ? वैतानिककर्माधिकारेण हि[7] वेदत्रयं प्रवर्तते । तन्मध्ये तु प्रसङ्गाद-

---

१. आदि—नास्ति क. ।

२. सादृश्यं—पू . मु. ।

३. आदि—नास्ति क. ।

४. शीघ्रं—नास्ति क. ।

५. त्ववैदिकं—क. ।

६. नानैकान्तिकत्वात् । तथा हि गुणयागादयो नैवमिति—अधिकः क. ।

७. हि—नास्ति क. ।

न्यान्युच्यन्ते। तत्र यान्यधिकृत्य वेदः प्रवर्तते, तेषामनेनैवावान्तरसामान्येन वितान-सम्बन्धित्वेन च सौसादृश्यमस्ति। किञ्च, लौकिकी शिष्टाचाराल्लौकिकेऽग्नौ कर्तव्या, सौर्यादयस्त्वाहवनीयादिषु। तत्राङ्गप्रधानवै[1]सादृश्यं विना वचनेनापद्यमानं वैगुण्यं जनयेत्। तस्माद्वैदिक्येवेतिकर्तव्यता सौर्यादिष्वतिदिश्येतेति। इतिकर्तव्यताशब्देन यागगतो व्यापारः प्रकाराख्यः कथ्यते। स च पदार्थैर्यथायथं दृष्टाऽदृष्टरूपो[2]-पकारसम्पादनात्मा। सोऽयं विशिष्टः प्रकारः सौर्यादिषु दर्शपूर्णमासादिभ्यः प्रकृतिवच्छब्देन वाक्यशेषतया कल्पितेन प्राप्यते। ततस्तदुत्पादकाः पदार्था[3]-वान्तरोपकाराः पदार्थाश्च[4] तद्बलेनैव क्रमेण[5] प्राप्यन्ते, न तु तेषां पृथगतिदेशः; विशेषणभूतत्वात्। तन्मुखेन च तत्प्रतिपादकं ब्राह्मणं विध्यन्तापरनामधेयं सौर्यादि-वाक्यानां शेषो भवति। तथा हि—"समिधो यजति" इति, "व्रीहीनवहन्ति" इति प्रकृतावयमर्थः—समिदुपकृतो ऽवघातवितुषीकृतव्रीहिसम्पादितपुरोडाशसाधनकश्च[6] दर्शः कार्य इति। ततः सौर्योऽपि तद्वत् कर्तव्य इत्युक्ते समिदुपकृतोऽवघातवितुषी-कृतव्रीहिसम्पादितचरुसाधनकश्च सौर्य इत्युक्तं भवति। ततश्च समिदादिशास्त्रं सौर्यशास्त्रस्य वाक्यशेषः सम्पद्यत इत्यनेनाभिप्रायेण भाष्यकारेण पौरोडाशिकं ब्राह्मणं सौर्यादीनां वाक्यशेष इत्युक्तम्। अध्याहाराद् व्यवहितकल्पना ज्यायसीति। अत्यन्ताप्रतिपन्नशब्दकल्पनातः कथञ्चित् सादृश्यद्वारेणोपस्थितं प्रदेशान्तरे श्रुतमपि कार्यद्वारेण वाक्यशेषतया कल्पयितुं युक्तमित्यर्थः। अप्रतिपन्नकल्पनातः प्रतिपन्न-सम्बन्धो ज्यायानिति चैतावता तुल्यत्वेन "वसन्ताय कपिञ्जलान्" इत्युपन्यासः,

---

१. वैदेश्यं–ख. ग.।
२. रूप–नास्ति क.।
३. पदार्था–नास्ति क.।
४. च–नास्ति क.।
५. क्रमेण–नास्ति क.।
६. च–नास्ति क.।

परस्तु कार्यद्वारेण प्राप्तिमजानानः स्वरूपेणैव सौर्यसम्बन्धमुक्तं मत्वा, 'यदि तद्[1] ब्राह्मण[2]मन्यस्यान्तः कल्प्यते, [3]तत्र न भवति सकृदुच्चरितस्यानेकसम्बन्धानुपपत्तेः। तदिदं मयूरनृत्तमापद्येतेत्याह। सिद्धान्तवादी तु—कार्यद्वारेणानुमानिकी[4] प्राप्तिः। नासौ प्रत्यक्षं प्रकृतिसम्बन्धं विरुणद्धि, तस्य[5] तदपेक्षत्वादित्याह—नैष दोष इति। परस्तु मा नामानुमानेन प्रत्यक्षं बाधि, प्रत्यक्षेण तु प्रकृति-सम्बन्धेनानुमानिको विकृतिसम्बन्धो बाध्यतामित्याह। सिद्धान्तवादी त्वाह—स्यादेतदेवं यदि विरोधः स्यात्, न त्वस्ति विरोधः, तत्रापि भविष्यतीहापीति[6]। अयमभिप्रायः—यदि स्वरूपेणैव ब्राह्मणं विकृत्यापि सम्बध्येत इत्थं [7]दर्शेन कुर्यात्, इत्थं सौर्येण कुर्यादिति, ततः सकृदुच्चरितस्यानेकसम्बन्धानुपपत्तेर्विरोधः स्यात्। विरोधे च प्रत्यक्षेणानुमानं बाध्येत। न त्वेतदस्ति। किन्तु प्रथमोपनिपाते प्रकृत्यैव सम्बध्य ब्राह्मणं तत्रैव स्वार्थं विधाय निवृत्ताभिधानव्यापारं भवति—इत्थं कुर्यादिति। पश्चात्तु विकृतिचोदनायां साकाङ्क्षायां प्रकृतिवच्छब्देन वाक्यशेष-भूतेन प्रकार[उपकार]मुखेन प्राकृते[8] पदार्थजाते प्राप्ते तत्प्रतिपादकस्यापि ब्राह्मणस्य तन्मुखेन [9]तच्छेषता भवन्ती न प्रकृतिसम्बन्धेन विरुध्यते। तस्माद्वैदिकीति-कर्तव्यता सौर्यादिष्विति सिद्धम्॥ १०॥

[ २—गवामयनिकज्योतिरादिष्वैकाहज्योतिरादिधर्मानुष्ठानाधिकरणम् ]

## द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकारा-मात्तदाख्यं स्यादेकाहवत्॥ १३॥ पू०

१. तत्—नास्ति क.।
२. मन्यतः—क.।
३. इतरत्र—क.।
४. मानादिना—क.
५. तस्य—नास्ति ख. ग.।
६. हापि—नास्ति क.।
७. दर्शेन कुर्यात्, इत्थं—नास्ति क.।
८. प्राकृते—नास्ति क.।
९. तच्छेषतां नीतस्य प्रकृतसंबन्धो न—क.।

**चोदकनामधेययोः** प्रतिपादितप्रामाण्ययो**र्बलाबलं चिन्त्यते**। चोदकशब्देनानुमानिकमतिदेशकं वचनमुच्यते। तत्राहर्गणमध्यगतानि नामान्युदाहरणम्। **तत्र चोदको बलवान् नामधेयात्। कुतः**[1] **? फले विधीयमान इतिकर्तव्यतामाकाङ्क्षति। गणश्च फले विधीयते।** [2]**अतस्तत्र गणत्वसामान्याद् द्वादशाहिको विध्यन्तः।** प्रत्येकं त्वेकाहानां फलसाधनत्वाभावान्नेतिकर्तव्यताकाङ्क्षास्ति, यतो नामातिदेशः स्यात्। यद्वैवं व्याख्या प्रतिलब्धभाव्या भावना कथंभावमाकाङ्क्षति। तल्लाभ[3]श्च प्रयोगवाक्येन। तेन तत्र[4] साकाङ्क्षा। तत्र च नामधेयं ज्योतिरादि न श्रूयते, यतोऽतिदेशकं स्यात्। यत्र चोत्पत्तिचोदनासु नाम श्रूयते, तत्र फलाभावान्नेतिकर्तव्य[5]ताकाङ्क्षास्ति। तस्मादिह नामधेयबाधेन चोदकस्यैवाऽनुग्रहः। अथवा विरोध [6]एवात्र चोदकनामधेययोर्नास्ति। **चोदकप्राप्तेभ्यो यदधिकं ज्योतिष्टोमाद्धर्मजातं** स्तोत्रशस्त्रमाम्नायते, **तदपेक्ष्य गौरायुरित्येवमाद्याः संज्ञा** एकाहेषु प्रवृत्ताः। सत्स्वधिकेषु धर्मेषु भावादसत्सु चाभावादधिकमेव धर्मजातं नामधेयानां वाच्यम्, न क्रतुरित्यर्थः। तेनेहापि गवामयने ज्योतिरादि **नामधेयं श्रूयमाणं तद्विशिष्टान् धर्मानभिधेयभूतानतिदिशति।** ते च केचन द्वादशाहिकैरविरुद्धा मत्पक्षेऽपि क्रियन्त एव। यत्तु विरुद्धं पडुपसत्त्वादिकम्, तन्नामधेयान्न प्राप्यते। क्रतुनामत्वे हि सति तद्धर्माणां सर्वेषामतिदेशः स्यात्, न तु तदस्तीति। "ऐकाहिकमधिकागमात्तदाख्यं स्यात्" इत्यस्यापरां व्याख्यामाह—**अथवा तत्र** मुख्ये ज्योतिरादाव**धिक**[7]**धर्मागमान्नामधेयं** प्रवृत्तम्। इहापि

१. 'फले' 'इत्यारभ्य' त्वेकाहानां इत्यत्र—नास्ति ग.।

२. अतोऽहर्ग—ख.।

३. तेन—नास्ति क.।

४. यत्रैव साकाङ्क्षा तत्र न नामधेयं श्रूयते—क.।

५. र्तव्यतास्ति—क.।

६. अत्र नास्ति—क.।

७. धर्म नास्ति—क.।

गवामयनेऽधिकागमेनैव सामान्येन गौणं नामधेयं **भविष्यति**[1]। इहापि द्वादशाहादभिप्लवोऽन्वहं भवतीत्याद्यधिकधर्मप्राप्तिरस्त्येव। **अस्मिन्** [2]**पक्षेऽनुवादमात्रं नामधेयं नातिदेशकम्**। अतो गणत्वसामान्यात् केवलो द्वादशाहिको विध्यन्तः। न त्वैकाहिकं किञ्चिदप्य[3]स्ति। एवं च द्वादशाहिकं [क] द्वादशोपसत्तादिदर्शनमुपपन्नं भवति॥ १३॥

## न वा क्रत्वविधानादधिकानामशब्दत्वम्॥ १५॥

यदुक्तं गणस्य फलसाधनत्वाद्द्वादशाहिक एव विध्यन्त इति, तत्राह—**उत्पद्यमानमेव कर्म** किं केन कथमित्याकाङ्क्षात्रयसम्बद्ध[4]**मुत्पद्यते**। उत्पत्तिश्च पृथगेव यागानाम्, न सङ्घातस्य। यथापेक्षं च फलसम्बन्ध इति यागानामेव फलसाधनत्वमितिकर्तव्यतान्वयश्च, न तु गणस्य। एतेनोत्पत्तिवाक्येनानपेक्षितत्वान्नेतिकर्तव्यतातिदेशः[5] सम्भवतीतीदमपि परिहृतम्। तथापि किं नामधेयस्य प्राबल्यमित्याह—**तत्रास्मिन्नुत्पत्तिवाक्ये नामधेयं**[6] **श्रूयमाणं लक्षणया शक्नोतीतिकर्तव्यतामवगमयितुमात्मीयाम्। चोदकस्तूपमितिलक्षितप्रा**[7]**पणेनेतिकर्तव्यतामवगमयति। तत्र न किञ्चित्प्रत्यक्षम्।** उपमानार्थापत्तिभ्यां तु कल्प्यं वचनम्। नामधेयं तु प्रत्यक्षं बलीय इति। यत्त्वधिकधर्माभिधायकं नामधेयं न क्रतुनामधेयमित्युक्तम्, तत्राह—**यागसामानाधिकरण्यार्थं** [8]**यागस्य च**[9] **नामधेयमिदम्, न धर्माणाम्**। यदप्यधिक-

१. इत्याह अधिकः—क.।

२. पक्षे·····सामान्यात् नास्ति—क.।

३. अपि नास्ति—क.।

४. द्धमेवो—क.।

५. देशासम्भव इति—ख. ग.।

६. प्रत्यक्षं—क.।

७. प्रायो नेति—क.।

८. यागस्यैव—ख।

९ च—नास्ति क.।

**सामान्याद्** गौणमिदमनुवादमात्रमित्युक्तम्, तदपि न किञ्चिदनुवादमात्रस्यानर्थक्यात्। ननु[1] धर्माभिधायित्वेऽपि[2] लक्षणया यागसामानाधिकरण्यं भविष्यत्यत आह—**क्रतुलक्षणा च दोषः**। नहि सम्भवति मुख्यत्वे लक्षणा युक्तेति[3] ॥१५॥

यत्तु द्वादशोपसत्त्वं दृश्यत इत्युक्तम्, तत्र उत्तरसूत्रम्—

**प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥**

अत्र भाष्यकारेण-गवामयने प्रथमस्य प्रायणीयस्याह्नो द्वादशाहप्रकृतित्वाद् द्वादशोपसत्त्वं धर्मः, तस्य च मुख्यत्वाद् भूयोविरोधेऽपि च[4] मुख्यानुग्रहस्य "भूयसां स्यात् स[5]धर्मत्वम्", "मुख्यं वा पूर्वचोदनाल्लोकवत्" इत्यत्र वक्ष्यमाणत्वादुपपन्नं लिङ्ग[6]दर्शनमित्युक्तम्। तदाक्षिपति-**द्वादशाहिकं प्रथममहरित्येवमादि पूर्वचोदनाल्लोकवदित्येवमन्तोऽयुक्तोऽयं ग्रन्थः**। तथाहि—यत्तावद् द्वादशाहिकं प्रथममहः प्रायणीय[7]मित्युक्तम्, [8]तदयुक्तम्। **प्रायणीयशब्दो** हि **यौगिकत्वान्नातिदेशक इत्युक्तम्। तस्मात् कुतोऽत्र द्वादशोपसत्ताप्राप्तिः**। अथासत्यपि नामातिदेशे चोदकादेव गणान्तःपातिनः प्रायणीयस्य द्वादशोपसत्त्वं द्वादशाहात् प्राप्यत इत्युच्यते, तदपि न युक्तम्, नामधेयादेव[9] ज्यौतिष्टोमिकधर्मप्राप्तेः। ईदृशी हि गवामयने प्रायणीयोत्पत्तिः—"ज्योतिष्टोमो वैश्वानरोऽतिरात्रः प्रायणीयमहर्भवति ज्योतिरेव पुरस्ताद्दधते" इति। **अतः प्रायणीया-**

१. वादधर्मा—ख.।
२. अपि—नास्ति क.।
३. इति—नास्ति क.।
४. च—नास्ति क.।
५. स्वधर्म—ख. ग.।
६. लिङ्ग—नास्ति क.।
७. मित्युक्तं—तदयुक्तं प्रायणीय—नास्ति क.।
८. तदयुक्तं—नास्ति ख.।
९. देवहि ...... धर्मप्राप्तिः—क.।

तिरात्र **उभयोरपि** द्वादशाहगवामयनयोर्ज्योतिर्विध्यन्तो **ज्योतिष्टोम-विध्यन्तः**, न तु मिथः प्रकृतिविकारभाव इति[1]। [2]यदपि भूयोविरोधेऽपि मुख्य-स्यानुग्रहो वक्ष्यत इत्युक्तम्, तदप्ययुक्तमित्याह—**भूयसां स्यात् सधर्मत्वमिति नेदं पूर्वपक्षसूत्रम्। किं तर्हि यत्र बहूनामल्पानां च धर्म[3]विरोधस्तत्र** जघन्यानामपि भूयसामेवा**नुग्रहो** युक्त इत्येवं सिद्धान्तसूत्रमेवैतत्। 'मुख्यं वापूर्व-चोदनात्' इत्येतत्त्वधिकरणान्तरमित्याह—**यत्र** तु[4] **तुल्यसंख्यानि** विप्रतिषिद्ध-धर्माणि भवन्ति, तद्विषयं **"मुख्यं वापूर्वचोदनाल्लोकवत्"** **इति** सूत्रम्। [5]न तु पूर्वस्मिन्नेव सिद्धान्तसूत्रम्। किमित्येवं वर्ण्यते, तत्राह—**नहि न्यूनसंख्यं मुख्यत्वेन कारणेन भूयांसि समर्थं बाधितुम्।** स्वयमेव च भाष्यकारोऽ-विकरणभेदमेव तत्र[6] वक्ष्यति। "ऐकाधिकरण्यं त्वेके मन्यन्ते" इति परमतमेव वक्ष्यति। **तस्मादन्यथा वर्ण्यते—भूयसा[7]मत्र द्वादशाहिको विध्यन्तः प्राप्तोऽ[8]ल्पानामैकाहिकः।** [9]**अस्यार्थः**—द्वादशाहिको विध्यन्तो द्वादशोपस-त्ताख्यः क्रियमाणो भूयसां सर्वेषामह्नां साद्गुण्यं करोतीति। येऽपि त्र्युपसत्का यागास्तेऽपि[10] हि न विगुणा भवन्ति, द्वादशसु तिसृणामन्त[11]र्भावात्। त्र्युपसत्त्वं

---

१. इति नास्ति—क०।

२. यद्यपि—क०।

३. धर्म नास्ति—क०।

४. तु नास्ति—क०।

५. न तु···सूत्रं नास्ति—क०।

६. तत्र नास्ति—क०।

७. मेवात्र—क०।

८. न्यूनानां—क०।

९. अस्यार्थः नास्ति—ग०।

१०. पि नागुणा—क०।

११. मन्तः नास्ति—क०।

त्वल्पानां केषाञ्चिदेवैकाहिकानां साद्गुण्यं करोति, न सर्वेषाम्। **तत्र भूयसामनुग्रहो युक्त इत्यधिकप्रवृत्त्या नियतस्य** द्वादशोपसत्त्वस्य **लिङ्गदर्शनमिति सिद्धम्**। अवश्यं चैवमेव व्याख्येयम्। मुख्यानुग्रहे हि[1] मुख्यस्य प्रायणीयस्य नामातिदेशेन ज्यौति[2]ष्टोमिकधर्मप्राप्तेर्द्वादशोपसत्त्वदर्शनं नावकल्पते ॥ १९ ॥

तस्मादैकाहिको धर्म एकाहेषु प्रवर्तते।
प्रत्यक्षं नामधेयं हि चोदकाद्बलवत्तरम् ॥

इत्युपाध्यायश्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
**सप्तमाध्यायस्य चतुर्थः पादः ॥**

## समाप्तश्च सप्तमोऽध्यायः ॥



---

१. हि नास्ति–क० ।

२. ज्योतिष्टोम–क० ।

## पार्थसारथिमिश्रविरचिते

# तन्त्ररत्ने

## अष्टमोऽध्यायः

[ १—विशेषातिदेशप्रतिज्ञाधिकरणम् ]

**अथ विशेषलक्षणम् ॥ १ ॥ सि०**

विध्यन्ताधिकरणे वैदिकीतिकर्तव्यता सौर्यादिषु सादृश्यात् प्रवर्तत इति [1]सामान्येनोक्तम् । इदानीन्तु तद्विशेषश्चिन्त्यते । अत्र भाष्यकारेण संशयोपन्यासः कृतः । तमनुभाष्याक्षिपति—**किमेकस्मिन् कर्मणि सर्वकर्मसु धर्मातिदेशः, उताहो नैकस्मादि**त्यस्य ग्रन्थस्य यदि तावदयमर्थः—**एकस्मिन् कर्मणि** दर्शपूर्णमासादौ **ये धर्माः समाम्नायन्ते, ते सर्वकर्म**स्विष्टिपशुसोमादिष्वति**दिश्यन्ते , उताहो नैकस्मात्**[2] **सर्वकर्मस्वतिदेशः,** किन्तु कतिषुचिदेवेति । सोऽयमयुक्तः । कथम् ? **एतस्मिन्** हि **ग्रन्थार्थे** यद्यपि **न्यायो न विरुध्यते,** पूर्वोत्तरपक्षयोर्न्यायस्य सद्भावात् । सम्भवति ह्येकस्माद्बहुष्वतिदेशः । तत्र किं सर्वेषु भवत्युत कतिषुचिदेवेति युक्तः संशयः । किन्तु **परस्तु ग्रन्थ** एकेन निराकाङ्क्षीकृत इत्यादि**र्न सम्बध्यते** [3]**इतरेण** संशयग्रन्थेन[1] । **यदि ह्येकस्यां**

1. संशयग्रन्थेनेति । यस्य ग्रन्थस्य 'किमेकस्मिम् कर्मणि' इत्यादेरर्थ इदानीं विचार्यते, तेन ग्रन्थेनेत्यर्थः । अस्मिन् संशयग्रन्थे हि किं सर्वेष्वतिदेशः, उत केषुचिदिति संशयो दर्शितः । परेण तु ग्रन्थेन सर्वेभ्योऽतिदेशो निराक्रियत इत्यसङ्गतिरिति भावः ।

१. सामान्यातिदेशेनोक्तम्—ग० ।

२. नैकस्मिन्—ग० ।

३. अनन्तरेण—ग० ।

विकृतौ सर्वधर्मातिदेश इत्ययं पक्ष आश्रितः स्यात्, तत इदमुत्तरं युज्यते एकेन विध्यन्तेन निराकाङ्क्षीकृते कर्मणि द्वितीयस्य प्राप्तिर्नास्तीति, नान्यथा। अथैवं वर्ण्यते—एकस्मिन् कर्मणि सर्वकर्मसु ये कृता धर्मास्तेषामतिदेशः, उताहो नैवम्; किन्त्वेकस्मादेवैकस्मिन् कर्मण्यतिदेश इति, तथापि न युक्तम्। सर्वकर्मधर्मातिदेश इत्ययं पक्षो निराकृतो विध्यन्ताधिकरणे। तत्र हि "अथ[1] कस्मादुभे अपीतिकर्तव्यते लौकिकी वैदिकी च सह न प्रवर्तेते? इत्याशङ्क्य "मिथो विप्रतिषेधात्" इत्यनेन सूत्रेण निराकृतोऽयं पक्षः, एकया निराकाङ्क्षीकृते द्वितीया न प्रवर्तते प्रमाणाभावात्" इति। तस्मात् सर्वधर्मातिदेश इति निर्मूलोऽयं पक्षो न निराकरणार्ह इत्ययुक्तोऽयं भाष्यकारीयः संशयः। तस्मादीदृशः संशयो युक्तः—किमनियमेन यस्य कस्यचित् सकाशादितिकर्तव्यता प्रवर्तते, उतास्ति कश्चिन्नियम इति। तत्र नियमप्रमाणाभावात् सर्वासां वैदिकत्वाद् अनियम इति पूर्वः पक्षः। उत्तरस्तु नियमेनैवैका प्रवर्ततेऽनियमे ह्यनवस्थितः शास्त्रार्थः स्यात्। तस्मान्नियमः। अथ विशेषलक्षणमित्येकस्मान्नियता[1] प्रवर्तत इत्यर्थः। कथमयमर्थ इत्याह—विशेष 'इत्यसाधारण-[ण्य] मुच्यते। ततः किमित्याह—यदि [2]चानियमेन प्रवर्तेत, ततोऽसाधारण्यं न स्यात्। आसाधारण्याभावाच्च विशेषो न स्यात्। सर्वेषां हि प्राप्तौ सत्यामेकस्येतरेभ्यो न कश्चिद्विशेषः स्यात्। तस्माद्विशेषशब्देनासाधारणा[ण्या] भिधायिना नियतैवैका प्रवर्तत इत्ययमर्थोऽभिधीयते।

अथवान्यः सूत्रार्थः। कोसावित्याह—विशेषाद्विशेषस्य धर्माः प्रवर्तन्त इति ॥ १ ॥

सिद्धमेतत् न प्रतिपाद्यम्। कतरस्माद्विशेषात् कतरस्येत्यत आह—

---

1. 'नियता' इत्यस्य स्थाने 'नियमेन' इति पूनामुद्रितो मूलपाठः श्लिष्टः, प्रक्रमानुरोधात्।

१. 'इति' नास्ति–ग०।

२. 'वा' इति पू० मु० पाठः।

[ २—सादृश्यविशेषेण नियतप्रकृतितो धर्मातिदेशाधिकरणम् ]

## यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥ सि०

**संशयस्तु नैव कार्योऽस्मिन् पक्षे,** किन्तु विशेषाद्विशेषस्य धर्माः [१]इत्येतमर्थं सिद्धमेवाङ्गीकृत्य तस्य विशेषस्य लक्षणं चिह्नमभिदध्महे। यस्य यत्र लिङ्गं तस्मात्तत्र धर्माः प्रवर्तन्त इत्येकमिदं **सूत्रं** चिह्नप्रतिपादनार्थमिति। यस्य लिङ्गं **"[२]तस्यार्थस्य लिङ्गस्य तेन[३] विध्यन्तविशेषेण संयोगोऽनुभूतपूर्वः। संयोगिनोश्चान्यतरो दृश्यमान इतरमदृश्यमानमनुमानाद् बुद्धौ सन्निधापयति" इत्ययुक्तोऽयं** [४]भाष्यग्रन्थः। **कथम्? यथाग्निधूमयोः सम्बन्धेऽवगते धूमो दृश्यमानोऽग्निमदृश्यमान[५]मनुमापयति, एवं निर्वापादयो** विकृतौ दृश्यमाना **न [६]शक्नुवन्त्यनुमापयितुं** प्रयाजादीनीति। कुतः? [1]नहि निर्वापस्य तेषां च **प्रयाजादीनां सम्बन्धोऽस्ति। प्रधानेन** हि **सहामीषां सम्बन्धः। परस्परसम्बन्धे** तु नैषां **प्रमाणमस्ति,** "गुणानां च परार्थत्वात्" इति न्यायात्। अथापि रूपरसादिवदेकार्थसम्बन्धादनुमापकत्वम्, तथापि **यत्र निर्वापादयो न श्रूयेरन् तत्राग्न्यन्वाधानादीनामवबोधो न स्यात्** यथा "आदित्यः प्रायणीयः पयसि चरुः" इत्यादौ, लिङ्गाभावाद् **यथा धूमाभावेऽग्न्यवबोधाभावः** ( एवम् । ) **एवमिहापि। अथोच्येत कर्मास्माभि-**

---

1. नहीति। 'न च' इति टीकायां पाठः। तत्र चकारो हेत्वर्थ इत्यभिप्रायेण नहीत्येव पठितम्।

१. 'एतमर्थं सिद्धमेवाङ्गीकृत्य' नास्ति—ग०।

२. कस्या—ग०।

३. केन—ग०।

४. 'भाष्य' नास्ति—पू० मु०।

५. मानमपि गमयति—ग०, मानमवगमयति—पू० मु०।

६. वन्तीत्य—क० ख०।

**रितिकर्तव्यतायुक्तं फलसाधनं दृष्टम्।** **इदमपि** प्रायणीयादि **कर्म।** तस्मादस्या**पीतिकर्तव्यतया भवितव्यमि**त्यसत्यपि[१] निर्वापादिलिङ्गे कर्मत्वमेव लिङ्गं भविष्यतीति। दूषयति—**एवं सति दर्विहोमानामप्यति**देशेने**तिकर्तव्यता** प्राप्नोति। **अथोच्येत** न कर्मत्वेनानुमिमीमहे येनातिप्रसङ्गः स्यात्। किन्तु **यदेकदेवतं सत्फलसाधन**[२]माग्नेयादि, **पुरोडाशद्रव्यकं वा तदितिकर्तव्यतया युक्तं दृष्टम्।** औषधद्रव्योपलक्षणार्थं पुरोडाशग्रहणम्। **इहापि** च प्रायणीय **एकदेवतत्वात् पुरोडाशद्रव्यकत्वाच्चेतिकर्तव्यतया भवितव्य**मिति। तदिदमनुमानमङ्गीकृत्याभिमतसिद्धिर्नानेनास्तीत्याह—**उच्यते।** **अनुमानादितिकर्तव्यतासद्भावः** [३]सामान्येन त्वयोक्तः। सा **त्वाग्नेयात् प्रवर्तत इति नैतद्विषयमनुमान**मस्ति, तेन विशेषातिदेशो नानेन सिध्यतीति। **अथोच्येत येन** [४]यस्मादेकदेवत्यस्य **फलं साधयतोऽग्न्यन्वाधानाद्येवाङ्गं दृष्टम्।** **अयमपि चैकदेवत्यः।** **तस्मादस्यापि** भवितव्य**मग्न्यन्वाधानादिभिरिति** विशेषस्यैवानुमानं सम्भवतीति। **तन्न।** एवं सति **देवदत्तस्य** [५]**प्रयोजनं साधयतोऽङ्ग**त्वेन **शुक्ले वाससी निर्ज्ञाते।** **यज्ञदत्तस्यापि**[1] **प्रयोजनं साधयतस्ते एव प्राप्नुतस्त्वदीयेन** न्यायेन [६]पुरुषत्वसामान्यात्[७]। **किञ्च, फलवतोऽङ्गं प्रय।**

1. ‘यज्ञदत्तस्यापि’ इत्यस्य स्थाने ‘यदन्यस्यापि’ इति पूनामुद्रितः पाठः। तस्मिन् पाठे यस्मात् यज्ञदत्तस्यापि प्राप्नुतः, तस्मात् तन्न युक्तम्। यत् पूर्वमाशङ्कितमित्येकवाक्यतया व्याख्येयम्। किंतु एकवाक्यत्वे ते एव इति पदद्वयमनन्वितं स्यादिति ध्येयम्।

१. ‘असति’ नास्ति–क०।

२. धक–ग०।

३. सामान्यतयोक्तः–ग०।

४. स्यादेकदेवत्यस्य–ग०।

५. फलं–ग०।

६. पुरुषत्वेन फलसंबन्धसामान्यात्–ग०।

७. साम्यात्–क०।

**जादयो दृष्टाः, अग्निहोत्रस्यापि फलवत्त्वात् स्युः ।** अथ पुरुषत्वं फलवत्त्वं चाप्रयोजकं नानुमानाय पर्याप्तमित्युच्यते, तदेकदेवतत्वादेरपि तुल्यमप्रयोजकत्व-मिति नानुमानं सम्भवतीति भावः । **तस्मादनुमानेनेतिकर्तव्यतायां बह्वसमञ्जसं** स्यादतिप्रसङ्गात् । **अत उपमानेन धर्मप्राप्तिर्**वर्णयितव्या । कथ-मित्याह—**यजेतेत्युक्ते किं केन कथमित्याकाङ्क्षात्रयं** तावद् **भवति । तत्र किं केने**त्यस्मिन्नंशे **फलकरणाभ्यां** ब्रह्मवर्चसयागाभ्यां [1]**निराकाङ्क्षीकृते** सति **कथमित्यस्यामाकाङ्क्षायामव्यावृत्तायां सन्निधानेऽनाम्नानादितिकर्तव्य-तायास्तुल्यवाक्यमुपमानेन बुद्धौ सन्निधीयते । तच्च** वाक्य **सन्नि-धापितमात्मीयमर्थं सन्निधापयत्यं**शत्रययुक्तम्—इदमनेनेत्थं कुर्यादिति । तत्र फलकरणयोः सन्निहितयोरप्यनपेक्षितत्वान्न विकृतिभावनया सम्बन्धः । इति-कर्तव्यता त्वपेक्षासन्निधियोग्यत्वैर्विकृतिभावनयाऽन्वीयते, इदमनेनेत्थं[2] कुर्यादिति । तदेवमुपमितात् प्रधानवाक्यात् [3]तदर्थद्वारे**णाग्न्यन्वाधानादिकेतिकर्तव्यताऽ-नुषज्यते,** सम्बध्यत इत्यर्थः । नानुमानेन । भाष्ये चानुमानशब्देन पश्चान्मान-सामान्यादुपमानमेवोच्यत इति । सति चैवं नातिप्रसङ्गदोष इत्याह—**एवं चेद्यत्रैव सादृश्यं तत्रैव[4] धर्मप्राप्तिः । असति तु सादृश्ये** दर्विहोमेषु **नास्ति धर्मप्राप्तिः । ननु चैवमाकाङ्क्षायामुत्पन्नायामपीतिकर्तव्यता सन्निधाने नास्ति; तस्माद् भ्रा[5]न्तिराकाङ्क्षेति** कल्प्यताम् । अस्यार्थः—प्रकृतावेवेतिकर्तव्यताकाङ्क्षा पारमार्थिकी, विकृतौ त्वितिकर्तव्यतासद्भावशङ्कया समुत्पन्नाऽप्याकाङ्क्षा तदनाम्नानाद् भ्रान्तिरध्यवसीयते । तस्मादतिदेश एव मा भूदिति । परिहरति—**नासौ[6] भ्रान्त्या भवति ।** नहीतिकर्तव्यताम्नानकृता-

---

१. निराकाङ्क्षीकृते इति सामान्ये नपुंसकं प्रथमाद्विवचनम् । किमिति, केनेति च द्वे निराकाङ्क्षीकृते इत्यर्थः । एवं व्याख्याने 'अंशे' इति 'सति' इति च पदद्वयाध्याहारक्लेशस्तन्त्ररत्नस्थो निवारितः स्यादिति ध्येयम् ।

२. मनेन तथा—क० ख० ।

३. 'तत्' नास्ति—क० ।

४. धर्माः प्राप्यन्ते—ग० ।

५. भ्रान्त्याका—क० ख० ।

६. तदासौ भ्रान्तो भवति—पू० मु० ।

काङ्क्षा। तथा चेत्तदभावे निर्मूला भ्रान्तिः स्यात्। किन्तु भावनास्वभावकृता। कथमित्याह—**प्रकृतावपि** यत्र धर्माः समाम्नातास्तत्राप्या**काङ्क्षासद्भावे** सत्ये**वेतिकर्तव्यतासम्बन्धः**, न त्वितिकर्तव्यतासन्निधानादाकाङ्क्षाप्रवृत्तिः। **एवं**[1] **चेत् प्रकृतिविकृत्यो**राकाङ्क्षासद्भावे **न**[2] **कश्चिद्विशेषः**। तस्यां च सत्यामतिदेशेन धर्म्मप्राप्तिर्युक्तेति। सोऽयं विशेषातिदेशः[3] [4]साकल्येनात्रैव कथितः। शिष्यहितार्थं[5] तूत्तरः प्रपञ्च इत्युक्तम्॥ २॥

[ ३—सोम ऐष्टिकधर्मानतिदेशाधिकरणम् ]

## प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात्॥ ३॥ पू०

अग्निहोत्रस्य दर्विहोमत्वादेवापूर्वत्वं सिद्धम्। दर्शपूर्णमासयोरपि न कुतश्चिद्धर्मप्राप्तिः शक्या शङ्कितुम्। न तावदग्निहोत्रात् सम्भवति, सादृश्याभावात्। नापि सोमात् सम्भवति, परस्पराश्रयदोषापत्तेः। सोमस्य हि दर्शपूर्णमासविकारत्वे शङ्क्यमाने कथमिव तयोरपि तद्विकारत्वं शङ्क्येत। कर्मान्तराणि त्वधर्मकाण्येवेति तेभ्यो धर्मप्राप्तिर्दूरापास्तैव। तस्मात् सोम एवोदाहरणम्। तत्र दीक्षणीयादिष्वैष्टिकविध्यन्तस्य प्रवृत्तत्वात्तदानन्तर्याच्च सोमस्य तत्रापि तत्प्रवृत्तिर्युक्ता। "तस्यैकशतं प्रयाजानुयाजाः" इति च दर्शनममुमेव न्यायं द्योतयतीति पूर्वपक्षं कृत्वा कृत्स्नविधानादपूर्वत्वमिति सिद्धान्तः कथितः। तमाक्षिपति—**अत्र सूत्रं भाष्यं चोभयमप्ययुक्तम्। नह्येतद् ज्ञायते** [6]**कियत्येतिकर्तव्यतया निराकाङ्क्षी**[7]**भवतीति। अथोच्येत**—यस्य **सन्निधान एको द्वौ बहवो वा पदार्थाः समाम्नायन्ते**, तत्तैरेव **निराकाङ्क्षत्वान्ना**तिदेशमपेक्षत इति। **एवं सत्युपहोमादिभिर्निराकाङ्क्षीकृतत्वात् सां**ग्रहायण्यां[8] [ हण्या ]दिष्वप्य**तिदेशो न**

---

१. तेन नैवं–ग०।
२. 'न' नास्ति–ग०।
३. देशन्यायः कथितः–ग०।
४. संक्षेपेणात्र कथितः–खटिप्पण्यां पाठः।
५. र्थस्तू–ख०।
६. कियत्यापीति–क० ख०।
७. काङ्क्षीकृतो–पू० मु०।
८. ग्रहायण्या क–० ख० ग०।

प्राप्नोति । **तत्रैवं** केचित् परिहारं **वर्णयन्ति—उपहोमाः प्रयाजानुयाजानां** प्राकृतानां **मध्ये श्रुताः** । तस्मात् **सम्बन्धिपदव्यवायात्** सम्बद्धैः "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" इत्येतै[1]र्व्यवायान्मिश्रत्वात् तेऽपि प्रयाजादयः **कथंभाव** उपनिपतन्त **एव गृह्यन्ते** । तस्मादतिदेश इति । दूषयति—**एवं वर्ण्यमाने यत्रापूर्वमङ्गं प्राकृतेनासम्बद्धं श्रूयते, तत्र तेनैव निराकाङ्क्षत्वादतिदेशो न प्राप्नोति । न चैवमिष्यते** । समाधत्ते—यस्मादेवं सन्निध्याम्नातपदार्थमात्रेणापूर्वत्वे सोमस्य वर्ण्यमानेऽतिप्रसङ्गो भवति, **तस्मादन्यथा वर्ण्यते । कथमित्याकाङ्क्षायां यत्र सन्निधावाम्नातं**[१] **निराकाङ्क्षीकरणक्षमं** भवति, **तत्र तेनैव निराकाङ्क्षत्वाद् भवति कृत्स्नविधानता** । कथं पुनर्ज्ञायते इदं निराकाङ्क्षीकरणसमर्थमिदं नेत्यत आह—**इह** तु सोमे **संनिपत्योपकारकाः सर्व आम्नायमाना निराकाङ्क्षीकरणसमर्थाः । उपहोमादिषु सन्निपत्योपकारकत्वाभावात् कृत्स्नविधानता नास्ति । तस्मात्त्राकाङ्क्षा [2]न निवर्तते** । तेन तत्रातिदेशो न विहन्यते । सोमे तु नैराकाङ्क्ष्यान्नातिदेश इति नैष्टिकविध्यन्तप्राप्तिः । युक्त्यन्तरं चाह—**अथवा सादृश्येन विध्यन्तो नियम्यते । न च सोमस्य दर्शपूर्णमासाभ्यां** [२]व्यक्तचोदनाभ्यां **सादृश्यमस्ति,** तस्य देवताभावेना**व्यक्तचोदनत्वात् । ननूत्पत्तिवाक्ये "सोमेन यजेत" इत्यत्र** देवताभावा**द्व्यक्तचोदनः, प्रयोगवाक्ये तु** प्रकरणप्राप्तानामिन्द्रवाय्वादि**देवतानां विद्यमानत्वाद् व्यक्तचोदन** एव सोमः ।

1. व्यवायपदं "व्यवायान्नानुषज्येत" इत्यस्मिन् सूत्रे व्यवधानार्थकं दृश्यते । अत्र तु मिश्रणार्थकम् । इदमुपसर्गाणामनेकार्थत्वादिति प्रतिभाति । अत्र च 'संबद्धपदव्यवायेऽपि' इत्येव पूनामुद्रितः पाठोऽस्ति। तथापि तन्त्ररत्नानुरोधात् 'संबन्धिपदव्यवायात्' इत्येव मूलं निवेशितम् ।

2. 'न निवर्तते' इत्यस्य स्थाने 'संनिवर्तते' इति पूनामुद्रितो मूलपाठः प्रत्युत विरुद्धार्थत्वादसंगतः ।

१. म्नानं–पू० मु० ।

२. 'व्यक्तचोदनाभ्याम्' नास्ति–ग० ।

कथमव्यक्तत्वम्[1]। **उच्यते। ग्रहणे देवताश्रवणम्**, "ऐन्द्रवायवं गृह्णाति" इति वचनात्। **न यागे**। कथं तर्हि यागसिद्धिः? अत आह—**प्रसङ्गात्तु यागं निर्वर्तयन्ति**[2]। **न तु तासां यागं प्रति तादर्थ्ये प्रमाणमस्ति। कथं** पुनः प्रसङ्गान्निर्वर्तयन्ति[3]? उत्तरम्—**क्रत्वर्थेन ग्रहणेन देवताः संयुक्ताः।** [4]**ता यागमभिलषन्ति,** तदभावे देवतात्वानिर्वाहात्। तथा **यागोऽपि देवताभिलाषी। तयोर्न्नष्टाश्वदग्धरथवत् सम्बन्धोऽर्थाद्भविष्यति।** कथम्? **यागो**[5] **द्रव्यं गृह्णन् तदाश्रितां देवतां गृह्णाति। यथा प्रणयनं क्रत्वर्थमात्मनिर्वर्तकं साधनमपेक्षमाणं** पशुकामप्रयोगे चमसस्य बाधितत्वाद् **गोदोहनं पुरुषार्थमपि** प्रसङ्गाद् गृह्णाति। **गोदोहनमपि पुरुषार्थं सदाश्रयमपेक्षमाणं** क्रत्वर्थमपि **प्रणयनं** [6]**प्रसङ्गाद् गृह्णाति।** तेन **यथा**त्रानयोरर्थात् **सम्बन्धः, एवमिहापि** यागदेवतयोरर्थात् सम्बन्धः। न तु यागार्थतया देवता विनियुक्ताः। **तस्मात्तादर्थ्याभावाद्यागार्थत्वाभावाद् देवताभावः,** यागस्य **स्वार्थतया** विनियुक्तदेवताभावः। तथापि प्रसङ्गादपि देवतान्वयात् कथमव्यक्तत्वम्? अत आह—**एवं चेदव्यक्तचोदनः।** स्वार्थदेवतावैधुर्यमेवाव्यक्तत्वमिति भावः। **अत आह सूत्रकारः "अव्यक्तासु तु सोमस्य" इति। नन्वेवमुपांशुयागस्योत्पत्तिवाक्ये देवताश्रवणाभावादव्यक्तता** प्राप्नोति। ततश्च तत्प्रकृतिः[I] सोमः स्यादिति। **उच्यते। मन्त्रवर्णात्तत्र देवतायास्तादर्थ्याद् व्यक्तचोदनः** सः, नाव्यक्तचोदनः। **अतः सादृश्याभावादप्यपूर्वत्वं**

I. 'तत्प्रकृतिः' इति बहुव्रीहिः। उपांशुयाजप्रकृतिक इत्यर्थः।

१. अव्यक्त उच्यते—ग०।

२. निर्वर्तयति—पू० मु०।

३. वर्तयति—ग०।

४. 'ताः' नास्ति—क०।

५. यागे—क०।

६. प्रसक्तं—पू० मु०।

सोमस्य । **कृत्स्नविधानादिति** । अयमर्थः—**यदाम्नायते धर्मजातं तेन निराकाङ्क्षत्वात्** सोमोऽर्थ**प्राप्तम**तिदेशप्राप्तमैष्टिकविध्यन्तं **न गृह्णातीति** ॥ ३ ॥

[ ४—ऐन्द्राग्नादिषु दार्शपूर्णमासिकधर्मातिदेशाधिकरणम् ]

## इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥ सि०

"यस्य लिङ्गमर्थसंयोगात्" इत्यस्य प्रपञ्च आरभ्यते । अस्मिन् कर्मण्यस्य विध्यन्तस्य लिङ्गमस्ति । अतोऽत्रासौ प्रवर्तत इति । तत्रेष्टिषु तावत्तद्धितादिभिर्देवतासम्बन्धः, निर्वपतिशब्दः, औषधद्रव्यवत्ता, कपालवत्तेत्येतैर्लिङ्गैर्दार्शपौर्णमासिको विध्यन्तः ॥ ११ ॥

[ ५—अग्नीषोमीये पशौ दार्शपूर्णमासिकधर्मातिदेशाधिकरणम् ]

## पशौ च लिङ्गदर्शनात् ॥ १२ ॥ सि०

नन्विष्ट्यादिवदेव[1] कृत्स्नविधानः पशुः, कथमत्रातिदेशः । केचिदाहुः—केवलसन्निपत्योपकारकाम्नानादारादुपकारकाकाङ्क्षायामनिवृत्तायां युक्तोऽतिदेश इति । तदयुक्तम्, "उपाकृत्य पञ्च जुहोति" इत्यादिभिर्बहूनामारादुपकारकाणा विधानात् । एवं तर्हि प्रयाजादिदर्शनाद्विकृतित्वं कल्प्यते । तदपि "यत्र नित्यानुवादवचनानि स्युः" इति निरस्तम् । कश्चिदाह—उत्कर्षकल्पनातो विशिष्टविधानाच्च वरमाकाङ्क्षाकल्पनमिति । तदपि विपरीतम् । निराकाङ्क्षस्य ह्याकाङ्क्षाया कल्प्यमानायां सा तावत् कल्प्या । ततश्च दार्शपौर्णमासिकोपकारप्राप्तिः । तत्सिद्धये च पदार्थप्राप्तिरिति गुर्वी कल्पना स्यात् । तद्वरमुत्कर्षमात्रकल्पनम् । अनेन यदप्यङ्गापूर्वाणां स्वरसतः [2]कथमाकाङ्क्षाविरहिणामपि प्रयाजादिदर्शनादेवाकाङ्क्षा परिकल्प्यत इति मतम्, तदपि निरस्तम् । तस्मान्न पशावतिदेशसिद्धिः । उच्यते—भवेदेतदेवं यदि निराकाङ्क्षः पशुः स्यात् । स त्वावाहनासादनादीनां दृष्टार्थानामलाभात् साकाङ्क्ष एव । किञ्चासौ क्रयसन्निधावाम्नायते । न च तत्र धर्माः

---

१. 'एव' नास्ति—क० ।

२. प्रथमा—ग० ।

श्रूयन्ते यैर्निराकाङ्क्षः स्यात्। [1]नन्वेवमसत्यपि प्रकरणात् धर्मलाभे स्थानाद्धर्मलाभः स्यादनुष्ठानसादेश्यलक्षणात्। उच्यते—"स एष औपवसथ्येऽहनि द्विदेवत्यः पशुरालभ्यते" इत्यनेन वचनेनौपवसथ्येऽहन्यनुष्ठाने चोदिते सति पश्चाद्धर्मा लभ्येरन्। निराकाङ्क्षस्य चानुष्ठानं चोद्यते, न साकाङ्क्षस्य। तेन प्रागेवास्माद्वचनान्नैराकाङ्क्ष्येण भवितव्यम्। तेनायमत्र क्रमः—क्रयसन्निधावुत्पन्नः पशुः स्वसन्निधौ धर्मानलभमानश्चोदना[2]सामान्याद्दार्शपौर्णमासिकं विध्यन्तं क्लृप्तोपकारं समासाद्य निराकाङ्क्षीभवति। ततोऽस्यौपवसथ्येऽहन्यनुष्ठानचोदना। ततः पश्चादनन्यप्रयोजनान् धर्मान् साकाङ्क्षानुपलभ्य स्थानवशेन निराकाङ्क्षस्यापि पशोराकाङ्क्षापरिकल्पनेन सम्बन्धः कल्प्यते। ये तु लिङ्गदर्शनादेव विकृतित्वं कल्पयन्ति, तेषां मते ययाकाङ्क्षया कल्पितया प्रयाजादिदर्शनमुपपन्नं भवति, सैव कल्पयितव्येति दार्शपौर्णमासिकविध्यन्तापेक्षाया एव परिकल्पनात् प्रयाजादिदर्शनमेव विध्यन्तविशेषप्राप्तावपि प्रमाणीभवितुमलमिति चोदनासामान्याभिधानं भाष्यकारस्य रिक्तार्थं स्यादित्यास्ता तावत्॥ १२॥

[ ६—सवनीयादिपशुष्वग्नीषोमीयधर्मातिदेशाधिकरणम् ]

## दैक्षस्य चेतरेषु॥ १३॥ सि०

दर्शपूर्णमासयोर्द्धर्मवत्त्वात्ताभ्यामेव व्यक्तचोदनाः सर्वे धर्मान् प्रार्थयितुमर्हन्ति, न त्वग्नीषोमीयात्। स हि स्वयमधर्मकोऽन्यतो धर्मान् लभते। नह्याढ्ये वदान्य[3]श्रेष्ठेऽवतिष्ठमाने [4]क्षुत्क्षामो भिक्षुको भिक्षुकान्तरं याचितुमर्हति। तस्मात् सवनीयादयोऽपि दर्शपूर्णमासविकारा इति प्राप्ते ब्रूमः—प्राणिद्रव्यकत्वादालभति-[5]चोदनात्व[नावत्त्व]सादृश्यविशेषादपेक्षितपशु[6]धर्मनियमावाप्तेः, एकस्यापि चापेक्षाभेदेन प्रकृतिविकारभावोपपत्तेर्दैक्षविकारा अन्ये पशव इति॥ १३॥

१. न च सत्यपि—ग०।
२. सामर्थ्या—ग०।
३. पृष्ठे—क० ख०।
४. 'क्षुत्क्षामो' नास्ति—ग०।
५. चोदनास्वसा—ग०।
६. धर्मा—ख०।

[ ७—ऐकादशिनेषु पशुषु सवनीयपशुधर्मातिदेशाधिकरणम् ]

**ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ १४ ॥**

सवनीयस्यैकादशिनानां च चोदनागतस्य सादृश्यविशेषस्याभावात्, द्वैरशन्यमात्रस्य च वचनतयाप्युपपन्नत्वेनाप्रापकत्वादैकादशिना अपि सवनीयवदग्नीषोमीयविकारा एवेति प्राप्तम्। तत्रोच्यते—चोदनागतसादृश्याभावेऽप्यर्थगतस्य सौत्यत्वाख्यस्य सादृश्यविशेषस्य सद्भावाद् द्वैरशन्यदर्शनाच्च सवनीयः प्रकृतिरैकादशिनानामिति ॥ १४ ॥

[ ८—पशुगणेष्वैकादशिनधर्मातिदेशाधिकरणम् ]

**तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥**

गणत्वसामान्याद्गणधर्मनियमावाप्तेर्लिङ्गदर्शनाच्च पशुगणानां सर्वेषामैकादशिनप्रकृतित्वमेव युक्तम्। सोऽयं "यस्य लिङ्गमर्थसंयोगात्" इत्यस्य प्रपञ्च इति नातीव पूर्वपक्षे यतितव्यम् ॥ १५ ॥

[ ९—अव्यक्तयागेषूद्भिदादिषु सौमिकधर्मातिदेशाधिकरणम् ]

**अव्यक्तासु तु सोमस्य ॥ १६ ॥ सि०**

विश्वजिदादिष्वव्यक्तिसादृश्यात् सोमविध्यन्तः। तस्य ह्यव्यक्तिः प्रागेव कृत्स्नविधानादित्यत्र प्रसङ्गाद्वार्त्तिककारेणैव व्याख्यातेति नेह[1] पुनर्व्याख्यायते ॥१६॥

[ १०—अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ]

**गणेषु द्वादशाहस्य ॥ १७ ॥ सि०**

अत्रापि सादृश्यविशेषाद् गणधर्मनियमावाप्तेश्च द्वादशाहविकारत्वमेव सर्वेषां सत्राहीनानाम्। कः पुनः सादृश्यविशेषः? चोदनागतस्तावदुभयत्राप्यहोरात्रप्रतिपादकशब्दसद्भावः। अहःशब्दो ह्यनुवादत्वाद्यथाप्राप्ताहोरात्रप्रतिपादकः, तथा रात्रिशब्द इति चोदनासादृश्यम्। अर्थसादृश्यमपि संघातत्वम्। तस्माद् गणेषु

१. 'इह' नास्ति—ख०।

द्वादशाहस्येत्येतावदिह सिद्धम् । [1]तत्र तु विशेषो दशमे वक्ष्यते—प्रायणीयोदयनीयौ वर्जयित्वाऽवशिष्टस्य दशरात्रस्य प्रवृत्तिरिति ॥ १७ ॥

[ ११—संवत्सरसत्रेषु गावामयनिकधर्मातिदेशाधिकरणम् ]

## गव्यस्य च तदादिषु ॥ १८ ॥ सि०

पूर्वापवाद आरभ्यते । संवत्सरसत्रेषु संवत्सरसत्रत्वसामान्याद् अयनशब्दवत्त्वेन च चोदनासामान्यात् संवत्सरनियमावाप्तेश्च गावामयनिक एव विध्यन्तो न द्वादशाहिक इति ॥ १८ ॥

[ १२—निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ]

## निकायिनां तु[2] पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १९ ॥ सि०

साहस्राः साद्यस्का इत्येकेन नामधेयेन प्रस्तूयमाना यागा निकायिन उच्यन्ते । तेषां सर्वेषामव्यक्तत्वाज्ज्योतिष्टोमविकारत्वमेव [3]प्राप्तम् । न चात्र नामातिदेशः शङ्कनीयः, एकस्मिन् हि प्रथमं मुख्येन रूपेण प्रवृत्तं नामधेयमन्यस्मिन् पुनः प्रयुज्यमानं गौणतयाऽतिदेशकं भवति । साहस्रादिनामधेयं तु युगपत् प्रयुज्यमानं सर्वेषु मुख्यत्वान्नातिदेशकं भवितुमर्हति । तस्माज्ज्योतिष्टोमप्रकृतय इति प्राप्ते; साहस्रादिशब्दवाच्यत्वसादृश्याल्लिङ्गदर्शनाच्चोत्तरेषु निकायिषु प्रथमस्य सधर्मकस्य विध्यन्तः प्रवर्तत इति ॥ १९ ॥

[ १३—फलादीनामनतिदेशाधिकरणम् ]

## कर्मणस्त्वप्रवृत्तित्वात् फलनियमकर्तृसमुदायस्याननन्वय-स्तद्बन्धनत्वात् ॥ २० ॥ सि०

फलादीनामपि प्रकृतिभावनासम्बन्धादङ्गवदतिदेशमाशङ्कमानस्योत्तरम्—कर्मणस्त्वप्रवृत्तित्वात्तत्सम्बद्धानां फलादीनामप्यप्रवृत्तिरिति । तत्र कथं कर्मणोऽप्रवृत्तिरित्या-

---

१. तस्य—च० ग० ।

२. च— पू० मु० ।

३. 'प्राप्तं' नास्ति—ग० ।

शङ्कयाह—**सौर्यं करणस्य प्रत्यक्षत्वात् करणान्तरस्याप्रवृत्तिरानुमानिकत्वात्**। नहि प्रत्यक्षे सत्यनुमानमवकल्पत इति। किं तर्ह्यतिदिश्यते? अत आह—[1]**इतिकर्तव्यताकाङ्क्षायामितिकर्तव्यतैवातिदिश्यते,** न करणमनपेक्षितत्वात् करणस्य। [१]मातिदेशि करणम्। फलादीनि तु किं नातिदिश्यन्ते? अत आह [ आह—आकाङ्क्षायामिति। ] न च यत्प्रकृतावस्ति तदतिदिश्यते। किं तर्हि? अपेक्षितमतिदिश्यते। इह तु ब्रह्मवर्चसादिना फलेन निराकाङ्क्षीकृतत्वात् प्राकृतस्य फलस्य नास्ति सम्बन्धः। मा वात्र फलं श्रावि, तथापि न तस्या[२]न्यतोऽतिदेश इत्याह—इतिकर्तव्यता चातिदिश्यते, गुणत्वात्। **न च फलमितिकर्तव्यता**। तद्धि प्रधानम्। न च प्रधानं गुणभूतं कर्म प्रति नेतुं शक्यते। अथ[2] न फलमिहानीयते, किन्तु दार्शपौर्णमासिकं फलं प्रति सौर्यः साधनतया विधीयत इत्युच्यते, तथा सत्यस्य[३] फलस्यातिदेशो न स्यात्। अन्यत्र ह्यन्यदीयस्य नयनमतिदेशः। न च तत्फलं प्रति सौर्यस्य साधनता सम्भवति, [3]तस्य [४]दर्शपूर्णमासावरुद्धत्वात्। न च विकल्पो वैषम्यात्। स्ववाक्यस्थौ हि दर्शपूर्णमासौ। विकृतिर्यत्र क्वचिदवस्थिता न ताभ्यां विकल्पितुमर्हति। ( [५]किञ्च, विधित एवान्यनिरपेक्षात् [4]स्वर्गफलत्वावगमान्न यथाकथञ्चिच्चोदनालिङ्गोपस्थापनद्वारेण फलावगतिर्युक्ता। ) इतिकर्तव्यता तु विधिना न [६]विशेषरूपेणाक्षेप्तुं शक्येति युक्तातिदेशापेक्षा। तस्मात् सैवाति-

---

1. 'इतिकर्तव्यताकाङ्क्षायाम्' इति यथादृष्टः पाठ एवावस्थापितः। तन्त्ररत्नस्थव्याख्यानस्वरसात् आकाङ्क्षायामित्येव पाठोऽभ्यूह्यते।
2. अथेति। इत्युच्यते इत्यनेनान्वयः।
3. तस्येति स्वर्गरूपफलस्येत्यर्थः।
4. दर्शपूर्णमासाभ्यामिति तृतीयाश्रुत्या तयोः स्वर्गफलं प्रति करणान्तरनैरपेक्ष्यमवसीयत इति भावः।

१. नातिदेश्यं—ग०।
२. 'अन्यतः' नास्ति—ग०।
३. 'अस्य' नास्ति—क० ख०।
४. पौर्ण—क०।
५. कोष्ठान्तर्गतो नास्ति—ग०।
६. विशेषण—क०।

दिश्यते। फलमपि यदीतिकर्तव्यतान्तर्भूतं स्यात्ततोऽतिदिश्येत। न त्वेवमस्ति। तस्मान्न फलस्यातिदेशः। **यावज्जीविको नियमः कर्तृधर्म** इति सोऽपि **पुरुषार्थत्वान्नातिदिश्यते**। स्वरूपेण तावन्नियमस्यानपेक्षितत्वान्नातिदेशः।[1] यदि कर्मधर्मोऽयमभ्यासः स्यात्तत इतिकर्तव्यतात्वादतिदिश्येत, न तु तथेत्युक्तम्। कर्ता नाम द्विरूपः—कामपदोपात्तः फलिरूपः, निर्वर्तकरूपश्चाख्यातोपात्तः। तत्र **फलेन व्याप्यमानो यः कर्ता स नातिदिश्यते तेनांशेन** फलिरूपेणा-**न्यत्र**। कुतः? तद्रूपस्य **प्रधानत्वादक्र**[2]**त्वर्थत्वात्**। **यः पुनर्यजेते**-त्याख्यात[3]पदेन **कर्ता क्रतुं निर्वर्तयतीति** हेतोर्भवति **क्रत्वर्थः, सोऽतिदे**-शादन्यत्र **प्राप्नोत्येव**। कथं तर्हि कर्तुरप्रवृत्तिरविशेषेण सूत्रकारेणोक्ता? अत आह— **किन्तु यत्र बहवः कर्तारः श्रूयन्ते** प्रत्यक्षेणैव सत्रादिषु, **तत्रा**सावेकसंख्यः प्राकृतः कर्ता**नुमानिको नातिदिश्यते**। **यत्राप्येकसंख्यः** श्रुतः, **तत्राप्यनु**-**वादोऽतिदेशः**। **तस्मादर्थाभावात्** प्रयोजनाभावात् **कर्तुरनतिदेशो गुण**-**भूतस्यापि**। तथा **समुदायोऽन्योन्य**साहित्यात्मा गुणभूतोऽपि **करण**[4]**परि**-**च्छेदेन** प्रकृतावुप**कृतवान्**। **इह** तु विकृतावेकत्वात् करणस्य **परिच्छेद्याभा**-**वादर्थलोपान्नातिदेश्यः** समुदायः। यत्राप्यध्वरकल्पादौ करणबहुत्वात् परि[5]च्छेद्य-लाभः, तत्रापि प्रकृतिवत् प्रत्यक्षसमुदायसद्भावान्न प्राकृतस्यातिदेशः। यद्युच्येत मा नाम [6]वैकृतकरणपरिच्छेदार्थतया समुदायोऽतिदेशि। प्राकृतान्येव[7] त्वाग्नेया-दीनि परिच्छिन्दन्नतिदिश्यतामिति। अत आह—**समुदायं च** यथा-प्रकृति [8]गृह्णता**माग्नेयादयः** समुदायिनः कर्तव्याः स्युः। **ते च** क्रिय-

---

१. "इत्यतिदेशो न स्यात्। अन्यत्रान्यदीयस्य नयनमतिदेशः। किञ्च" इत्यधिकः–ग०।

२. 'अक्रत्वर्थत्वात्' नास्ति–ग०।

३. पदे–क०।

४. परिच्छेदकत्वेन–ग०।

५. परिच्छेद–ग०, परिच्छेदाद्य–क०।

६. प्राकृत–ग०।

७. प्राकृतार्थान्येव–ग०।

८. गृह्णता–पू० मु०।

**माणाः स्वर्गं साधयेयुः । तथा च सति यथाश्रुतफलव्याघातो** विकृतौ स्यात् । **अथोच्येत, समुदायं गृह्णन्नान्तरीयकत्वादाग्नेयादीन्**[1] **करिष्यति न फलसाधनत्वेन** । न चाप्रार्थितं फलं भवति । तेन [ तेन न ] श्रुतफलव्याघात इति । **उच्यते**—मा भूद् व्याघातः, न तु समुदायस्य प्रवृत्तिः सम्भवतीत्याह—**समुदाय एषामाग्नेयादीनां गुणभूतः । न च गुण आकृष्यमाणो गुणिनमाकर्षत्यतादर्थ्यात्** । तेन नाग्नेयादिपरिच्छेदेन विकृतौ समुदायस्य प्रवृत्तिः सम्भवति । तदुक्तं भाष्यकारेण—"समुदायोऽप्याग्नेयादीनाम् । तानि च सौर्यादिषु न सन्ति" इति । [2]यत्त्विदमपरं भाष्यकारेणोक्तम्—"समुदायो न कर्मार्थः फलार्थोऽसौ" इति, तदतिशयायोक्तमिति । तत्सिद्धं फलादीनामनतिदेश इति ॥ २० ॥

[ १४—गुणकामानां पश्वादीनां विकृतावनतिदेशाधिकरणम् ]

## गुणकामेष्वाश्रितत्वात् प्रवृत्तिः स्यात् ॥ २३ ॥ पू०

प्रधानस्याप्रवृत्तेः प्रधानफलस्यापि तद्बन्धनत्वाद् भवत्वप्रवृत्तिः, गुणफलस्य त्वाश्रयप्रवृत्तेः प्रवृत्तिर्युक्ता । तथा हि—प्रणयनं तावत् प्रवर्तते । तस्मिंश्च प्रवर्तमाने तत्साधनं गोदोहनमपि चमसवत् प्रवर्तितुमर्हति । साधनत्वं हि प्रवृत्तौ कारणम्, न तादर्थ्यम् । तच्च गोदोहनस्याप्यविशिष्टमिति तत्तावत्प्रवर्तते, खादिरत्ववत् । ततश्च तत्साध्यं फलमपि प्रवर्तितुमर्हतीति पूर्वः पक्षः ॥ २३ ॥

सिद्धान्तमाह—

## निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥ सि०

**यत् क्रत्वर्थं तदतिदिश्यते । न च गोदोहनादि क्रत्वर्थं फलार्थत्वात् ।** यद्यपि च गोदोहनं प्रणयनस्य साधनम्, तथापि फलप्रयुक्तं सत् प्रसङ्गात् साधनं

---

१. 'न' अधिकः—ग० ।

२. यदपरं—ग० ।

तत्[1] तस्य, [2]न तु प्रणयनस्याङ्गम्, नतरां क्रतोः। अतो न दर्शपूर्णमासविध्येकवाक्यता गोदोहनस्यास्ति। यच्च तत्रेत्थंभावेनान्तर्भूतं [3]तदेव [4]तद्वच्छब्देनातिदिश्यते। न च तस्य प्रणयनं प्रयोजकम्। अतो न प्रणयनप्रवृत्त्या गोदोहनस्य प्रवृत्तिः। मा भूत् प्रणयनवशात् प्रवृत्तिः, पुरुषस्य तु फलार्थित्वादाश्रयसद्भावाच्च फलवशादेव प्रवर्ततामिति चेत्[5], न, आश्रयाभावात्। नहि प्रणयनमात्र[6]माश्रयः। किं तर्हि? दर्शपूर्णमासापूर्वीयव्यापारविशेषरूपं प्रणयनमाश्रयः, तादृशस्यैव[7] प्राकृतत्वात्। न च तादृशं विकृतिष्वस्तीति न तत्राश्रयसद्भावः। तस्मान्न गुणकामानां विकृतिगमनमिति ॥ २४ ॥

यत्तु खादिरत्ववदित्युक्तं तस्योत्तरं सूत्रम्—

**अपि वाऽतद्विकारत्वात् क्रत्वर्थत्वात् प्रवृत्तिः स्यात् ॥ २५ ॥**

**गोदोहनादि पुरुषार्थत्वाच्चमसं** क्रत्वर्थं **विकृत्य निविशते,** न तु स्वयं क्रत्वर्थं येन प्रवर्तेत। **खदिरस्तु** "एकस्य तूभयत्वे संयोगपृथक्त्वम्" इत्यनेन न्यायेन पुरुषार्थोऽपि **क्रत्वर्थत्वात्,** क्रत्वर्थत्वस्यापि सद्भावान्न [I]**कञ्चिद्विकरोति। एवं चेत् खदिरः प्रवर्तत एव।** अत्र भाष्यम्—"**तस्मिंश्च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तते" इति।** तदनुभाष्याक्षिपति—**एतदयुक्तम्। यद्धि क्रत्वर्थं** तत्प्रवर्तते, न च फलं क्रत्वर्थम्। **वीर्य्यकामो** हि **यदि खदिरार्थः स्यात्ततः खदिरे प्रवर्तमाने तदाश्रितत्वात्,** तदङ्गत्वादिति यावत्, **प्रवर्तेत।** इह तु विपरीतं तादर्थ्यम्। **खदिर** एव हि

---

I. कञ्चित्–पू० मु०। सर्वासु मातृकासु किञ्चिदित्येव पाठः।

१. 'तत्' नास्ति–क०।

२. 'न तु' नास्ति–ग०।

३. 'तु' अधिकः–ग०।

४. तच्छ–ग०।

५. 'चेत्' नास्ति–ग०।

६. 'मात्रं' नास्ति–क०।

७. प्रकृतत्वात्–क० ख०।

**तदर्थो** वीर्यकामार्थः । एवं तर्हि **खदिरः पुरुषार्थत्वाद्विकृतौ न प्रवर्तेत इति चेत् । उच्यते** येनांशेन **क्रत्वर्थस्तेन प्रवर्तिष्यते,**[१] **न**[२] **द्वितीयेन** पुरुषार्थांशेन, तस्यांशस्याक्रत्वर्थत्वात् । न च यथाविज्ञाताश्रयलाभः, येनासत्यप्यतिदेशे स्वेच्छयैव पुरुषः फलार्थं खदिरमुपाददीत । अग्नीषोमीयापूर्वप्रयुक्तं हि नियोजनं तस्याश्रयः । न च तद्विकृतावस्तीति ॥ २५ ॥

[ १५—सौर्ययागे विकल्पेन धर्मातिदेशाधिकरणम् ]

## एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

विशेषातिदेशप्रसङ्गादतिदिष्टयोर्मन्त्रयोः किं व्यवस्था किं वा विकल्प इति चिन्त्यते । तत्र प्रकृतौ कालभेदेन मन्त्रयोर्व्यवस्था दृष्टा । सेहापि चोदकानुग्रहात्तथैव भवितुमर्हतीति पूर्वः पक्षः । सिद्धान्तमाह—**सौर्य आग्नेयादुपमितलक्षितप्रापणेनेतिकर्त्तव्यतां गृह्णाति,** नान्यत इत्युत्तरेऽधिकरणे वक्ष्यामः । **आग्नेयस्य चामावास्यायां पौर्णमास्यां च विद्यमानत्वान्न शक्यमवधारयितुं किं** [1]**पौर्णमासिकस्य**[३] सम्बन्धि**नीतिकर्त्तव्यता प्रवर्तते, उतामावास्यायाः**[४] सम्बन्धिनीति । **तस्मादगृह्यमाणविशेषत्वाद्विकल्पः** । अयमर्थः—"चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रामावास्याम्" इत्यत्र पौर्णमास्यमावास्याशब्दौ न कालवचनौ, किन्तु प्रकरणात् कर्मनामनी । न च कर्मणोऽभिमर्शनं सम्भवति । तत्र यदि वा द्वितीया प्रधानत्वान्मुख्यार्था, प्रातिपदिकं लक्षणया हविः प्रतिपादयति, पौर्णमाससम्बन्धि हविरभिमृशेदिति । यदि वाधिकारलब्धं हविरङ्गीकृत्य प्रातिपदिकं मुख्यत्वाद्यथाश्रुति गृहीत्वा द्वितीया सप्तम्यर्थे

---

1. एतदनुरोधेन मूले पौर्णमासस्येति पाठः सम्भाव्यते, न तु पौर्णमास्य इति ।

१. प्रवृत्तिरिष्यते–पू० मु० ।

२. 'न' नास्ति–ग० ।

३. पूर्णमाससम्ब–ग० ।

४. अमावास्यासम्ब–ग० ।

व्याख्यायते । पौर्णमास्यां यानि हवींषि तानि चतुर्होत्राभिमृशेदिति । तत्र द्वेधाप्याग्नेयस्य त्रिकद्वयान्तःपातित्वान्मन्त्रद्वयं प्राप्नोति । तद्विकारश्च सौर्यः । तस्मात्तत्र विकल्पः ।

नन्वेवमेकस्यैवाग्नेयस्य मन्त्रद्वयेनाभिमर्शनद्वयं विहितमदृष्टार्थत्वात् समुच्चीयते । तत्कथं विकल्पः । कथं च प्रकृतौ[1] दृष्टा व्यवस्था विकृतौ न स्यादत आह—**"आसन्नानि हवींष्यभिमृशति" इति** वाक्यान्तरेणैकस्मिन् **हविरभिमर्शने** विहिते तत्र **मन्त्रस्य करणत्वाद्** दृष्टार्थत्वादैकार्थ्याच्च विकल्पे प्राप्ते, **यद्यपि प्रकृतौ कालकृता व्यवस्था हविरन्तरवशेन जाता, तथापि विकृतावशक्या व्यवस्था कर्तुं** कारणाभावात् । **नह्येतज्ज्ञायते[2] सौर्ये कतरस्याग्नेयस्य धर्माः प्रवर्तन्त इति । तस्मादाग्नेयाविशेषाद्विकल्पः ॥ २६ ॥**

अतः परमधिकरणत्रयं सुगमत्वादुल्लङ्घ्य प्रथमपादेऽन्त्यमधिकरणं[3] व्याख्यायते । वयं तु तेष्वपि किञ्चिद् ब्रूमः—

[ १६—सौर्ये चरावाग्नेयधर्मातिदेशाधिकरणम् ]

**लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ ॥ पू०**

तद्धितेन देवताभिधानम्, निर्वपतिशब्दः, प्रयाजादिदर्शनं च सर्वेषामाग्नेयादीनां साधारणं लिङ्गम् । न चैकदेवतत्वेनाग्नेयस्य विशेषः, प्रमाणाभावात् । नहि [4]तद्धितेन प्रातिपदिकार्थस्य संख्याविशेषो निश्चेतुं शक्यते, द्विवचनबहुवचनान्तादपि तद्धितोत्पत्तिदर्शनात् । तस्माद्विकल्प इति । उच्यते । यत्र प्रमाणान्तरमस्ति, तत्रैव द्विवचनबहुवचनान्तयोर्वृत्तिः । तदभावे तु प्रातिपदिकार्थानुपपत्त्याक्षिप्तमेकत्वमेवावतिष्ठते । न चेह प्रमाणान्तरमस्ति द्वित्वे बहुत्वे वा; प्रत्युत वाक्यशेषमन्त्रवर्णाभ्यामेकत्वमेवाग्निसूर्ययोः प्रतीयते । तस्मादाग्नेयविकारः सौर्य इति ॥ २७ ॥

---

१. 'दृष्टा व्यवस्था विकृतौ' नास्ति—क० ।

२. ज्ञाते—क० ।

३. 'अधिकरणं' नास्ति—ग० ।

४. तद्धिते—ख० ग० ।

[ १७—देवताघटितसादृश्याद् द्रव्यघटितसादृश्यस्य बलीयस्त्वाधिकरणम् ]

## विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥

देवताया मुख्यत्वाद् दातृत्वसंस्तवेन प्राधान्याच्च तत्सामान्यमेव बलीय इति पूर्वः पक्षः। सिद्धान्तस्तु—हविषो विशेष्यत्वेन शब्दतस्तावत्प्राधान्यम्। देवतायास्तु विशेषणत्वाद् गुणत्वम्। विशेष्यं च वाक्यार्थावस्थायां सन्निहितम्। विशेषणं तु विशेष्यमवच्छिद्य तस्यामवस्थायां निवर्तते। न च पदार्थावस्थायां विध्यन्तापेक्षास्ति, किन्तु वाक्यार्थावस्थायाम्। [1]यद्यपि पदार्थवेलायां देवता मुख्या, तथापि वाक्यार्थावस्थायां तस्यास्तिरोहितत्वादाविर्भूतरूपेण हविषैव विध्यन्तनियमो युक्तः। दातृत्वं त्वर्थवादमात्रमिति वक्ष्यामः। किञ्च, समाप्तित्वात् त्यागः प्रधानम्। उद्देशस्तु गुणभूतः। त्यागान्वयश्च[2] हविषो न देवतायाः। शब्दद्वारेण चासावुपकरोति, हविस्तु स्वरूपेणैव। नियमावाप्तिश्चापेक्षिता हविःसामान्येन लभ्यते, न देवतासामान्येन। न ह्यौषधधर्माणां पयसि ([3]पयोधर्माणा चौषधे कश्चिदुपयोगः। तस्माद्धविःसामान्यं बलीय इति) ॥ ३२ ॥

[ १८—कृष्णलचरावाग्नेयधर्मातिदेशाधिकरणम् ]

## हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥ ३५ ॥ पू०

उज्ज्वलत्वविशदत्वाभ्यामाज्येनौषधेन च सादृश्ये सति धर्मानुग्रहविशेषादाज्यविध्यन्त एव युक्तः। औषधधर्मत्वे हि भूयसामवघातादीनां बाधः स्यात्। तस्मादाज्यधर्मकं हिरण्यमिति। चोदनागतत्वात्तु चरुशब्दस्य यदुपबृंहितं वैशद्यमेव बलवदित्यौषधधर्मता। एवं च 'घृते श्रपयति" इति चोदकप्राप्तश्रपणस्य प्रतिप्रसवमात्रं विधीयत इति लाघवं भवति। इतरथा त्वत्यन्ताप्राप्तं श्रपणं विधीयत इति गौरवं स्यात्। यत्तु भाष्यकारेण "आज्यं केवलं विधायिष्यते"

---

१. तेन यद्यपि—क० ख०।

२. 'योगार्थस्य' अधिकः—ग०।

३. कोष्ठान्तर्गतो नास्ति ग०।

इत्युक्तम्, तद्विधेर्लाघवं भवतीत्येवंपरम्। परमार्थस्तु उत्पत्तिवाक्यप्राप्तत्वान्नाज्यं विधीयते। अर्पणं त्वर्थलोपान्निवर्तमानं प्रतिप्रसूयत इति। तस्मादौषधधर्मकं हिरण्यमिति ॥ ३९ ॥

[ १९—मधूदकयोरुपांशुयाजधर्मातिदेशाधिकरणम् ]

## मधूदके द्रवसामान्यात् पयोविकारः स्यात् ॥ ४० ॥ पू०

किमत्रैको याग उत बहव इति प्रसङ्गाद्विचारयति। तत्रैकपक्षमाह—**तदिति सर्वनाम्नैकवचनान्तेन यत् परामृश्यते, तद्देवतासम्बन्धि। न चैतेन धानादीनि परामृश्यन्ते**। कुतः ? **यदि** हि **परामृश्येरन्**, ततस्तेषां बहुत्वात्तानीति **बहुवचनं स्यात्, यदि वा तत्तदिति वीप्सानिर्देशः** स्यात्। न तु तद्[1] द्वयमप्यस्ति। **तस्मान्न धानादीनां परामर्शः। यदि**[2] **चैतानि परामृश्य** तच्छब्देन **देवतया**[3] **सम्बध्येरन्**, ततः **प्राजापत्यानीति बहुवचनमभविष्यत्। अतः सर्वनाम्नैकवचनान्तेन संसृष्टमि**त्येतत्**परामृश्य** तस्य **देवतासम्बन्धः** क्रियते। एवं चेदेको यागः।

पक्षान्तरमाह—**तत्रैवं** केचिद्**वर्णयन्ति। सर्वनाम निर्दिष्टस्य प्रतिनिर्देशकम्। द्रव्याणि च** पूर्व**वन्निर्दिष्टानि** [ पूर्वं निर्दिष्टानि, ] **न संसर्गः**। तस्माद् द्रव्याणां परामर्शः। **बहुवचनाभावस्तर्हि कथम्** ? उत्तरम्—**प्रातिपदिकविरोधान्न विवक्षितं पाशवत्। अथवा गुणत्वाद्** गुणवचनत्वादित्यर्थः। सर्वनाम **यद्यत्परामृशति तदीयं लिङ्गसंख्यं**[4] **भजते**। एवमपि बहूनां निर्देशाद्बहुवचनं[5] स्यादेव। अत आह—**तस्य च** धानादिद्रव्यस्यै**कैकस्यानेन परामर्शादेकवचनमविरुद्धम्**। ननु प्रत्येकं बहूनां परामर्शे वीप्सा स्यादत आह—**अस्त्यामपि वीप्सायां वीप्साकार्ये वर्तते** सर्वनामशब्दः। वीप्साया ह्येतत् कार्यं

१. 'तत्' नास्ति—क०।
२. त्वे—ख०, वै—क०।
३. देवतायां—पु० मु०।
४. च लभते—ग०।
५. स्यात्। तत्राह—ग०।

यदुतानेकार्थपरः शब्दस्य प्रयोगो गम्यते। सर्वनाम च निर्दिष्टानां प्रतिनिर्देशकम्। बहूनि चात्र द्रव्याणि निर्दिष्टानीति तत्परत्वं सर्वनाम्नो विनैव वीप्सया गम्यते। यथा अध्रिगौ मातृप्रभृतीनां वक्षःप्रभृतीनां च शब्दानां पशुगणे विनैव वीप्सया एकवचनान्तानामेव बह्वर्थप्रतिपादकत्वं सम्बन्धिभेदादेवावगम्यते, तद्वदिहापीति। एवं च प्रत्येकं [1]'परामृष्टानां प्रत्येकमेव देवतासम्बन्धाद् बहवो यागाः। कथं तर्हि संसृष्टशब्दः? अत आह—एवं च सति **संसृष्टमित्येकप्रदानत्वादनूद्यते**। यत्तु प्राजापत्यशब्दोऽपि बहुवचनान्तः स्यादित्युक्तम्, तत्राह—**प्राजापत्यमित्येकदेवताभिप्रायेणैकवचनम्**। एकदेवं हि संसृज्यैकीभूतं प्रदीयत इति तदभिप्रायमेकवचनमिति। तस्माद् बहवो यागा इति।

पुनः प्रथमपक्षवादिन आहुः—**इदमपि दर्शनं न शोभनम्**। तथा हि—**सन्निहितस्य** निर्दिष्टस्य प्रतिनिर्देशकं सर्वनाम, ततोऽनन्तरत्वात्तण्डुलानामेव तत्परामर्शकं स्यात्, नेतरेषाम्। न चैवमिष्टम्। किञ्च, तदिति नपुंसकलिङ्ग**प्रातिपदिकार्थस्य वाचकम्। अतो यत्र नपुंसकलिङ्गं विद्यते, तदनेन परामृ**श्यते दधि मधु घृतमुदकं च। **धानानां तण्डुलानां च नपुंसक**लिङ्गाभावादशक्योऽनेन **परामर्शो** विलिङ्गत्वात्। ननु सर्वेषां सन्निहितत्वात् सन्निहिताभिधायि सर्वनाम सर्वत्र वर्तितुमर्हति। लिङ्गं तु प्रातिपदिकविरोधादविवक्षितं भविष्यतीत्यत आह—**अयं च न्यायोऽन्यत्रापि** सूत्रभाष्यकाराभ्या**मेवोक्तः**। यथा सन्निहितेष्वपि बहुषु सर्वनाम केषुचिदेव लिङ्गवशेन वर्तते, [2]नाविलिङ्गेष्विति। क्वोक्तोऽत आह—**लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात्**" इत्यत्र। तत्र हि सन्निहितेष्वपि सर्वेषु पशुषु "प्रास्मा अग्निं भरत" इत्यत्रास्मैपदं **पुल्लिङ्गं मेष्या न सम्बध्यते, स्त्रीत्वा**दित्युक्तम्। **एवमिहापि** स्यात्। अतः **संसृष्टशब्देन नपुंसकलिङ्गेनास्य सम्बन्धो** लिङ्गानुगुण्यात्। एव चैकवचनमपि समञ्जसं भवतीत्याह—**तस्य च** संसृष्ट**स्यैकत्वाद्देवतासम्बन्धे** सत्ये**कवचनं न विरुध्यते**। तस्य देवतासम्बन्धे सत्येक-

---

१. 'प्रत्येकं ''एवं च' नास्ति—क०।

२. नात्रि—क०।

वचनं न विरुध्यत इत्यन्वयः। **अत एको यागः**। एवं पक्षद्वयं दर्शितम्। अनयोर्बहुयागपक्ष एव श्रेयानिति स्वयमेव द्वादशाद्ये वक्ष्यति। तच्च तत्रैव वक्ष्यामः। प्रासङ्गिकं समाप्याधिकरणमनुसन्धत्ते—**मधूदके द्रवसामान्यादिति। विरोधे धर्माणां भूयस्त्वेन धर्मनियमं वक्ष्यति। तेन सिद्धे नेदमधिकरणमारभ्यते। किमाज्याद् धर्मप्राप्तिर्मधूदकयोरुत सान्नाय्यादिति।** मधूदकयोर्हि सान्नाय्यविकारत्वे तयोर्दध्नश्च त्रयाणां सान्नाय्यधर्मप्राप्तिः। आज्यधर्मप्राप्तिस्तु घृतस्यैकस्यैवेति धर्म[1]प्राप्तिविरोधे भूयोऽनुग्रहात् सान्नाय्यधर्मत्वं सर्वस्य स्यात्। आज्यविकारत्वे तु तद्धर्मत्वमिति। तत्र[2] स्वाभाविकं द्रवत्वं मधूदकयोः पयसश्च समानम्। आज्यं तु न स्वभावतो द्रवम्, किन्त्वग्निसंयोगादिति नास्ति सादृश्यमिति पूर्वः पक्षः। सिद्धान्तस्तु वर्णसामान्यात् धर्मानुग्रहाद् द्रवत्वस्य चास्वाभाविकस्यापि परोपाधिकस्यापि तावत् सद्भावादाज्यं सुसदृशमिति तद्विकारत्वमेव मधूदकयोरिति ॥ ४० ॥

धर्मानुग्रहलाभेन वर्णसामान्यतस्तथा।
द्रवत्वस्यापि सद्भावादाज्यधर्म मधूदकम् ॥

**इति तन्त्ररत्नेऽष्टमस्य प्रथमः पादः ॥**

---

[ १—वाजिनयागसुराग्रहयागयोरैष्टिकधर्मातिदेशाधिकरणम् ]

## वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ पू०

द्रव्यं प्रति वाजिनयागस्याप्रयोजकस्यापीतिकर्तव्यताकाङ्क्षा[3] तत्प्रयुक्ति[4]सामर्थ्य [5]चोरुक्रमयागवदस्त्येवेति प्रकृतिविशेषश्चिन्त्यते। तत्रासोमे सोमशब्दस्तद्धर्मातिदेशकोऽग्निहोत्रशब्दवत्[*]। एवं चानुवषट्कारादिदर्शनमुपपन्नं भवति।

---

१. 'प्राप्ति' नास्ति—ग०।
२. 'तत्र' नास्ति—ग०।
३. 'इतः' अधिकः—ग०।
४. सामान्यं—ग०।
५. चोक्त—क०।

तस्मात् सोमधर्माणः सौत्रामणिकग्रहा वाजिनं चेति प्राप्ते, अभिधीयते। सोमशब्दोऽ-र्थवादगतः[1] प्रशंसामात्रौपयिकत्वान्नातिदेशकः। अतो हविःसामान्यादौषध-विकाराः सुराग्रहाः, वाजिनं च सानाय्यविकारः। अनुवषट्कारादि तु वाचनिकं भविष्यतीति। सत्यपि चातिदेशे पृथगङ्गानि न कर्तव्यानि, पशुपुरोडाशस्येव प्रधानार्थैरेवाङ्गैः प्रसङ्गादुपकारसिद्धेः। यद्यपि च द्रव्यस्याप्रयोजको वाजिनयागः प्रतिपत्तिश्च, तथाप्यविरुद्धोऽतिदेशः। सति चातिदेशे प्रसङ्गोऽपि युक्त एवेति।

ये तु लिङ्गबलादेवाङ्गेष्वतिदेशमिच्छन्ति, तेषां सौत्रामणिकेषु ग्रहेषु पश्वङ्ग-भूतेषु न दार्शपौर्णमासिकविध्यन्तातिदेशः सिद्ध्येत्। नापि चातुर्मास्याङ्गे वाजिनयागे। नहि तेषु [2]किञ्चिदपि दार्शपौर्णमासिकविध्यन्तप्राप्तिद्योतकं लिङ्गमस्ति। यदि हि कस्याञ्चिदपि शाखायामस्मिन्नर्थे लिङ्गं स्यात्, अवश्यमेव लिङ्गप्रधानेन सूत्रकारेण पूर्वपक्षवाद्युक्तसौमिकलिङ्गप्रतिपक्षतया सिद्धान्तवेलायामुपन्यस्तं स्यात्। अनुपन्यासात्तु नास्त्येवेति मन्यामहे। यत्तु [3]क्रयादिदर्शनम्, तद्वचनत्वान्न लिङ्गं भवितुमर्हति। यदि च तल्लिङ्गं स्यात्, ततः सौमिकविकारत्वमेव भवेत्। लिङ्ग-वशेन हि कल्प्यमानाकाङ्क्षा सैव कल्पयितव्या, या[4] लिङ्गमुपपादयति। [5]क्रयादि-दर्शनस्य च सौमिकविध्यन्ताकाङ्क्षैवोपपादिका, न दार्शपौर्णमासिकाकाङ्क्षा, [6]नाप्याकाङ्क्षामात्रम्। तत्र[7] सोमविकारत्वमेव स्यादिति सिद्धान्तहानिः स्यादि-त्यास्तां तावत्। ननु ग्रहेषु पुरोडाशशब्दः कार्यलक्षणार्थ इति दशमे वक्ष्यते[8]।

---

१. दावगतः—क०।

२. 'किञ्चिदपि' नास्ति—ग०।

३. क्रिया—क०।

४. यया—क०।

५. क्रिया—क०।

६. 'नाप्याकाङ्क्षा' नास्ति—क०।

७. 'तत्र सो' नास्ति—ग०।

८. वक्ष्यति—ग०।

तत् कथमिह पुरोडाशधर्मकत्वात् पुरोडाश इत्युच्यते। नैष दोषः। उभयथापि सम्भवात्। 'अपुरोडाशेषु हि पुरोडाशशब्दस्तत्कार्यापत्त्यापि सम्भवति, तथा धर्मसादृश्यादपि, उभयथाप्यैष्टिकविध्यन्तसद्भावात्[२]। द्वेधापि सम्भवे कश्चित् प्रकारः क्वचिदुक्त इति। तेन हविस्सामान्यात् पुरोडाशविकारा ग्रहाः। वाजिनं च सान्नाय्यविकार इति[३] ॥ ९ ॥

[ २—अग्नीषोमीयपशोः सान्नाय्यविकारत्वाधिकरणम् ]

**पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ १० ॥ पू०**

पशुर्देवतासाम्यात् पुरोडाशविकारः। न[४] च पशुसान्नाय्ययोः किञ्चिदपि सादृश्यमस्ति, येन हविस्सामान्यात् सान्नाय्यविकारत्वं स्यात्, अत्यन्तविलक्षणत्वात्। नहि कस्यापि दधिपयसोः पशौ च सादृश्यमतिरास्ते। तस्मात् पुरोडाशविकार इति। उच्यते। नावश्यं चक्षुर्ग्राह्यमेव सादृश्यम्, अन्यथापि सम्भवात्। तेन पशुप्रभवत्वसामान्याद्देवतासामान्याच्च हविस्सामान्यस्य बलीयस्त्वादुखादर्शनाच्च सानाय्यविकार इति ॥ १० ॥

[ ३—अग्नीषोमीयपशोः पयोविकारत्वाधिकरणम् ]

**दध्नः स्यान्मूर्तिसामान्यात् ॥ १५ ॥ पू०**

सति सानाय्यविकारत्वे घनत्वविशेषाद्दधिविकारः। सद्यःकालत्वपश्वानन्तर्यगतिमत्त्वैः पयसा सुसदृशत्वात् पयोविकारः। सद्यःकालं हि पयः पशुश्च। साक्षाच्च पशुतः प्रभवति पयः पशुश्च। दधि तु पशुप्रभवात् पयसः प्रभवति, न साक्षात् पशोः। गतिमत्त्वं च द्वयोरपि तुल्यमिति ॥ १५ ॥

[ ४—आमिक्षायागे पयोयागधर्मातिदेशाधिकरणम् ]

**आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥ पू०**

---

१. 'अपुरोडाशेषु हि' नास्ति—ग०।

२. 'इति' अधिकः—ग०।

३. 'न भाणाः सोमविकारा इति' अधिकः—ग०।

४. तेन—क०।

किमुभयविकृतिरामिक्षा, उत दधिविकृतिः, उत पयोविकृतिरिति संशयः। तत्रोभयोर्दधिपयसो रसस्यामिक्षायामुपलम्भादुभयात्मिकैवामिक्षा, विशेषाग्रहणात्। तेनोभयधर्मा स्यादित्येकः पक्षः। एकविध्यन्तनिराकाङ्क्षत्वात्तु यागस्य न द्वयप्राप्तिः। न च हविष उभयात्मकत्वादुभयधर्माकाङ्क्षायामगृह्यमाणविशेषतया संसृष्टहविर्वदनेकविध्यन्तप्राप्तिर्युक्ता, दध्न एव हविष्ट्वात्। तद्धि संस्कारवाक्ये "तप्ते पयसि दध्यानयति" इत्यत्र द्वितीयानिर्दिष्टं प्रधानम्। पयस्तु सप्तमीनिर्देशाद् गुणभूतम्। प्रधानं च सर्वनाम्ना प्रतिनिर्देशमर्हति "सा वैश्वदेव्यामिक्षा" इति। तस्माद् दध्येवामिक्षा। घनत्वाच्च दध्यात्मकत्वमेव तस्याः प्रतीयते। तस्माद्दधिविकार इत्यपरः पक्षः। सिद्धान्तस्तु पय एवामिक्षाऽत्र हविः। तेन पयोविकारः। दधि तु तत्संस्कारकम्। एतच्च स्वयमेव वार्त्तिककारेण चतुर्थे प्रपञ्चितमिति नेह प्रतन्यते ॥ १९ ॥

[ ९—सत्राहीनयोः सत्राहीनोभयात्मकद्वादशाहधर्माणां व्यवस्थयातिदेशाधिकरणम् ]

**सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४ ॥ पू०**

इह यद्यपि संज्ञाभेदेन व्यवस्थितं विध्यन्तद्वयमाम्नातम्, तथापि द्वादशाहकर्मण एकत्वाद्विकृतिषु च द्वादशाहवच्छन्दस्य वाक्यशेषत्वेन कल्पनात्तदीयविध्यन्तद्वयं विकल्पेन सर्वविकृतिषु प्राप्यते। न तु व्यवस्थायां प्रमाणमस्तीति प्राप्ते, ब्रूमः—स्यादेतदेवं यदि द्वादशाहवदित्येतावत् कल्प्येत। [1]सादृश्यविशेषात्त्वसनोपायिचोदनेषु सत्रसंज्ञकेषु गणेष्वासनोपायिचोदनद्वादशाहेत्थंभाव एव वाक्यशेषत्वेन कल्प्यते, सत्रद्वादशाहवदिति। तथाऽहीने[2]ष्वहीनस्य अहीनद्वादशाहवदिति। भवतु वा द्वादशाहवदिति वाक्यशेषः, तथापि निमित्तवशादेव[3] व्यवस्था। प्रकृतौ सत्रत्वं निमित्तीकृत्य केचिद्धर्मा विहिताः। विकृतिष्वपि नासति सत्रत्वे भवितुमर्हन्ति। तथाऽहीनत्वनिमित्ता अपि। तस्माद्व्यवस्थैवेति ॥ २४ ॥

---

१. 'सादृश्य' इत्यतः 'कल्प्यते' इत्यन्तं नास्ति—ग०।

२. 'ष्वह[र्ग]ण' इत्येव—ग० ।

३. देवमादिषु—ग० ।

[ ९—पञ्चदशरात्रकुण्डपायिनामयनयोस्सत्त्वासत्त्वात्मकद्वादशाह-
धर्मातिदेशाधिकरणम् ]

## अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥ पू०

द्वितीये पादे[1]ऽन्त्यमधिकरणं व्याख्यायते। **यत्रातिरात्रोऽन्ते दृश्यते,** [2]**सोऽहीनो** यथा द्विरात्रादिः। **अत्र** च पञ्चदशरात्रे कुण्डपायिनामयने **चान्तेऽतिरात्रो** दृश्यते, नादौ। [1]**तस्मादहीनत्वम्। एवं चेदहीनविध्यन्तोऽत्र स्यात्,** पूर्वाधिकरणन्यायात्। ननूपायिचोदनात्वं [ चोदनावत्त्वं ] मन्त्रलिङ्गमपि दृश्यते, तत्कथमेकान्ततोऽहीनत्वमिति निश्चयः। सत्यम्। अहीनलिङ्गं तु बलवत् "शास्त्रस्था वा तन्निमित्तत्वात्" इति न्यायात्। श्रूयते हि—"यदन्यतरतोऽतिरात्रस्तेनाहीनः" इति। तस्मादहीनत्वमिति ॥ २९ ॥

## सत्रे वोपायिचोदनात् ॥ ३१ ॥ सि०

अध्येतारः **सत्रमिदं स्मरन्ति।** सत्रसमाख्याते काण्डे कर्मद्वयमिदं समामनन्ति। तस्मात् सत्रम्। यत्तु वचनादहीनत्वमित्युक्तम्, [3]तत्राह—**न चेदृग्वचनमस्ति योऽन्यतरतोऽतिरात्रः सोऽहीन इति।** यत्त्विदं "यदन्यतरतोऽतिरात्रस्तेनाहीनः" इति, तत्पञ्चदशरात्रस्तुत्यर्थम्। स्वयं तावत् सत्रम्, अन्यतरतोऽतिरात्रत्वाच्चाहीनः। तस्मादुभयात्मकत्वात् प्रशस्ततरोऽयमित्येवं स्तुत्यर्थमौपचारिक-

1. 'तस्मात् तत्त्वमहीनत्वम्' इति क० ख० संज्ञितयोः कोशयोः पाठ उपलभ्यते। तदनुसारेणानुसन्धीयमाने टीकायां 'तस्मादहीनत्वम्' इत्यस्य स्थाने 'तस्मात् तत्त्वम्' इति पाठान्तरं प्रतिभाति। तथाहि सति 'तत्त्वम्' इति मूलपदम्। तस्य व्याख्यानपदम् 'अहीनत्वम्' इति तन्त्ररत्नं सुयोजं भवेदिति।

१. ष्टमाधि–ग०।

२. 'सो' नास्ति–क०।

३. 'तत्राह' नास्ति–ग०।

मही[1]नत्वमुक्तमिति । तस्मान्न वाचनिकमहीनत्वम् । किं तर्हि ? **यमध्येतारोऽहीन इति स्मरन्ति** सोऽहीनः । न चात्राहीन इति[2] स्मृतिरस्ति । तस्मात् सत्रम् । इतश्चैवमित्याह—**उपायिचोदनेन च** सत्रलिङ्गेन प्रधानचोदनागतेन **सत्रत्वम्**, अन्तरङ्गत्वात्तस्य । वाक्यान्तरगतं त्वहीनलिङ्गम् । अतो दुर्बलं बहिरङ्गत्वात् ॥ ३१ ॥

सत्रलिङ्गबलीयस्त्वात् सत्रत्वमनयोर्भवेत् ।
प्रयोगवाक्यगामित्वादन्तरङ्गं च तद्यतः ॥

**इति श्रीतन्त्ररत्नेऽष्टमस्य द्वितीयः पादः ॥**

———

[ १—स्थानसामान्यात् देवतासामान्यस्य बलीयस्त्वाधिकरणम् ]

## हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥ पू०

गणसामान्याद्गणस्य तद्विकारत्वम् । तत्र देशसामान्यात् प्रथमः प्रथमविकारः, द्वितीयो द्वितीयविकार इति पूर्वः पक्षः । गणस्य[क्रमस्य] [3]अशाब्दत्वात् प्रचयावगम्यत्वात् प्रथमद्वितीयभावस्य चेतरसापेक्षप्रतीतित्वात् शब्दावगतमनपेक्षप्रतीतिकं च देवतासामान्यमेव बलीयः । तेन द्विदेवत्यः प्रथमोऽप्यग्नीषोमीयविकारः, द्वितीयोऽप्येकदेवत्य आग्नेयविकार इति ॥ १ ॥

[ २—जनकसप्तरात्रे द्वादशाहिकानां सप्तानामह्नां क्रमेण धर्मातिदेशाधिकरणम् ]

## गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥ पू०

तृतीये पादे द्वितीयमधिकरणं व्याख्यायते । यत्र [4]गणरूपेणैव चोदना, तत्र कथम् ? तत्रापि प्रथमद्वितीयादिभावस्य सापेक्षप्रतीतित्वादनपेक्षं त्रिवृत्त्वमेव बलवत् । अतो जनकसप्तरात्रस्याद्यानि चत्वार्यप्यहानि त्रिवृत्त्वसामान्यात् पार्ष्ठिकप्रथमाहःप्रकृतीनीति ॥ ३ ॥

---

१. नत्वमित्यु–ग० ।
२. 'इति' नास्ति–ग० ।
३. अशब्द–क० ।
४. चमस उपुर्ण च–ग० ।

**नानाहानि वा सङ्घातत्वात् प्रवृत्तलिङ्गेन चोदनात् ॥ ४ ॥ सि॰**

**सन्ति तत्र** गण**चोदन**या "जनकसप्तरात्रेण यजेत" इत्यनया **प्रवृत्तानि** [1]सुत्यादिनानि **नानाहानि द्वादशाहिकानि चत्वारि । तान्यनूद्य** "चत्वारि त्रिवृन्त्यहानि" इत्यनेन **त्रिवृत्त्वं विधातुं शक्यत इत्येतदयुक्तम्** । कुतः ? **"जनकसप्तरात्रेण यजेत" इति प्रयोगचोदनेयं** फलश्रवणात् । **प्रयोग**चोदना **चोत्पत्तिम**पेक्षते, स्वयमन्यत्र व्यापृतत्वात् । ननु यद्यप्यपेक्षते, तथापि "चत्वारि त्रिवृन्त्यहानि" इत्यत्र यजिश्रवणाभावेन यागोत्पत्तेरलाभात् स्वयमेवोत्पत्तिमपि कुर्यादत आह—**अहःशब्दो यागविशेषवचनः** सोमयागपरिमाणवचनः सन्[2] "चत्वारि त्रिवृन्त्यहानि" इत्यत्र श्रूयमाणोऽश्रुत**मपि विशेष्यं** याग**मनुमापयति । नहीदं विशेषणं** सोम**यागमन्तरेण सम्भवति । यथा वज्री**ति विशेषण**मिन्द्र-मनुमापयति,** तथेदमपि । तत्र **बहुवचनादनियतबहुत्वेषु** प्राप्तेषु[3] **चत्वारीति नियम्यते । तेषां त्रिवृत्त्वमग्निष्टोममुखत्वं च विधीयते** । [4]ततः **"चत्वारि त्रिवृन्त्यहानि भवन्ति" इत्यनेनोत्पन्नानि** कर्माण्यनूद्य **"जनकसप्तरात्रेण यजेत" इत्यनेन फले विधीयन्ते** । न त्वनेनोत्पन्नानामितरेण गुण[5]विधानम् ।

कथं तर्ह्यधिकरणमत आह—तत्र **पूर्वपक्षे त्रिवृत्त्वेन लिङ्गेन** पार्ष्ठिकस्य **प्रथमस्याह्नो विध्यन्तश्चतुर्ष्वपि । सिद्धान्ते** तु प्रधान**यागानां गुणः सङ्घातः** । तेन **तदीयेन गुणेन** प्रधानसम्बन्धिना सङ्घाताख्येन गुणेन **नानाह्नां** द्वादशाहिकानां **यो धर्मः सोऽतिदिश्यते, सङ्घातसामान्यात्** । ननु त्रिवृत्त्वे प्रथमविध्यन्तः कस्मान्न भवत्यत आह—**त्रिवृत्त्वं पुनरङ्गावस्थितं** स्तोत्रीयापरिमाणत्वात् । अतस्त**द्बहिरङ्गत्वादन्त**रङ्गभूतात् सङ्घातलिङ्गाद् **दुर्बलम्** । पूर्वाधिकरणे तु देवतासामान्यम्, देशसामान्यं चोभयमपि प्रधानगुणः ।

---

१. 'सुत्या' नास्ति–ग० ।

२. 'सन्' नास्ति–क० ।

३. 'प्राप्तेषु' नास्ति–क० ।

४. तत्र–ग० ।

५. गुणो विधीयते–ग० ।

तत्र शाब्दत्वान्निरपेक्षत्वाच्च देवतासामान्यं बलवदित्युक्तम् । इह त्वङ्गावस्थितत्वात् त्रिवृत्त्वं दुर्बलम् । शाब्दश्च सङ्घातो न पूर्ववत् [1]प्रचयादवगम्यत इति विशेष इति । [2]**एवं वर्णयितव्यमधिकरणम्** । न तु यथाभाष्यम् । कथम् ? इत्याह—**यथा**[3] **तु भाष्यकारेण वर्णितम्, तथा बहवो दोषाः स्युः । कथम् ? चत्वारीत्यनूद्य त्रिवृत्त्वं विधीयत** इत्युक्तम् । **न च सप्तरात्रे चत्वारि सन्ति अविधीयमानत्वाच्चतुर्णाम्, यान्यनूद्येरन्** । सप्तसु विहितेषु कथं चत्वारीत्यनुवादः स्यात् । **अभ्युपेत्य ब्रूमः—सन्तु वा** सप्तानामवयवभूतान्यर्थप्राप्तानि **चत्वारि,** तथापि यदि तदनुवादेन त्रिवृत्त्वं विधीयते, **तत्राग्निष्टोममुखानीति द्वितीयो गुणो विधेयः । तत्र** प्राप्ते कर्मण्यनेकगुणविधानाद्**वाक्यं भिद्येत** । यदि हि यानि सप्तरात्रस्याद्यानि चत्वार्यहानि तान्येवानूद्य त्रिवृत्ता विधीयत इत्यत्र किञ्चित्प्रमाणं भवेत्, ततोऽग्निष्टोममुखानीति नित्यानुवादः स्यात् । न तु तत्र प्रमाणमस्ति । तत्र यानि कानिचिच्चत्वार्यनूद्य त्रिवृत्त्वे विधीयमानेऽग्निष्टोममुखत्वमप्यप्राप्तत्वाद्विधेयं स्यादिति वाक्यभेदः । अथ यान्यग्निष्टोममुखानि चत्वारीत्यनूद्य तानि त्रिवृन्तीति विधीयते, तथापि विशिष्टानुवादाद्वाक्यभेदः स्यात् । तस्मादियमेवोत्पत्तिचोदनेति **सिद्धम्** ॥ ४ ॥

[ ३—षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ]

## कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥ पू०

पृथक्त्वनिवेशित्वात् संख्यायाश्चत्वारः षडहा इति चतुर्विंशतिरहानि प्रतीयन्ते । षडहावृत्तौ चतुःषडह इति स्यात् । ननु तत्रापि प्रकरणान्तरन्यायेन कर्मभेदात् षडहधर्मकाश्चत्वारो यागगणा विधीयन्त इति कथमसामञ्जस्यं संख्यायाः ? उच्यते । एवंजातीयकेषु भावनामात्रं भिद्यते, न धात्वर्थ इत्युक्तम्—

---

१. **प्रचयावगम्यः—क० ख० ग० ।**

२. **एव—ग० ।**

३. **यथात्र—क० ख० ।**

भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः ।
नाम्ना हि तदुपादानमासनोपायिचोदिते ।। इति ।

तस्मादेकस्यैव षडहस्याभ्यासादसामञ्जस्यं संख्यायाः स्यात् । तस्माच्चतुर्विंशतिरहानि विधीयन्त इति द्वादशाहिकानां नानाह्नां प्रवृत्तिरिति प्राप्ते, ब्रूमः । प्रत्यक्षश्रुतेन षडहशब्देन तत्प्रवृत्तौ निश्चितायां नानुमानिकेन चतुर्विंशतिप्रत्ययेन कार्यमस्ति । नह्यत्र चतुर्विंशतिसंख्या श्रुता, षडहचतुष्टेन तु साऽनुमातव्या । तस्मात् दुर्बला। संख्यायाश्चासामञ्जस्यं पूर्वपक्षेऽपि तुल्यम् । तत्रापि हि द्वादशाहिके दशरात्रे प्रवर्तमानेऽभ्यासेनैव चतुर्विंशतिसंख्यापूरणम् । ननु च तत्र चतुर्विंशतिरहानि विधीयन्त इति कथं न सामञ्जस्यं संख्यायाः ? यद्यपि हि तेष्वावृत्त्या दशरात्रविध्यन्तः प्रवर्तते, तथाप्यह्नां पृथक्त्वात् समञ्जसैव संख्या । नह्यहान्येतानि द्वादशाहिकानि, प्रकरणान्तरत्वात् । यथा हि सिद्धान्तेऽभिप्लवादिशब्देन प्रसिद्धषडहप्रत्यभिज्ञानात्तस्यैवावृत्तिः, नैवमिह केनचिद् [1]द्वादशाहिकदशरात्रप्रत्यभिज्ञास्ति । तस्मादह्नां भेदाद्युक्तैव संख्या । सत्यमेवमेतत् । तथापि विध्यन्तस्य [2]तथाविधस्यैवावृत्तेरह्नामपि शास्त्रतो भिन्नानामपि प्रत्यक्षतः कश्चिदपि भेदो नावगम्यते । तेन स्पष्टभेदाभावादत्यन्तसामञ्जस्यं पूर्वपक्षेऽपि संख्याया न लभ्यत इत्यभिप्रायेणैतदुक्तमित्यदोषः । तत्सिद्धं प्रसिद्धस्यैव [3]षडहस्य प्रत्यक्षेण षडहशब्देनाभिहितस्याभ्यासोऽत्रेति ।। ६ ।।

[ ४—शतोक्थ्यादिसंस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ]

## संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ।। ८ ।।

उक्थ्याग्निष्टोमादिशब्दानां ज्योतिष्टोमनामधेयत्वं मन्यमानः, तस्यैव दूरस्थस्यापि शताद्यावृत्तिरङ्गतया "शताग्निष्टोमं भवति" इत्यादिभिर्विधीयते । एवं च प्रसिद्धस्यैवोक्थ्याद्यात्मकस्य ज्योतिष्टोमस्य संख्यामात्रविधानाल्लाघवं भवति । इतरथा

---

१. 'दशाहिक' नास्ति—क० ।

२. 'तथाविधस्य' नास्ति—ग० ।

३. षडहप्रत्यक्षेण—क० ।

स्त्वत्यन्तापूर्वाणि कर्मान्तराण्येवंसंख्यानि संस्थाविशिष्टानि विधीयन्त इति गौरवं स्यात्। तस्माज्ज्योतिष्टोमाभ्यास इति मन्यते। सिद्धान्तस्तु—नाभिप्लवादिशब्द-वदग्निष्टोमादिपदं नामधेयम्। किं तर्हि? य एवैवंसंस्थः क्रतुस्तत्रैव वर्तते। तस्मात् प्रसिद्धकर्मप्रत्यभिज्ञाभावात् कर्मान्तराण्येव शतादिसंख्यानि संस्थाविशिष्टानि विधीयन्ते। तत्र च गणसामान्याद् द्वादशाहिको विध्यन्तः। एवं च यागभेदात् संख्या-सामञ्जस्यं भविष्यति। यद्यपि चास्मिन्नपि पक्षे दशरात्रविध्यन्तस्यैवावृत्तिः, तथापि यागास्तावद् भिन्ना एवेति सामञ्जस्यं संख्याया इति। अनेकार्थविधिश्चापूर्वभावना-विधावदोषः। ननु नात्र भावना श्रूयते, "शताग्निष्टोमं भवति" इत्येतावन्मात्र-श्रवणात्। [1]सत्यम्। [2]तथापि "आग्नेयोऽष्टाकपालो भवति"[3] इत्यादिवल्लक्षणया भावनैवात्र भवतेरर्थः। विशेषतश्चात्र समासोपात्तत्वादनेकविध्युपपत्तिः। यत्तु [4]पञ्चोक्थ्यमित्यत्र गणचोदनयैव प्राप्तानामह्नां संस्थामात्रं विधीयत इति भाष्य-कारेणोक्तम्, तदेवमपि संभवतीत्यतिशयार्थमुक्तम्। परमार्थतस्तु गणचोदनायाः फलं सम्बन्धव्यापृतत्वादन्यत उत्पत्तिमपेक्षमाणायाः स्वयमुत्पत्तिपरत्वायोगादि-यमेवोत्पत्तिचोदनेति जनकसप्तरात्रन्यायेन द्रष्टव्यम् ॥ ८ ॥

[ ५—शतोक्थ्यादौ ज्यौतिष्टोमिकौक्थ्यादिस्तोत्रानुष्ठानाधिकरणम् ]

## गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥ पू०

"शतोक्थ्यं भवति" इत्यत्र द्वादशाहिको दशरात्रो दशकृत्व आवर्तते। तत्र च द्वावभितोऽग्निष्टोमौ, अन्तरालेऽष्टावुक्थ्याः, केषाञ्चित् सप्तोक्थ्या एकः षोडशी। तत्रोक्थ्यस्तोत्राणां ज्यौतिष्टोमिकेभ्य [5]उक्थ्यस्तोत्रेभ्योऽधिकाः केचिद्धर्मा आम्नाताः। तत्र शतोक्थ्यमित्यत्र दशरात्रे दशकृत्व आवर्तमाने प्रतिदशकं द्वौ द्वावग्निष्टोमा-

---

१. 'सत्यं' नास्ति—ग०।

२. 'अपि' नास्ति—क०।

३. 'इत्यादि' नास्ति—ग०।

४. पञ्चावस्थामित ?—ग०।

५. उक्थ्यातिरात्र—ग०।

वन्तरालेऽष्टावुक्थ्याः प्राप्ताः । तत्रोक्थ्यास्तावद् द्वादशाहवदेवानुष्ठीयन्ते । ये त्वग्निष्टोमास्तेषु "शतोक्थ्यं भवति" इति वचनादुक्थ्यस्तोत्राणि कर्तव्यानि । तत्र किं द्वादशाहिकान्युक्थ्यानि कर्तव्यानि, किं वा ज्यौतिष्टोमिकानीति संशयः । तथा "शतातिरात्रं भवति" इत्यत्रापि रात्रिपर्यायाः किं ये द्वादशाहिकयोः प्रायणीयोदयनीययोर्विशिष्टधर्मका [1]विहिताः, ते कर्तव्या उत ज्यौतिष्टोमिका इति । तत्र द्वादशाहे सर्वेषामुक्थ्यानां रात्रिपर्यायाणां च विशिष्टधर्मकत्वादिहापि तथैव कर्तव्यम् । एवं हि द्वादशाहवद्भावश्चोदकप्राप्तः समर्थितो भवतीत्येवं प्राप्ते, ब्रूमः—न तावच्चोदकेनायमर्थः प्राप्यते यदुत सर्वाण्युक्थ्यान्येवंधर्मकाणि कर्तव्यानीति । नहि तत्रैवं शास्त्रमस्ति । किन्तु यानि तत्रोक्थ्यसंस्थान्यहानि[2], तदङ्गत्वेन तत्र स्तोत्रविकारो विहितः । तेन विकृतावपि तद्विकारेष्वेव भवितुमर्हति, न त्वग्निष्टोमविकारेषु । [3]तेषु प्राकृतान्येवोक्थ्यादिस्तोत्राणि वचनात् कर्तव्यानि । तानि च ज्योतिष्टोम उत्पन्नानि न द्वादशाहे, तत्राप्यतिदेशेनैव तेषां प्राप्तेः । तेन यत्रोत्पन्नानि स्तोत्राणि, तत एव वैकृतान्यप्यहान्याकाङ्क्षितुमर्हन्ति, न द्वादशाहात् । नहि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके । तस्माज्ज्योतिष्टोमादुपचयः ॥ १० ॥

[ ६—बृहस्पतिसवादौ दाशतयीभ्य उत्पन्नगायत्रीणां समानयनाधिकरणम् ]

## गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात्संख्यात्वादग्निष्टोमवद्व्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥ पू०

उपचये चिन्तिते सति तत्प्रसङ्गादपचयश्चिन्त्यते । तत्र "गायत्रमेतदहर्भवति" इति [4]गायत्रशब्दस्य नानाभूतासु ऋक्षु संख्यामात्रेण प्रयोगाद् अतत्संख्यासु

१. 'विहिताः' नास्ति—ग० ।

२. संस्थानि ज्यहानि—क० ।

३. तेष्वप्रा—क० ख० ।

४. गायत्री—क० ।

चाप्रयोगात् संख्यामात्राभिधायित्वम्; न त्वग्वचनत्वम्। अतः प्राकृतीनामेव चोदकानुग्रहा[1]दक्षरावलोप इति पूर्वः पक्षः। सिद्धान्तस्तु—

संख्यामात्राभिधायी सन् सर्वत्रैव[प] प्रयोक्ष्यते।
मन्त्रमात्रे घटादौ चग्द्रव्ये नैष[1] प्रयुज्यते॥
तस्मात् संख्याविशिष्टस्य स्यादृग्द्रव्यस्य वाचकः।
तिस्रोऽनुष्टुभ इत्यत्रानुष्टुप्शब्दसमन्वयात्॥
संख्यामात्रप्रयोगोऽस्य गौण्या वृत्त्या न मुख्यतः।
न चात्र गौणता युक्ता मुख्यार्थस्यैव सम्भवात्॥
चोदकाबाधसिद्ध्यर्थं स्याच्चेदत्रापि गौणता।
नैवं नह्यतिदेशेन प्रत्यक्षश्रुतिबाधनम्॥
कुशप्राप्त्यनुसारेण न शरश्रुतिबाधनम्।
तस्मादुत्पत्तिगायत्र्य आनेतव्या इति स्थितम्॥ इति॥ १२॥

**तन्त्ररत्नेऽष्टमस्य तृतीयः पादः॥**

---

[ १—दर्विहोमशब्दस्य कर्मनामधेयताधिकरणम् ]

## दर्विहोमो यज्ञाभिधानं होमसंयोगात्॥ १॥ सि०

एवं त्रिविधेनातिदेशेनाविहितेतिकर्तव्यताकेषु कर्मस्वितिकर्तव्यताप्राप्तिमुक्त्वेदानीमपवादः क्रियते दर्विहोमेष्वविहितेतिकर्तव्यताकेष्वपि नास्त्यतिदेश इति। तत्रापवादार्थं दर्विहोमेषु प्रस्तुतेषु तद्गतम्[2] किं "यदेकया जुहुयाद्दर्विहोमं कुर्यात्" इत्यर्थवादे श्रुतो[3] गुणविधिर्नामधेयं वा दर्विहोमशब्दः? नामधेयत्वेऽपि किं

---

1. 'नैष प्रयुज्यते' इत्येव सर्वकोशेषु पाठः। अस्मिन् पाठे घटादौ ऋग्द्रव्यमात्रे चैष गायत्रीशब्दो न प्रयुज्यत इति व्याख्येयम्। 'एव प्रयुज्यते' इति चेत् पाठो दृश्येत स पाठः सुश्लिष्टः।
2. तद्गतमिति दर्विहोमगतमित्यर्थः। दर्विहोमसम्बन्धीति यावत्। तस्य 'विचार्यते' इत्युपरितनेनान्वयः। किं तद् दर्विहोमसम्बन्धि यद्विचार्यते? इति जिज्ञासायां किमित्यादिना सर्वेषामित्यन्तेन तस्य स्वरूपनिर्देशः।
3. श्रुत इति दर्विहोमशब्द इत्यस्य विशेषणम्।
१. हायात्याक्ष–ग०।

लौकिकानाम्, उत[1] सर्वेषामिति प्रसङ्गाद् विचार्यते। केचित्तु यदि केषाञ्चिन्नाम स्यात्, ततोऽन्यत्राग्निहोत्रशब्दवदतिदेशकं स्यात्। तस्मादतिदेशनिराकरणार्थं सर्वेषां नामेति प्रतिपाद्यते[2]। तदुपोद्घातत्वेन च गुणविधिनामधेयविचारः। सति हि नामत्वे कस्येति विचारो घटते नान्यथा। तस्मादतिदेशापवादायैव गुणविधि-नामधेयत्वविचारा इति मन्यन्ते। तत्तु नातिमनोहरम्। यदा हि लौकिकेष्वेव प्रयोगात्तेषामेवेदं नामेत्याश्रीयते, तदा वैदिकेषु प्रयोगाभावान्नातिदेशकत्व-प्रसङ्गः। यद्यपि च प्रयुज्येत, तथाप्यचोदनागतत्वान्नातिदेशकं स्यात्। यद्ध्यर्थ-वादगतं तन्नातिदेशकमित्युक्तम्। तस्मात् प्रासङ्गिकमेवैतत्। तत्र होमशब्दसंयोगा-न्नामधेयमित्युक्त्वा, लौकिकानामेव नामेदं तत्कर्तरि दार्विहौमिकशब्दप्रयोगा-दित्युक्त्वा, वास्तुहोमे वैदिकेऽपि प्रयोगाद्धोमशब्दाविशेषाच्च वैदिकानामपीत्युक्तम्। तत्रापि किं यजत्युत्पत्तीनामप्युत जुहोत्युत्पत्तीनामेवेति विचारितम्। तत्र यजत्यु-त्पत्तीनामपि पश्चाच्चतुरवत्तं जुहोतीति होमत्वापत्तेरुभयेषामपि नामधेयमित्याशङ्क्य, न यागस्य होमत्वापत्तिरियम्, किन्तु यागात् कर्मान्तरं प्रोक्षणादिवद् द्रव्यसंस्कारार्थं विधीयते। अतः प्रधानस्य त्यागमात्रपर्यवसायिनो होमत्वाभावाज्जुहो-त्युत्पत्तीनामेवेत्युक्त्वा, पुनर्गुणविधित्वं चोदयित्वा तत्प्रख्यन्यायसिद्धमेव नामधेयत्वं स्मारितम् ॥ १ ॥

[ ५—दर्विहोमानामपूर्वताधिकरणम् ]

## तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥ १० ॥ पू०

प्रासङ्गिकं समाप्य किं पूर्ववन्तो दर्विहोमाः किं वापूर्वा इति चिन्त्यते। तत्राव्यक्तत्वेन सौमिकविध्यन्तप्राप्तिमाशङ्क्य यागहोमत्वेनात्यन्तविसदृशत्वात्,- अव्यक्तत्वस्य च सति यागत्वे विशेषनिमित्तत्वात्, होमानामेव च नारिष्ठाग्निहोत्रा-दीनां धर्मवतां सद्भावान्न तदतिक्रमेण यागविकारत्वं युक्तमित्युक्तम्। अस्तु तर्हि नारिष्ठप्रकृतित्वम्। तथा चाग्निहोत्रे सिद्धवत् परिधिदर्शनम्,[1] सावित्रहोमे च

1. "अन्तःपरिधि निनयति" इति परिधिदर्शनम्।

१. 'वैदिकानां' अधिकः–ग०।

२. प्रतिपद्यते–ख०।

चेद्दिदर्शनमवकल्पते[1]। नैवम् । अग्निहोत्रस्य तावन्नारिष्ठप्रकृतित्वं[ त्वं न ] युक्तम्। उभयत्रापि कतिपयधर्मसद्भावेनागृह्यमाणविशेषत्वात्। होमान्तरेष्वपि न नारिष्ठविध्यन्तः संभवति, विशेषाभावात्। नहि ज्ञायते किं तेषु नारिष्ठविध्यन्तः प्रवर्तताम्, उताग्निहोत्रविध्यन्त इति । लिङ्गं तु प्राप्त्यभावाल्लक्षणया नेतव्यं परिधिदेशे वेदिदेशे चेति। त्र्यम्बक-होमेषु च [१]नारिष्ठाङ्गानामिध्म[इध्मा]बर्हिस्सामिधेनीनामभावदर्शनं तत्प्रकृतित्वे सति न घटते । तस्मादपूर्वाः । नन्वेवं दर्विहोमविधिवाक्यं साकाङ्क्षत्वादप्रमाणं स्यात् । होमेन स्वकार्यं कुर्यादित्यनेनैतावज्ज्ञातम्—यथा होमः स्वकार्यं करोति तथाविधो व्यापारः सम्पादनीय इति। सर्वत्र हि करणविधेरयमेवार्थः। परशुना छेत्तव्यमित्यादिषु कीदृशः स व्यापार इति करण-शास्त्रान्नावगम्यते। स यदि वा प्रमाणान्तरेण ज्ञायते, यदि वेतिकर्तव्यताशास्त्रेण बोध्यते। करणगतव्यापारविशेष एव हीतिकर्तव्यतेत्युच्यते। न चात्र प्रमाणान्तर-मस्ति। शास्त्रमपि चेदुपदेशात्मकमतिदेशात्मकं वा न स्यात्, साकाङ्क्षमेव स्यात्। नैष दोषः। यद्यपि करणशास्त्रान्नावगम्यते, तथाप्यनुत्पन्नस्य करणस्या-साधनत्वादुत्पादनं तावद्व्यापार इत्यर्थादवगम्यते। व्यापारान्तरं च न[२] शास्त्रेणो-क्तम्। तेनोत्पादनमेव द्रव्यदेवतेनेतिकर्तव्यता भविष्यतीति।

ये त्वेकदेशिनो निरधिकाराणां कथंभावापेक्षां नेच्छन्ति, तेषामिदं लिङ्गं न घटते। तथा हि—यद्यपि नारिष्ठविध्यन्तो दर्विहोमेषु प्रवर्तते, तथाप्याकाङ्क्षा-धीनत्वात् प्रवृत्तेः, त्र्यम्बकहोमानां च चातुर्मास्याङ्गत्वेन निरधिकाराणामाकाङ्क्षा-भावान्न तेषु नारिष्ठविध्यन्तप्रसङ्गः। तेन पूर्वपक्षेऽपि युक्तमेवेध्मादीनामभाव-दर्शनमिति न सिद्धान्तस्य लिङ्गं स्यात्। अपि चैवंवादिनां लिङ्गदर्शनादेवाग्निहोत्रे

---

1. "अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति" इति वेदिदर्शनम्।

१. नारिष्ठानां–ग० ।

२. 'न' नास्ति–ग० ।

[1]सावित्रहोमे च नारिष्ठविध्यन्तप्राप्तिः स्यात्। ननु सादृश्यविशेषाभावे कथं प्राप्तिः? लिङ्गदर्शनादेव विध्यन्तविशेषं प्रत्याकाङ्क्षापरिकल्पनादिति भणितमेतदित्यास्तां तावत् ॥ १० ॥

अपूर्वा दर्विहोमाः स्युरतः सादृश्यवर्जनात्।
एवमुक्तोऽतिदेशोऽयं सापवादः सविस्तरः ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
**अष्टमस्य चतुर्थः पादः ॥**

**अध्यायश्च समाप्तः ॥**



१. 'सावित्रहोमे' नास्ति—क० ।

## पार्थसारथिमिश्रविरचिते

# तन्त्ररत्ने

## नवमोऽध्यायः

[ १—धर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ]

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कार-स्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥ सि०**

**ननु च दशमानन्तरमूहश्चिन्तयितुं युक्तः**। कथं प्राक् तस्माच्चिन्त्यते। तथाहि—**उपकारातिदेशे सत्यूहोऽवकल्पते**। यदा[१] पदार्थावान्तरोपकारवत्तातिदिश्यते, तदोहोऽवकल्पते। **शास्त्रातिदेशे सत्यूहाभावः**। प्रदर्शनार्थं शास्त्रग्रहणम्। शास्त्रपदार्थयोरतिदेशे नोहः सिद्ध्यतीति। कथमित्याह—**यथा** [२]**प्रकृतावग्न्यन्वाधानादीनि ब्राह्मणतर्पणपर्यन्तान्यङ्गानि गृहीत्वा कथमेतान्युपकरिष्यन्तीत्यपेक्षायां तत्र**[1] **कानिचित् सन्निपत्योपकारकाणि** मन्त्रसंस्कारादीनि, **कानिचिदारादुपकारकाणि। एवं शास्त्रातिदेशपक्षे सौर्ये** चरौ **पेषणम**तिदिष्टेन शास्त्रेण प्राप्तं विहित[2] सद् **यद्यपि प्रकृतौ दृष्टार्थम्**,

---

1. 'आराडुपकारकाणि' इति प्रथमम्, पश्चात् 'संनिपत्योपकाराणि' इति पूनामुद्रितपुस्तके पाठः।

2. 'सद् यद्यपि' इत्येव सर्वेषु पाठो दृश्यते। तथापि 'तद् यद्यपि' इति पूनामुद्रितो मूलपाठ एव स्वरसः।

१. 'यदा' नास्ति—ख०।

२. प्रकृतात्—क० ख०।

**तथापीह** "तण्डुलान् पिनष्टि" इत्यस्य **शास्त्रस्यातिदिष्टत्वा**त्तेन विहितस्या-**दृष्टश्चरावुपकारः पेषणस्य प्रयाजादीनामिव** [1]कल्पेतेति [ कल्प्यत इति ] न चरौ पेषणस्य बाधः स्यात् । तदेवं यथा शास्त्रस्यातिदेशे बाधो न सिद्ध्यति, **एवमेव "अग्नये जुष्टं निर्वपामि" इतीदृशस्यै**व मन्त्रस्य सौर्येऽपि प्राप्तेरदृष्टो-पकारपरिकल्पनान्नोहः सिद्ध्येत् । **तस्मादष्टमानन्तरं दशमश्चिन्तनीयः ।** तत्र **बाधे कार्यापत्त्यर्थलोपादिभिः स्थिते ततः** पश्चा**न्नवमव्यापारो युक्तः** । तदुच्यते—**सत्यमुपका**रातिदेशाधीन ऊहः । **किन्तु सप्तमेऽतिदेशसद्भाव उक्तः** । तत **आग्नेयात् सौर्ये इतिकर्तव्यता भव**तीत्येवं प्रकारविशेषमन-पेक्ष्या**ष्टमे विशेषातिदेशः** कथितः । **नवमे सौर्य इतिकर्तव्यतायां प्राप्तायां** किमग्नये जुष्टमिति मन्त्रो**ऽविकृत** एव **प्रयोक्तव्यः, उत विकारोऽपि** कश्चिदस्तीत्यनेन **प्रसङ्गेन** प्राप्तिचिन्तानन्तरं प्राप्यमाणमन्त्रादिगतविकारविशेष-चिन्तनार्थं **नवम** आरभ्यते । यत्तूपकारातिदेशं दाशमिकमूहोऽपेक्षत इत्युक्तम्, तत्राह—**दशमव्यापारं वक्ष्यमाणमनुमन्यमान एवोत्तिष्ठति** । अनागतावेक्षणे-नापि ह्यर्थाश्चिन्त्यन्त एवेति । ततश्चिन्तिते सत्यूहे **"विधेः प्रकरणान्तरम्" इति सूत्रं नवमाक्षेपेणैवारभ्यते** । शास्त्रस्य वा पदार्थस्य वातिदेशात् कथमूहचिन्ता कृतेत्येवमाक्षेपेण दशमाद्यमारभ्यते । ननु दशमोपोद्धातभूतं तदधि-करणं कथं नवमाक्षेपेणैवारभ्यत इत्युच्यते ? अत आह—**तस्मान्नवमदशमयोः "अपि वाभिधानसंस्कारद्रव्यम्" इत्यनेन सद्भावः** प्रतिपाद्यते, न केवलस्य दशमस्य, द्वयोरपि तदधीनत्वात् । उपसंहरति—**तेनाष्टमानन्तरं नवम आरभ्यते** । दशमस्तु प्राप्त्यपवादरूपत्वात् सविशेषाया प्राप्तौ चिन्तितायां पश्चादारभ्यत इति ।

**त्रिविधश्चोह इत्येतदयुक्तं भाष्यम्** । **कथम् ? ऊहो नाम वितर्कणा** । न तर्कणामात्रम्, किन्तु विशिष्टा तर्कणा, यया धर्माणां "सूर्याय जुष्टम्" इत्यादि-रूपेणान्यथाभावो निश्चीयते । ततः किमित्याह—**सा चैकरूपा मन्त्रसाम-**

---

१. कल्पनीयः–पू० मु० ।

**संस्कारेषु क्रियमाणा, सैव सा न तस्याः कश्चिद्विशेषः। सामग्रहणानर्थक्यं च।** कथम्? **मन्त्रग्रहणेन संस्कारग्रहणेन चोपात्तत्वात्।**

अत्र **वर्णयन्ति—नैव वयमूहस्वरूपस्य भेदं प्रतिजानीमः, किन्तु विषयमस्य निरूपयामः। एषु** मन्त्रसामसंस्कारेषु **त्रिषु वक्ष्यमाणेषूहो** भविष्यतीति[1]। **तस्माद्विषयभेदः प्रदर्श्यते, न तूहभेदः।** ऊहरूपेणासत्यपि भेदे विषयत्रैविध्यात् त्रैविध्यं तस्य भवतीत्यर्थः। सामग्रहणं च मन्त्रान्तरेभ्यः संस्कारान्तरेभ्यश्च सामोहस्य विलक्षणन्यायसाध्यत्वात्। तच्च "सामप्रदेशे विकारः" इत्यत्र वक्ष्यामः।

अत्र भाष्यकारेणादितस्त्वयमर्थश्चिन्त्यते लक्षणारम्भसिध्यर्थम्। दर्शपूर्णमासादिषु समाम्नाता धर्माः किमपूर्वप्रयुक्ता उत यजिप्रयुक्ता इति। यजिप्रयुक्तत्वे धर्माणां साङ्कर्यादुपदेशसाधारण्यात् प्रकृताविव विकृतावपि नोहः सिध्येदित्युक्त्वा, कथ साङ्कर्यमित्याशङ्क्योक्तम्—"**सर्वे हि ते यजतयः। यजतिसामान्ये च यजतिशब्दवाच्ये विधीयमानाः सर्वत्र भवितुमर्हन्ति" इति।** तदनुभाष्य व्याचष्टे—**कोऽभिप्रायः?** कथ यजतिप्रयुक्तता, कथं वा तथा सति साङ्कर्यमित्यर्थः। तदुभयमपि दर्शयति—**कारणानुग्राहिणीतिकर्तव्यता।** [2]**इतिकर्तव्यता तेन चापेक्षिता।** "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यनेन **करणमुद्दिश्य** समिदादिवाक्यैस्त्रै**तिकर्तव्यता विधीयते**[1]। **उद्दिश्यमानस्य** च यागस्य दर्शपूर्णमासपदोपात्तं **विशेषणमविवक्षितम्। तस्माद्यागमात्रेऽङ्गविधानं वाक्येन। अतः** साङ्कर्यमिति। **अत्र** [3]**परिचोद्यते**—दर्शपूर्णमासवाक्ये हि **यागः**

1. विधीयत इति। इदमत्र विधेः स्वरूपम्—यद् दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, तत् समिधो यजति इत्यादि। समिदादिकयेतिकर्तव्यतयोपकृत्येति। अन्वाधानादिब्राह्मणतर्पणान्ताङ्गजातप्रतिपादकवाक्यैरेकवाक्यतां गतेन दर्शपूर्णमासाभ्यामिति प्रधानविधिना प्रयोगविध्यात्मना दर्शपूर्णमासवाक्योक्तं करणमुद्दिश्य समिदादीतिकर्तव्यता विधीयत इति भावः।

१. भवति–पू० मु०।

२. 'इतिकर्तव्यता' नास्ति–क० पू० मु०।

३. 'परि' नास्ति–पू० मु०।

**फले विधीयमानत्वादुपादेयः, इतिकर्तव्यतां प्रति चोद्देश्यः**[2]। **सकृदुच्चरिते चोपादीयमानत्वोद्देश्यत्वे न सम्भवतः, विवक्षाभेदात्।** **तस्माद्वाक्येनेतिकर्तव्यतासम्बन्धो न घटते,** येन साङ्कर्यं स्यात्। तस्मात् प्रकरणेनेतिकर्तव्यता सम्बध्यमाना प्रकृतेष्वेव [ प्रकृतिष्वेव ] व्यवतिष्ठते। नास्ति साङ्कर्यमिति। **उच्यते—"दर्शपूर्णमासाभ्यां यजेत" इतीदं** वाक्यं **यागोत्पत्तिं तावन्न विदधाति, "यदाग्नेयोऽष्टाकपालः" इत्यादिभिर्वाक्यैर्यागोत्पत्तेर्विहितत्वात्।** तथा **फलसम्बन्धमपि न करोति, उत्पत्तिवाक्येनैव** कृतत्वात्। ननु नात्र फलं श्रूयते ? आह—**विश्वजिन्न्यायेनेति। तत्परिशेषादितिकर्तव्यतासम्बन्धार्थमेवेदं** वाक्यम्। **यथा "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इति न दीक्षा विधीयते। नासौ यजमानस्य। न चाध्वर्युस्तस्यां कर्ता** विधीयते, **सर्वस्य चोदकेन प्राप्तत्वात्।** किन्तर्हि ? **दीक्षाक्रमोऽनियमेन प्राप्तः।** [3]**स नियम्यते। एवमत्रापि** यागोत्पत्तेः फलसम्बन्धस्य चाग्नेयादिवाक्यैर्विश्वजिन्न्यायेन च सिद्धत्वाद्दर्शपूर्णमासवाक्येन यागमनूद्य केवलं धर्मविधिः। अतोऽस्य नास्ति वैरूप्यम्। **उद्दिश्यमानस्य च विशेषणमविवक्षितम्। तस्माद्यागमात्रे धर्मप्राप्तिरित्ययमभिप्रायः।** कोऽभिप्राय इत्यनेनैतदनुसन्धातव्यम्। एवमुपरितनेऽपि भाष्य इति। ततश्च "अग्नये जुष्टम्" इतीदृशस्यैव मन्त्रस्योपदेशात् सौर्ये च तस्य देवताप्रकाशकत्वासम्भवाददृष्टार्थत्वान्नोहः सिध्येत्। अपरमपि–"**अपूर्वप्रयुक्तत्वे तु तदीये विशेषे विधीयमाना** उपदिश्यमाना धर्मा **अन्यस्मिन्नपि तदीयविशेषापन्नेऽ**तिदेशेन **भविष्यन्ति। तस्मात्तत्रोहः सिद्धो** भविष्यति" इति भाष्यं व्याख्यातुमाह—**कोऽभिप्रायः**

---

1. अपरमपीति। भाष्यं व्याख्यातुमाह इत्यनेनान्वयः। अपरमपीतीदं ख० कोशे न दृश्यते। अनन्वितमिति भ्रान्त्या परित्यक्तं स्यादिति प्रतिभाति।

१. उद्दिश्यमानः–पू० मु०।

२. मानो–क०।

३. सन्–पू० मु०।

कथमपूर्वप्रयुक्तत्वम्? कथं तथा सति तदीये विशेषे विधानम्? कथं चान्यस्मिंस्तदीयविशेषापन्ने प्राप्तिः? कथं च तथा सत्यूहसिद्धिरित्यर्थः। तच्चतुष्टयमपि दर्शयति—**भाव्यमानेन करणेतिकर्तव्यते आकाङ्क्षिते।** भावनया हि करणेतिकर्तव्यतयोः सम्बन्धोऽनेन कुर्यात्, इत्थं कुर्यादिति। भाव्यनिष्ठश्च भावकव्यापारो भावना। तया सम्बध्यमाने करणेतिकर्तव्यते भाव्यप्रयुक्ते भवतः। तस्माद् द्वयोरपि भाव्यमानेन सम्बन्धः, आकाङ्क्षितत्वात्। भाव्यं चापूर्वम्। तस्मादपूर्वप्रयुक्तेतिकर्तव्यतेति। तदिदमुक्तं भाष्यकारेण—प्रत्ययार्थेन हि भावनाख्येनेतिकर्तव्यता सम्बध्यते, कर्तव्यं कथमिति। यद्यपि कृतिमात्रं प्रत्ययार्थः। तथापि तस्याः कार्यनिष्ठत्वं दर्शयितुं तव्यप्रत्ययः प्रयुक्तः। तस्माद्यत्कर्तव्यं तया कृत्या भाव्यम्, तस्यैवेतिकर्तव्यतया सम्बन्धः। अपूर्वञ्च तत्। तस्मादपूर्वप्रयुक्ततेति। यथा तु भाव्यत्वेऽपि न फलस्य प्रयोजकत्वम्, तथा सप्तमाद्ये प्रपञ्चितमिति नेह प्रपञ्चितम्। ननु भवतु भाव्यमानेन सम्बन्धो धर्माणाम्, तथापि यागस्याप्यस्त्येवार्थाद्भाव्यत्वमिति तत्प्रयुक्तता कथं न भवत्यत आह—**न च याग इतिकर्तव्यतया विना न सिध्यति, निर्ज्ञातत्वाद्यागस्य लोके। तेन विशिष्टोऽपूर्वाख्यो भाव्यो** यथा **विशिष्टेनैव करणेन भाव्यते,** तथा **धर्माणामपि न करणेन सम्बन्धः,** किन्तु करणवद्भाव्येनैव तेषां सम्बन्धः। कथं तर्हि करणानुग्राहकत्वमत आह—**अरुणाधिकरणन्यायेन** त्वैककर्म्यात् **करणेतिकर्तव्यतयोः** सम्बन्धः। तेनापूर्वप्रयुक्ता इति। तथापि कथ न साङ्कर्यमत आह—**तस्माद्दर्शपूर्णमासप्रकरणेन** तदपूर्वेणैव **परिगृहीता धर्मा न त्वन्यत्र सन्ति, प्रमाणाभावाद्** विशिष्टापूर्वनिबन्धनत्वादुपदेशस्य। कथं तर्हि विकृत्यपूर्वतत्करणाभ्यां सम्बन्धोऽत आह—**तत्र विकृतौ** प्रत्यक्षं **भाव्यं ब्रह्मवर्चसम्। तस्य** च **प्रत्यक्षवाक्यविहित**मेव **करणम्। भाव्यमानं** च **धर्मानाकाङ्क्षति।**

ननु करणानुग्रहो भाव्यस्यापेक्षितो न धर्माः। अत आह—**करणानुग्रहद्वारेण।** स तावत् प्रथममपेक्ष्यते। तत्सिद्धये च धर्मा इति। **न च सन्निधाने धर्माः सन्ति। तस्माच्चोदनासामान्यादाग्नेयस्य धर्माः सौर्येऽति-**

**दृश्यन्ते, साकाङ्क्षत्वाद्वाक्यस्य।** एवमपि कथमूहसिद्धिः, यावताग्नेयधर्माणामिहातिदेशेन प्राप्तानां दृष्टादृष्टप्रयोजनकल्पनेनाविकृतानामेव प्रयोगो युक्तः, अत आह—**तत्र चैषा वचनव्यक्ति**रतिदेशशास्त्रस्य। **यथाग्नेय उपकृतं तथा सौर्येऽप्युपकर्तव्यमिति।** यदि ह्येवमतिदेशः स्यात्, ब्रह्मवर्चसापूर्वार्थे सौर्येण व्याप्रियेत। कथम्? आग्नेयस्य ये धर्मास्तान् कृत्वा, तदनुष्ठानप्रकारेणेति यावत्, ततो नोहः स्यात्। इह पुनर्दशमाद्यन्यायेनेदृशोऽतिदेशो यथाग्नेयेन व्यापृतं तथा सौर्येणापीति। आग्नेयभावनावर्ती प्रकारः सौर्ययागभावनायामतिदिश्यते। पदार्थावान्तरोपकारवत्ता च तस्याः प्रकारः। तेनायमर्थः—यथाग्नेय उपकृतं तथा सौर्येऽपीति। तथापि कथमूहः, यावताग्नेयभावना मन्त्रकृताग्निप्रकाशनविशिष्टा कृतेति सौर्यभावनापि तथैव कर्तव्या। अत आह—**आग्नेये च** "अग्नये जुष्टं निर्वपामि" इति **मन्त्रेण भाव्यमाना**ऽपूर्वसम्बन्धिनी **देवता प्रकाशिता। तेनेहापि तथैव** भाव्यमानाऽपूर्वसम्बन्धिनी देवता **प्रकाशयितव्या सूर्यः। न चोहादृते शक्यते प्रकाशयितुम्। तस्मादूहः कर्तव्यः।**

इदमत्राकूतम्—यः खल्वित्थंभावः शास्त्रान्तरेऽङ्गीकृतः, स एव शास्त्रान्तरे तथा कुर्यादित्यतिदिश्यते, न त्वार्थिकः। आग्नेयभावनायाश्च मन्त्रसम्पादिताग्निप्रकाशनवत्त्वमार्थिकम्। नह्ययमग्निस्वरूपप्रयुक्तः। किं तर्ह्यपूर्वप्रयुक्त इति "फलदेवतयोश्च" इत्यत्र वक्ष्यामः। तेनाऽयं शास्त्रार्थः—प्रकृतावाग्नेयेन कुर्यात् कथम्? अनेन मन्त्रेण देवताप्रकाशनं कृत्वेति मन्त्रकृतात्मीयदेवताप्रकाशनविशिष्टता आग्नेयभावनायाः प्रकारत्वेनोक्ता। सैव सौर्यभावनायामतिदिश्यते। तेन साप्यनेन मन्त्रेण देवताप्रकाशनं कृत्वा कर्तव्या। सूर्यश्च तत्र देवता। तेन स एव मन्त्रेण प्रकाशयितव्य इति सिद्ध ऊहः। उपसंहरति—**इत्ययं** भाष्या**भिप्रायः।** भाष्यस्य चायमर्थः—अपूर्वप्रयुक्तत्वे तु धर्माणां प्रकृतावेव व्यवस्थितत्वात्तत्र च "अग्नये जुष्टम्" इति मन्त्रस्यापूर्वोपकारसाधनभूतदेवताप्रकाशनसामर्थ्यात् तत्साधनत्वेनैव विधानं भवति। ततश्च सौर्ये कार्यद्वारेण प्राप्तस्य प्राकृताग्निकार्यापन्ने सूर्ये प्राप्तिर्भवति। तस्मात्तत्रोहः सिद्धो भवति।

**नन्वेतत्सप्तमेन**[१] **गतम्** । तत्र भाष्यकारेण तदेवोत्तरविवक्षया स्मार्यत इत्युक्त्वा, अथवेति वर्णकान्तरमुक्तम् । तद्व्याचष्टे–**"यज्ञकर्म प्रधानं तद्धि चोदना-भूतम्" इत्यनेनावयवेनापूर्वार्था**[1] धर्मा इति सप्तमसिद्धमनूद्य द्रव्यसंस्कारं व्रीह्यादि द्रव्यम्, अवघातादिश्च संस्कारः । तदीयकार्यापन्नमपूर्वीयोपकार[२]विशेषसाधन-त्वेन रूपेणेति यावत्, धर्मानवघातादीन् उलूखलमुसलप्रोक्षणादींश्च लभते, न स्वरूपेण । स्वरूपं त्वविवक्षितमित्यर्थ उपदिश्यते "तस्य द्रव्येषु संस्कारः" इत्यनेन सूत्रावयवेन । सप्तमसिद्धमेव [३]त्वदन्य[त्वन्य]दनूद्यते । यदि ह्यपूर्वार्थत्वेऽपि स्वरूपमपि विवक्ष्येत, व्रीह्याख्यस्य प्रधानविशेषस्यावघातोऽङ्गमिति, तदा नीवारादिषु नोहः सिद्ध्येत् । तेनायं सूत्रार्थः—यज्ञकर्म अपूर्वं धर्माणां प्रधानम्, तद्धि कर्तव्यतया चोद्यत इति सप्तमाद्यार्थमनूद्य, तस्मात्तस्य द्रव्येषु व्रीह्यादिष्ववघातादिसंस्कारस्तत्प्रयुक्तस्तत्साध-नत्वकृतः । कुतः ? तदर्थत्वादवघातस्येत्युपदिश्यत इति । इदं च "द्रव्यसंख्याहेतु-समुदायम्" इत्यत्र "अपूर्वसम्बन्धेऽपि[४] तदीयैः व्रीह्यादिभिः" इत्यत्र भाष्ये वक्ष्यामः ।

नन्विदमपि सप्तमाद्य एवोक्तम्—"उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्" इत्यस्मिन् सूत्रे । अत आह भाष्यकारः—एतेन चेह प्रयोजनमूहं[हो] विवक्षितः । एवं हि स सिद्ध्यति । अन्यथा व्रीहिस्वरूपप्रयुक्तत्वे नीवारादिषु प्राप्त्य-

---

1. **अत्र 'अपूर्वार्थाः' इत्यतः परं कस्यचिद् ग्रन्थस्य पातः सर्वेषु टुप्टीकाकोशेषु गम्यते तन्त्ररत्नानुरोधात् । स ग्रन्थ ईदृशः स्यादित्यस्माभिरूह्यते । स यथा– "अपूर्वार्था धर्मा इत्यनूद्य, तद् द्रव्यसंस्कारं तदीयकार्यापन्नं धर्मान् लभते, स्वरूपमविवक्षितमित्यर्थ उपदिश्यते । यदि स्वरूपमपि विवक्ष्येत, तदा नीवारादिषु नोहः सिद्ध्येत् । अथवा अपूर्वं प्रयोजकमित्युक्तम् । तदपूर्वं स्वार्थान् इति । प्रयुङ्क्ते इत्यादि तु पूनामुद्रितमेव ।**

१. 'सप्तमे गतम्' इति पू० मु० मूलपाठः ।

२. अपूर्वोपकारः–ख० ।

३. त्वेनद–ख० ।

४. 'अपि' नास्ति–क० ।

भावादूहो न स्यात्। तत्र तु सप्तम एतन्नोक्तम्, नैतेन तत्र प्रयोजनमिति। तत्र ह्येतावती चिन्ता—किं प्रतिप्रकरणं नियता धर्मा उत सर्वे सर्वत्रेति। तच्च यथासंख्येनापूर्वप्रयुक्तत्वे [1]यजिप्रयुक्तत्वे च सिद्ध्यति। अपूर्वप्रयुक्तत्वे प्रतिप्रकरणं नियताः। यजिप्रयुक्तत्वे सर्वे सर्वत्र। न तु द्रव्यादिसंस्कारस्यापूर्वार्थत्वेऽपूर्वसाधनरूपशेषत्वे सत्यप्यवघातादीनां व्रीह्यादिस्वरूपद्वारेणाप्यपूर्वार्थत्वे सिद्ध्यति व्यवस्था। यजिप्रयुक्तत्वे त्वव्यवस्था। द्रव्यसंस्कारादेरपूर्वसाधनरूपं द्वार[2] नान्यतरस्यापि पक्षस्योपयोगीति न तत्र विचारितम्। ऊहोपयोगित्वात्त्विहैव चिन्त्यते। यत्तु तत्रैवेदमुक्तमित्युक्तम्, तत्राह—तत्त्विह सिद्धम्, तत्रापूर्वप्रयुक्तासिद्धौ व्यवहारार्थमसूत्रितमुपादीयते। अपूर्वप्रयुक्तता ह्यवघातादीनां तत्साधनरूपद्वारत्वे घटते नान्यथेति। तत्प्रयुक्तत्वमेव निरपवाद [3]व्यवहर्तुमसूत्रितमेवास्माभिरपूर्वसाधनप्रयुक्तत्वमुक्तम्। तस्मादपुनरुक्तम्।

व्याख्यान्तरमाह—**अथवा** सप्तमेऽपूर्वं प्रयोजकमित्युक्तम्। इह त्वेतच्चिन्त्यते—तदपूर्वं किं स्वार्थमेव प्रयुङ्क्ते धर्मानुत **परार्थं भिन्ने जुहोतीतिवत्**। एतदेव विवृणोति—**यथा** निमित्तस्य **भेदनस्य प्रयोजकत्वे सत्यपि न भेदनार्थो होमः, किन्तु क्रत्वर्थः। एवमिहाप्यपूर्वं प्रयोजकं यागार्थाश्च धर्माः**। अस्मिन्नपूर्वे साध्ये सत्येवं यागः कर्तव्य इति। इदं वा किं सप्तमे न विचार्यते? ओमित्याह—**अनेनापि प्रकारेण सप्तमे प्रतिप्रकरणं नियता धर्मा इति** सिध्यति। **ऊहस्त्वपूर्वार्थतामन्तरेण न सिद्ध्यति**। यदा ह्यपूर्वप्रयुक्ता अपि धर्मा यागस्वरूपार्थाः, न तु तद्द्वारेणापूर्वार्थास्तदा व्रीह्यादयोऽपि यागवत् स्वरूपेणैव शेषितामनुभवितुं प्रभवन्तीति नीवारेषु शेषिरूपाभावादवघातस्याप्राप्ते[4]रूहो न स्यात्। तस्मादिहैवैतत्प्रतिपाद्यते। तदिदमुक्तं भाष्यकारेण—तत्र ह्येतावती चिन्ता किं प्रतिकरण

१. 'यजि प्रयुक्तत्वे' नास्ति—क०। वारद्वयं खपुस्तके।

२. द्वारत्वेनान्य—ख०।

३. वक्तु—क०।

४. अवघाताग्राहे—क०।

[ प्रतिप्रकरणं ] नियता धर्माः, उत सर्वे सर्वत्रेति। तच्च यथाक्रममपूर्वप्रयुक्तत्वे [ त्वे यजिप्रयुक्तत्वे ] च सिद्ध्यति, न तु द्रव्यसंस्कारस्यापूर्वार्थत्वे। प्रयोजकचिन्तैव तत्रोपयोगिनी, न तादर्थ्यचिन्तेत्यर्थः। द्रव्यसंस्कारग्रहणं च सर्वेषां धर्माणां प्रदर्शनार्थम्[1]। तथा सूत्रेऽपि कर्तव्यरूपस्यापूर्वस्य[2] प्राधान्याद् द्रव्यसंस्कारादयो धर्मास्तत्प्रयुक्ताः तच्छेषभूता इत्यर्थः। कुतः? तदर्थत्वात् प्रधानार्थत्वादप्रधानानाम्। लोके तथा दर्शनादिति। **अत्र चोद्यते—ये दर्शपूर्णमासयागार्था धर्माः, ते सौर्ये न सन्ति। तस्मात्तत्राप्रवृत्तिरेव धर्माणां प्राप्नोति।** अस्यार्थः—यदेतदुक्तं विनाप्यपूर्वार्थत्वं यागार्थत्वेऽपि धर्माणामपूर्वप्रयुक्तत्वमात्रेणापि व्यवस्थासिद्धेर्नैकान्ततः सप्तमेऽपूर्वार्थता व्युत्पादनीयेति, तदयुक्तम्। यद्यपि व्यवस्थासिद्ध्यर्थं न व्युत्पाद्यते, तथाप्यतिदेशसिद्ध्यर्थं तत्रैवापूर्वार्थता प्रतिपादनीया। नह्यन्यथाप्यतिदेशः सिद्ध्यति, आकाङ्क्षाधीनत्वादतिदेशस्य। यागस्य निर्ज्ञातोपायत्वेनानाकाङ्क्षत्वात्। प्रकृतौ त्वाकाङ्क्षायामसत्यामपि वचनाद्धर्माः क्रियेरन्, विकृतौ तु नास्ति प्राप्तिरिति। **उच्यते—वैकृतस्य वाक्यस्य साकाङ्क्षत्वादतिदेशेन वानुषङ्गेण वा** यागार्थत्वपक्षेऽपि प्राकृतैरङ्गैः सिध्यति सम्बन्धः। अनुषङ्गेण वेत्यनास्थावादः, "व्यवायान्नानुषज्येत" इति स्थितत्वात्। उक्तं ह्येतद्विध्यन्ताधिकरणे भाष्यकारेण— "यथा निर्ज्ञातस्वरूपोऽपि यागः शिष्टाचारप्रामाण्यात् नानितिकर्तव्यताकः कर्तव्यः। तस्मादस्ति धर्माकाङ्क्षा। सत्यां च तस्यामतिदेशसिद्धिः" इति। **तस्मादिहैवापूर्वार्थता प्रतिपाद्योहसिद्धये,** न तु सप्तम इति।

व्याख्यानान्तरमाह—**अथवा सप्तमेऽपूर्वार्था धर्मा इति** सामान्येन **स्थितम्**, इह तु सन्निपातिनामतादर्थ्यमाशङ्क्य तादर्थ्यं प्रतिपाद्यते। केन पुनर्विशेषेण तेषामतादर्थ्यमाशङ्क्यते? तं दर्शयति—**तेषां** हि धर्माणामपूर्वार्थता **प्रकरणात् स्यात्। तच्च प्रकरणमसंयुक्तानां ग्राहकम्। ये तु श्रुतिलिङ्गवाक्यैः संयुक्ताः** सन्निपातिनः **तान्न गृह्णाति संयुक्तत्वादेव। तस्मात्तेऽपूर्वार्था न भवन्ति।** नन्वेवं सप्तमाद्यपूर्वपक्षन्यायेन तेषां साङ्कर्यं स्यात्, अतस्तत्रैवेदमपि

१. उपलक्षणार्थम्–ख०।

२. अपूर्वार्थत्वे प्रयोजकस्य–ख०।

निराकार्यम् । अत आह—**दर्शपूर्णमासाधिकारे च पाठात् संयुक्तानामपि प्रकरण एव निवेशः** । यद्यपि संयुक्तत्वात् प्रकरणेन गृह्यन्ते, [न गृह्यन्ते] तथाप्यधिकृतदार्शपौर्णमासिकव्रीह्याद्यनुवादेन विधानान्न साङ्कर्यमिति । असंयुक्तानामपीति क्वचित् पाठः । तत्रापूर्वासंयुक्तानामपीति व्याख्या । **तस्मादनेनापि प्रकारेण सप्तमाष्टमयोर्न किञ्चिदनुपपन्नमिति** न तत्रैतन्निराकार्यम् । तदिदमुक्तं भाष्यकारेण—तत्र हि "सामान्येनैतावच्चिन्तितम्, किं प्रतिप्रकरणं नियता धर्माः, उत सर्वत्र" इति । तच्च सामान्येनैवापूर्वप्रयुक्तत्वयजिप्रयुक्तत्वयोः सिद्ध्यति, न तु विशेषतो द्रव्यादिसंस्कारस्यापूर्वार्थत्वं तत्रोपयुज्यते । तत्त्विहत्यं सामान्यव्यवहारार्थं तत्र नीतमिति । अतो नैतत्तत्र प्रतिपाद्यम् । [1]**ऊहे तु यद्यपूर्वार्थं न प्रोक्षणं भवति,** किन्तु व्रीहिस्वरूपार्थम् । **तथा सति नीवारेषु न प्राप्नोति** । नहि व्रीहिधर्माणां नीवारेषूपदेशेनातिदेशेन वा प्राप्तिरस्ति । अपूर्वभावनाधर्मा ह्यपूर्वान्तरभावनायां प्रकारमुखेनातिदिश्यन्ते, न तु द्रव्यधर्मा द्रव्यान्तरे । व्रीहिस्वरूपाङ्गत्वे च न प्रोक्षणं दर्शपूर्णमासभावनायाः प्रकारो येनान्यत्रातिदेशः स्यात् । **तस्मात् सन्निपत्योपकारका ये धर्मास्तेऽप्यपूर्वार्था इति नवमे प्रतिपाद्यते ऊहसिद्ध्यर्थम्** । अस्मिन्नधिकरण इति वक्तव्ये नवम इत्युक्तम्, अस्मिन्नुपक्षिप्तोऽयमर्थः पश्चादधिकरणत्रयेण समाप्यत इत्यभिप्रायात् । तदेवं त्रेधा भाष्यं व्याख्यातम् ।

केचित्तु तदपूर्वप्रयुक्तत्वे यजिप्रयुक्तत्वे[1] च सिध्यतीत्यत्राकारप्रश्लेषं कुर्वन्त एवं व्याचक्षते—तच्छब्देन न पूर्वोक्तपक्षद्वयपरामर्शः, किन्त्वेवं विचार्य सिद्धान्तित यदसाङ्कर्यम्, तदपूर्वप्रयुक्तत्वेऽप्ययजिप्रयुक्तत्वेऽपि सिद्ध्यति । अयजिशब्देन च कारणरूपमुच्यते । द्रव्यसंस्कारग्रहणं च सर्वधर्माणां प्रदर्शनार्थमिति । तदत्यन्ताप्रतिपन्नं केवलमौत्प्रेक्षिकमित्युपेक्षणीयम् । यदि त्ववश्यं तच्छब्देन सिद्धान्तः प्रतिनिर्देष्टव्यः,

---

1. 'ऊहे तु यद्यपूर्वार्थं प्रोक्षणं भवति' इति नञ्रहितः पूनामुद्रितः पाठोऽसाधुरेव 'किन्तु स्वरूपार्थम्' इति व्याख्याविरोधात् ।

१. 'यजिप्रयुक्तत्वे' नास्ति—क० ।

तथाप्येवं व्याख्येयम्—यजिप्रयुक्तत्वेऽपि प्रकृतयागानुवादेन विधानादसाङ्कर्यसिद्धेर्नापूर्वार्थत्वं तत्रोपयुज्यत इति, न त्वकारप्रश्लेषः। न च करणरूपप्रतिपादनपरं युक्तम्। अत्यन्तानार्जवं हि तथा स्यादिति।

"[1]अथवाऽन्यामेव चिन्तां चिन्तयामः[2]" इति भाष्यं पठित्वा व्याचष्टे—**अपूर्वार्था धर्मा इति स्थिते सप्तमे, नवमे निमित्तं परीक्ष्यते—किमपूर्वं निमित्तमुत यागो** निमित्त**मिति।** ननु सति निमित्ते तद्विशेषविचारो भवति, तदेव तु न सिद्धं [3]यद्वृत्ताद्यश्रवणात्, अत आह—**न चानिमित्तास्ति प्रवृत्तिः, येन विचार एव न स्यात्।** प्रवृत्तिः खलु कादाचित्की नाकारणिका सम्भवति। प्रवृत्तिकारणमेव निमित्तमिति भावः[4]। पूर्वपक्षमाह—**तत्र भाव्यमानत्वाद्दर्शपूर्णमासापूर्वं न निमित्तं भवति।** नह्येकमेव युगपद् भाव्यतया निमित्ततया च प्रतिपादयितुं शक्यते। **अनेनैव प्रकारेण**[1] भाव्यत्वादेव **फलमपि न निमित्तम्। पारिशेष्याद्यागो निमित्तम्, निष्पन्नत्वात्।** यागोऽपि यद्यपि वस्तुवृत्त्या न निष्पन्नः, तथापि शब्देन तावद्भाव्यतया नोच्यत इति भवति निमित्तम्। **ननु यागस्यासत्यपि** भाव्यत्वे **फले** करणतयो**पादीयमानत्वान्निमित्तवेलायां चोद्दिश्यमानत्वाद्विवक्षाभेदः स्यात्। उच्यते—दर्शपूर्णमासादि नामपदं निमित्तं** प्रतिपादयति, **अकिञ्चित्करत्वात्** प्रयोजनान्तराभावात्।

---

1. 'अथवा अन्यामेव चिन्तां वर्तयिष्यामः' 'अपूर्वार्थाः' इत्यादिः ग्रन्थो युक्तः 'पठित्वा व्याचष्टे' इत्यवतरणानुगुण्यात्।

2. वक्ष्याम इति पूनामुद्रितो भाष्यपाठः।

3. यद्वृत्तादीत्यादिपदेन सप्तमीविभक्त्यादेः परिग्रहः। यद्वृत्तेति यच्छब्देत्यर्थः।

4. तस्माद् विधेः प्रवर्तकत्वान्यथानुपपत्त्या गम्यमानं प्रवृत्तिकारणं निमित्तमादायैवायं विचार इति।

१. प्रकरणेन—ग०।

कथम् ? **प्रकृता**[1] हि **यागा दर्शपूर्णमासपदाभावेऽपि** फले **विधीयन्त एव** यजिना । **तेन यद्येतन्नामपदं निमित्ततां न** प्रतिपद्यते[2], **अनर्थकमेव स्यात्**। तस्मान्नामधेयं निमित्तम्, यजिस्तु करणमिति नास्त्येकशब्दवैरूप्यम्। **ननु सप्तम्यन्तं निमित्तं भवति,** यथा **भिन्ने जुहोतीति, तृतीयान्तं चेदम्। उच्यते। "निमित्तफलहेतुषु सर्वासां प्रायदर्शनम्" इति द्रष्टव्यं** तृतीयान्तत्वम्। **अपि चोद्दिश्यमानत्वान्निमित्तस्य करणविभक्तिरविवक्षितैव**। नह्युद्दिश्यमानेषु विभक्त्यर्थादरः। नन्वेवं यागे निमित्ते वाक्येनैवा-

1. प्रकृतयागाद् दर्शपूर्णमासपदाभावेऽपि विधीयन्त एव तेन। यद्येतद् इत्यादि मुद्रितं पूनासंस्करणे। तदयुक्तम्। तत्र तावत् प्रकृतयागाद् इति पञ्चम्यन्तमनन्वितम्, प्रकृता यागा इति तन्त्ररत्ने एतदुद्धरणविरुद्धं च। तथा तेन इत्यनन्तरं वाक्यपूर्णविरामचिह्नकरणमप्ययुक्तम्, व्याख्याने तेन इत्यस्योत्तरवाक्येन संयोजनात्। तत्र प्रकृता यागाः फले विधीयन्त इत्युक्ते भवत्याकाङ्क्षा केन विधीयन्ते इति। अतो यजिनेति पूरितं तन्त्ररत्ने। तच्च तेनेति पदस्य विवरणमिति गृहीत्वा पूनासंस्करणसंपादक उत्तरवाक्यात् तेनेति पदमाच्छिद्य पूर्ववाक्ये योजयामास "तेनेति–यजिनेत्यर्थः" इति टिप्पणीं कुर्वन्। तदसंगतम्। यजिपदस्य पूर्वमप्रक्रान्ततया तेनेति तस्य प्रतिनिर्देशासंभवात्, तेन यद्येतद् इत्युक्तवाक्यान्वयस्वरसाच्चेति द्रष्टव्यम्।

2. सर्वासु मातृकासु 'प्रतिपादयति' इत्येव पाठो दृश्यते। तथापि पूनामुद्रणस्थः 'प्रतिपद्यते' इति पाठ एव संगतार्थतया ग्रन्थे निवेशितः। नामपदं निमित्तं प्रतिपादयति इति पूर्वत्र, यजिर्न निमित्तं प्रतिपादयति इत्युत्तरत्र च तन्त्ररत्ने व्यवहारस्तु संगच्छत एव, निमित्तभूतस्य यागस्य नामपदेन प्रतिपादनात्। इह तु नामपदं निमित्ततां प्रतिपादयतीत्यसंगतम्। नहि नामपदस्य निमित्तत्वमर्थः। किं तर्हि ? निमित्तभूतो यागः। तत्र निमित्तभूतयागप्रतिपादकत्वान्नामपदस्य नामपदं निमित्ततां प्रतिपद्यते भजते, निमित्तं भवतीति यावदिति व्याख्यातुं शक्यत्वादिति।

पूर्वार्थतया विधीयमाना धर्माः सर्वयागापूर्वसाधारणाः स्युरत आह—यस्मादेव यजिर्न निमित्तं प्रतिपादयति, किन्तु दर्शपूर्णमासपदम्, तस्माद्यद्यपि विकृतावपूर्वमस्ति, तथापि दर्शपूर्णमासयागो निमित्तभूतो **नास्ति। तदभावे धर्माणामप्यभावः। यथा भेदनाभावे होमाभावः। तस्मान्न साधारण्यम्। नन्वेवमतिदेशे**नापि विकृतिषु धर्मा न भवेयुः। निमित्ताभावाद् भेदनाभाव इव भेदनहोमः। ततः कथमूहलक्षण एवेयं चिन्ता न सप्तमे, अत आह—**सौर्ये च साकाङ्क्षत्वाद् पूर्वस्यातिदेशेन वानुषङ्गेण वा प्राकृतैरङ्गैरङ्गवान् सौर्ययागः सिद्ध्यति। ऊहाभावस्तु।** अयमभिप्रायः—यथा सिद्धान्तेऽपूर्वविशेषनिमित्ता धर्मा अपूर्वान्तरेऽतिदेशेन भवन्ति, तथा यागविशेषनिमित्तानां यागान्तरेऽतिदेशात् प्रवृत्तिः सिद्ध्यत्येव। ऊहस्तु न सिद्ध्यति, यथा हि यागानुग्राहकाणां धर्माणां यागो निमित्तम्, एवं तुल्यन्यायत्वान्मन्त्राणामवघातादीनां चाग्न्यादयो व्रीह्यादयश्च निमित्तं भवेयुः। ततश्च सौर्यादौ नीवारादौ च निमित्ताभावादप्राप्तेरूहो न स्यात्। न चातिदेशेन प्राप्तिः। दर्शपूर्णमासवाक्याद्धि सौर्यवाक्येऽतिदेशो भवति, दर्शपूर्णमासयोर्यथापूर्वं तथा सौर्ययागेऽपीति। न तु व्रीहिवाक्यान्नीवारवाक्येऽतिदेशोऽस्ति। तस्मादूहलक्षण एवेयं चिन्तेति।

यदिदं दर्शपूर्णमासपदस्य निमित्तप्रतिपादकत्वेन पूर्वपक्षव्याख्यानं, तद् दूषयति—**अत्रोच्यते—अयं दोषोऽस्मिन् व्याख्याने—आज्यभागादीनामपि फलसम्बन्धः स्यात्, प्रकृतत्वात्,** यजेर्दर्शपूर्णमासपदेन **चाविशेषणात्। अपि च दर्शपूर्णमासशब्दो लोके कालवाचकः प्रसिद्धः, न यागस्य वाचकः।** स हि **सामानाधिकरण्याद्यागवचनो भवेत्। न च निमित्तत्वमिच्छतः सामानाधिकरण्यमुपपद्यते। यदि हि प्रकृतान् यागान्** यजिप्रतिपाद्यान् **विशेषयेदेवं सामानाधिकरण्याद्यागवचनो भवेत्।** अस्तु तर्हि विशेषणत्वेनैव सामानाधिकरण्यमत आह—**न चैकस्मिन्नुच्चारणे सामानाधिकरण्यं** निमित्तत्वं चोपपद्यते, वैरूप्यापातात्। विद्वद्वाक्ययोस्त्वन्ययोरेव पौर्णमास्यमावास्याशब्दयोः सामानाधिकरण्यम्, नास्य दर्शपूर्णमासशब्दस्य। **तस्मान्निमित्तमिच्छतः कालवचनः संपद्यत इत्ययं दोषः।**

पक्षान्तरमाशङ्कते—**अथोच्येत यागपदं निमित्तं** दर्शपूर्णमासवदिति। दूषयति—[1]**तन्न, उद्दिश्यमानत्वाद्याग**स्याविवक्षितविशेषणत्वा**द्यागमात्रस्यैवोद्देशः प्राप्नोति। तत्र प्रकृतौ विकृतौ च निमित्तमेव यागसामान्यम्।** अतश्च साधारणा धर्माः स्युः। न च निमित्ते सत्यपि प्रयोजनाभावाद्विकृतावप्रवृत्तिः। यतोऽपूर्वं **च सौर्ये विद्यते। तस्मादनेन** यजिनिमित्तत्व**व्याख्यानेन प्रकृतिविकृत्योः साधारणा धर्माः प्राप्नुवन्ति।** [१]**'तत्रातिदेशाभावः।** न केवलमूहाभावः। **तस्मादयमपि पक्षो दुःश्लिष्टः।**

स्वयमिदानीं पक्षान्तरमाह—**अथवा अपूर्वार्था धर्मा इति स्थितम्, सन्निपत्योपकारका आरादुपकारकाश्च प्रकरणेन प्रमाणेन। तत्र प्रकरणे "अग्नये जुष्टं निर्वपामि" इति मन्त्र आम्नायते। आम्नानसामर्थ्याच्चा**वश्यमुप**कर्तव्यं प्रकरणिनः। तत्र कथं खल्पकरिष्यतीति विशेषाकाङ्क्षा जायते, किमुच्चारणमात्रेणोत प्रकाशनद्वारेणेति।** तत्र मन्त्राधिकरणन्यायेनापूर्वेण[2] **देवताप्रकाशनमपेक्षितम्। शक्नोति चायं** मन्त्रस्तत्**कर्तुम्।** न च दृष्टे सत्यदृष्टं कल्पयितुं शक्यम्। **तस्मात् प्रकाशन द्वारेणैवोपकरोति। ततोऽग्निं प्रकाशयन्नुपकरोतीति** निश्चीयते। **निमित्तेन चास्य** मन्त्रस्य केनचि**द्भवितव्यम्।** तत्राग्निस्वरूपमस्य निमित्तमपूर्वं वेति संदेहः। भाष्ये च यजिग्रहणं मन्त्रप्रकाश्याग्निस्वरूपप्रदर्शनार्थम्। **तत्र सामर्थ्यादग्निर्निमित्तमस्येति** गम्यते। नह्यसत्यग्नावग्निप्रकाशनसमर्थस्य मन्त्रस्य प्रकाशनद्वारेणापूर्वार्थता घटते। न चास्मिन् पक्षे कस्यचिच्छन्दस्य वैरूप्यम्,

---

1. 'तन्न, उद्दिश्यमानत्वात्' इत्यस्य स्थाने 'तन्नोद्दिश्यमानत्वात्' इति पूनामुद्रितपुस्तके मूलपाठः। तथा सति शङ्काग्रन्थान्तर्गतेरस्य ग्रन्थस्यार्थासङ्गतिः, 'दूषयति' इत्यवतरणग्रन्थासङ्गतिश्च स्यात्।

2. 'अपूर्वेण देवता' इत्येव कोशेषु; 'अपूर्वदेवता' इति पूनामुद्रणे च पाठो दृश्यते। किन्तु अपूर्वेति पदमधिकं नः प्रतिभाति।

१. तद्देशाभावः–ख०।

सामर्थ्यलभ्यत्वान्निमित्तस्य । **सौर्ये चाग्निर्नास्ति । तत्र निमित्ताभावान्मन्त्रस्य निवृत्तिः, यथा भेदनाभावाद्धोमस्य निवृत्तिर्दर्शपूर्णमासयो**रिति पूर्वः पक्षः ।

सिद्धान्तस्तु—अपूर्वमेव निमित्तम्, नाग्न्यादिस्वरूपम् । तथाहि—न तावच्छाब्दं कस्यचिदपि निमित्तत्वमिहास्ति, देवताप्रकाशनद्वारेणानेन मन्त्रेणापूर्वं कुर्यादित्येतावता शब्दस्य पर्यवसानात् । यच्च यस्य प्रयोजनम्, तत्तदनुष्ठानेऽर्था-न्निमित्तं भवति, नान्यत् । तेनापूर्वीयदेवताप्रकाशनमेवास्य निमित्तमित्यप्रतिहता सौर्ये प्रवृत्तिः । भाष्ये चेदानीं त्वित्यादिना वर्णकद्वयं सहारब्धम् । तत्र यागं कुर्यादिति प्रथमे वचनव्यक्तिः, यागेन कुर्यादिति द्वितीये । यागाग्न्यादिरूपस्य साधनस्यायं धर्मः, न तु यागादिस्वरूपावधीरणेन साधनविशेषमात्रस्य । तेन यागादिद्वारेणैवापूर्वस्योपकरोति, नान्यद्वारेणेति । यागग्रहणं मन्त्रप्रकाश्याग्न्यादि-स्वरूपप्रदर्शनार्थम् । इतीति समाप्तौ ॥ १ ॥

[ २. वाक्यविनियुक्तानां प्रोक्षणादिसन्निपत्योपकारकाणामपूर्वप्रयुक्तत्वाधिकरणम् ]

## संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥२॥ पू०

**नन्वधस्तादपूर्वार्था धर्मा इति स्थिते हन्तिपिषिप्रयुक्तं प्रोक्षण**-मित्यस्य पूर्व**पक्षस्यानुत्थानमेव । सत्यम्** । सामान्येनापूर्वार्थत्वं स्थितमेव, **किन्तु श्रुतिलिङ्गवाक्यैर्ये संयुक्ताः** सन्निपातिन**स्तेऽपूर्वार्था न सम्भवन्ति** दुर्बलेन [1]प्रमाणेन प्रकरणे**नेति मन्यमानः पूर्वपक्षं करोति त्रिभिरधिकरणैः** । ननु पूर्वाधिकरण एव सन्निपातिनामप्यपूर्वार्थत्वमुक्तम् । सत्यमुक्तम् । न तूपपादितम् । एतावद्धि तत्रोक्तं लक्षणारम्भसिद्ध्यर्थं सर्वधर्माणां सप्तमाद्यन्यायेनापूर्वार्थत्वाद् द्रव्यसंस्कारोऽपि तत्प्रयुक्त इति । तदेवेदानीं श्रुत्यादिविरोधान्न सम्भवतीत्याशङ्क्य [2]समर्थ्यात [ समर्थ्यते ] ऊहापोद्धातत्वेन ! तत्रेह वाक्येन, "फलदेवतयोश्च"इत्यत्र लिङ्गेन, "द्रव्यसंख्याहेतुसमुदायम्"

---

१. 'प्रमाणेन' नास्ति–ख० ।

२. सामर्थ्यात्ते–ख० ।

इत्यत्र श्रुत्या पूर्वपक्षकरणमिति। **अत्र चोद्यते–किमुलूखलमुसलप्रयुक्तं प्रोक्षणमुतापूर्वप्रयुक्तमिति संशयो युक्तः, न तु हन्तिपिषिप्रयुक्तमिति। कथम्? प्रोक्षिताभ्यामिति प्रपूर्वादुक्षतेर्निष्ठाश्रवणात्।** ततः किमित्याह—**निष्ठा च कर्मण्युत्पद्यते।** तथापि किमित्याह—**ईप्सिततमं च कर्म। तस्माद्यथा व्रीहीन् प्रोक्षतीत्यत्र व्रीह्यर्थं** प्रोक्षणम्, **एवमिहापि निष्ठाश्रवणाद् उलूखलमुसलार्थं प्रोक्षणं,** न हन्त्यर्थम्। **उच्यते**—युक्तं "**व्रीहीन् प्रोक्षति**"इत्यत्र **व्रीह्यर्थं प्रोक्षणं भवतीति।** तत्र हि **प्रोक्षतीति भावना विद्यते। तस्याश्च भाव्येन भवितव्यम्। तत्र कश्चिद्धि क्रियमाणतया भाव्यः,** यथाऽवघातभावनाया व्रीहयः। **कश्चित्तु संस्कार्यत्वेन,** यथा त एव प्रोक्षणभावनायाः। **कश्चिदुत्पाद्यत्वेनैव,** यथा संयवनभावनायाः पुरोडाशः। **कश्चित् प्राप्यत्वेन,** यथा गोदोहनभावनायाः पयः। **व्रीहीन् प्रोक्षतीति** भाव्यवाचि**द्वितीयासंयोगाद् व्रीहयो भाव्याः। केन? प्रोक्षणेन।** इति युक्तमेव भावनान्वयवशात् प्रोक्षणसंस्कार्यत्वं व्रीहीणाम्। **निष्ठान्ते पुनर्नास्ति भावना। तदभावाद्भाव्यमानस्याप्यभावः।** ननु द्वितीयया [ निष्ठया ] भाव्यत्वमुच्यते, तत्कथं भाव्याभावोऽत आह—**सत्यपि कर्मत्वे प्रोक्षणमुलूखलमुसलार्थमिति केनोक्तम्।** द्वितीययेति [निष्ठयेति] चेत्तत्राह—**द्वितीयाचतुर्थ्यौ सत्यां भावनायामे**कभावनापादितसम्बन्धामात्**मार्थां क्रियां** धात्वर्थं **कुरुतः। तृतीयाद्याश्च** सत्यामेव **भावनायामात्मानं** तद्द्वारेण **क्रियार्थं कुर्वन्ति,** नह्यक्रियात्मकस्य[1] धात्वर्थस्य साक्षात् कारकान्वयः। तेन यावन्निष्ठोक्तकारकबलेन भावनामनुमाय्यैकभावनासंपादितसम्बन्धं प्रोक्षणं प्रत्युलूखलं प्राधान्य प्रतिपत्तुमुपक्रमते, तावदेवावहन्तिभावनया श्रुतया प्रोक्षणस्य वशीकारात्तादर्थ्यं भवति। तस्माद्विषमं व्रीहिप्रोक्षणेनेति। वैषम्यान्तरमप्याह—**अथवा द्वितीयोद्भूतशक्ति कर्म प्रतिपादयति, निष्ठा तु न्यग्भूतम्। कथं ज्ञायते? अत आह–उलूखलमुसले अत्र कर्मभूते। ते च कारके सती कारकान्तरेण** करणेन **संयुज्यमाने दृश्येते उलूखलमुसलाभ्यामिति। न च द्वितीयान्तं कारकं कार-**

1. अक्रियात्मकस्येति। भावनानात्मकस्येत्यर्थः। भावनानवच्छेदकस्येति यावत्।

**कान्तरेण युज्यते**। तत् कस्य हेतोः ? **उद्भूतशक्तित्वात्**। उद्भूतायां शक्त्यां द्रव्यस्य तदुपसर्जनभूतस्यार्थान्तरसम्बन्धायोगाच्छक्तेश्च स्वयं शक्त्यन्तरासम्बन्धात्। अनुद्भूतायां तु तद्विशिष्टस्य युक्तः कारकान्तरसम्बन्धः। तस्मात् कृदभिहितं कारकं कारकान्तरसंयोगदर्शनान्न्यग्भूतम्, विभक्त्यभिहितं तूद्भूतमिति। ततः किमित्याह— **तस्माद्यदुद्भूतशक्ति कारकं, तदेव क्रियां वशीकरोति, न त्वनुद्भूतशक्ति। कुतः? अत एवानुद्भूतत्वादेव**। नहि परविशेषणभूतमर्थान्तरवशीकारक्षममिति नोलूखलमुसलार्थं प्रोक्षणम्। **अपि चैवमुलूखलमुसलयोः प्रोक्षणस्य च सम्बन्धार्थं हन्तिधातुरुच्चार्येत। तत्रात्यन्तं वाक्यं स्यात्।** हन्त्यर्थे तु प्रोक्षणे किञ्चिद्धात्वर्थे विहितं स्यात्। **तस्माद्धन्त्यर्थं** नोलूखलमुसलाद्यर्थमिति युक्तो विचार इति। इदानीमुलूखलाद्यर्थत्वापरित्यागेनैवायं विचारो न तदपह्नवेनेत्याह—**अथवा वाक्यान्तरेण** हन्तिं प्रति **करणतया प्राप्ते उलूखलमुसले, अर्थप्राप्ते वा ते** करणभूते **अनूद्योपसर्जनार्थौ विधीयते**, प्रोक्षणं हन्त्यर्थेन। अस्यार्थः—यद्यपि प्रोक्षणमुलूखलमुसलसंस्कारार्थम्, तथापि तत्स्वरूपप्रयुक्तता न सम्भवति, तृतीयया [1]कार्यसाधनभूतयोस्तयोरुपादानात्। तेन करणभूते ते अनूद्य विधीयमानं प्रोक्षणं तत्कार्यप्रयुक्तमित्यविवादम्। इदं तु विचारयितव्यम्— किं यत्तयोर्हन्तिसाधनत्वं तदर्थमेतत्प्रोक्षणम्, ततश्च [2]हन्तिप्रयुक्तम्; उत यदपूर्वसाधनत्वं तदर्थम्, अतश्चापूर्वप्रयुक्तमिति।

**अत्र पूर्वः पक्षः—वाक्याद्धन्तिपिष्यर्थं प्रोक्षणम्। प्रकरणादपूर्वार्थम्। वाक्यं च ततः प्रकरणाद् बलीयः**। हन्तिपिषिशब्दाभ्यां हि तत्स्वरूपमभिधीयते, नापूर्वीयक्रियाविशेषरूपम्। अतश्च तृतीयाश्रुत्या हन्तिस्वरूपसाधनभूते उलूखलमुसले प्रतीयेते। अतस्तदनुवादेन प्रोक्षिताभ्यामिति पदान्तरेण तत्समानाधिकरणेन विधीयमानं प्रोक्षणं वाक्याद्धन्त्यर्थमेव न प्रकरणादपूर्वार्थं भवितुमर्हति। न चैवमानर्थक्यापत्तिः, हन्तेः क्रत्वर्थत्वेन प्रयोजनत्वात्[3], न

---

१. कर्म–क०।

२. तत्प्रयुक्तकार्यप्रयुक्त–क०।

३. तत्प्रयोजनत्वात्–ख०।

चैवं प्रोक्षणस्यापूर्वार्थत्वापत्तिः। हन्तिस्वरूपमेव क्रत्वर्थं प्रोक्षणं तु तदर्थम्, यथाधानमग्न्यर्थम्, अग्नयः क्रत्वर्थाः, न तु तावताधानं क्रत्वर्थमेवमिहापि। ततश्च नखनिर्भिन्ने चरावपूर्वधर्माणामेवातिदेशात् प्रोक्षणस्य चातदर्थत्वान्नातिदेशः। न चावघातस्तत्रास्ति, यः स्वाङ्गं प्रोक्षणमाकर्षेत्[1], [1]नखभवनिर्भेदनेन प्रत्याम्नातत्वात्। तस्मात्तत्र न नखेषु प्रोक्षणमूहितव्यम्। प्रधानचोदनाशेषभूतो हीत्थंभावश्चोदनासामान्याद् विकृतिष्वतिदिश्यते। अवघातमात्रं च तद्विशेषणम्, प्रोक्षणं त्ववघातस्वरूपविशेषणम्, न तद्द्वारेण प्रधानविशेषणमिति नातिदिश्यत इति ॥ २ ॥

## तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥ सि०

**अत्र केचिदेवं**[2] सिद्धान्तं **वर्णयन्ति—वाक्ये परिगृह्यमाण आनर्थक्यं प्रोक्षणस्यापद्येत**। नहि हन्त्यर्थतयार्थवत्ता सम्भवति। यद्यपि हन्तिरपूर्वार्थः, तथापि तत्स्वरूपस्यैवापूर्वार्थत्वात्, स्वरूपस्य चान्तरेणापि प्रोक्षणं निष्पत्तिदर्शनान्न तादर्थ्यं प्रोक्षणस्य सम्भवति। **तस्माद्वाक्यार्थो बाध्यते**ऽवहन्तिसंयोगः। **तत्रासंयुक्तं पदान्तरेण प्रोक्षणं** प्रकरणादपूर्वेण **सम्भन्त्स्यत** इति। नन्वेवमुलूखलादेः प्रोक्षणं न स्यात्, अत आह—**अपूर्वं चामूर्तमशक्यं प्रोक्षितुम्**। **अतो व्रीहिद्वारेणापूर्वं प्रोक्ष्यत इति**। व्रीहिग्रहणं व्रीहीन् प्रोक्षतीत्येतदप्युलूखलतुल्यप्रायन्यायमिति कृत्वा[3] कृतम्। **एतदयुक्तम्**। **कथम्**। **प्रोक्षणमपूर्वेण गृह्यते**। **तच्च प्रयाजादिवदारादुपकारकं प्राप्नोति**। **तत्र कथं** जा[ज्ञा]येते**दं**

1. अत्र 'नख' इति खकोशः। 'भव' इति ककोशः। उभयं संयोज्यास्माभिः 'नखभव' इति निवेशितम्।

१. अपकर्षेत्-क०।

२. देव-ख०।

३. ज्ञात्वा-ख०।

**संस्कारकमिति । अथोच्येत लोके संस्कारकं दृष्टमिति । तन्न, इह शब्द-लक्षणः संस्कारोऽवगम्यते । न च कश्चिच्छब्दः संस्कारकं प्रोक्षणमाह—प्रकरणाम्नानादाराादुपकारकं गम्यते । अपि च लोके** नैकान्ततः संस्कारक-मेवेदम् । किं तर्हि ? कदाचिदसंस्कारकमपि **स्यात् । अभ्युपेत्य ब्रूमः**—अस्तु **संस्कारकं प्रोक्षणम् । न चापूर्वं शक्यते प्रोक्षितुम् ।** तेने**वमपि** प्रकरण-विनियोगाङ्गीकरणेऽपि वाक्यविनियोगाङ्गीकरणवत् **तदवस्थमेवानर्थक्यम् । अथोच्येत—"आनर्थक्यात्तदङ्गेषु" इति** व्रीहिषु प्रोक्षणमिति, तथा **सत्यङ्ग-त्वाविशेषात् सर्वाङ्गेषु**प्राप्नोति। **अपूर्वसन्निकर्षाद्** [1]**वा द्वावदाने । अथोच्येत व्रीहीणां** वाक्ये **श्रवणात्तेषां भविष्यतीति ।** तदयुक्तम् । **स हि वाक्य-संयोगो भवतैव निराकृतः । एवमवहन्त्यादिष्वप्येते दोषाः प्राप्नुवन्ति अनेन** भवदीय**व्याख्यानेन । तस्माद्वाक्यमबाधित्वा योऽर्थः**[2] **स** एव **ग्रहीतव्यो** न तद्बाधेनेति[3] ।

कथं तर्हि सिद्धान्तो[4] यावता वाक्याङ्गीकरणे व्रीहिहन्तिपिष्यादि-प्रयुक्ततैवापद्यते । तत्राह—**वाक्ये चोच्चरिते**[5] **द्वैविध्यं भवति । प्रकरण-पाठात्तण्डुलनिर्वृत्तिप्रणाड्या शक्यमपूर्वं लक्षयितुम् ।** प्रकरणाद्धि प्रथमं प्रकृतेनैकवाक्यता कल्प्यते प्रकृतापूर्वसम्बन्धिनो व्रीहीनिति । ततस्तैस्तण्डुल-निर्वृत्तिः कार्यभूता लक्ष्यते । तद्द्वारेण चापूर्वम् । एवं लक्षितलक्षणालब्धापूर्वसाधनत्वं व्रीहित्वैकार्थसमवायि व्रीहिशब्देन लक्षयित्वा तादर्थ्येन विनियुक्तं प्रोक्षणं व्रीह्यर्थत्वा-परित्यागेनैवापूर्वार्थं शक्यमवगन्तुम् । **शक्यते च** व्रीहिश्रुत्या **व्रीह्यर्थं प्रोक्षणं प्रतिपत्तुम् ।** तदेवं वाक्याबाधेनैव श्रुतिलक्षणाभ्यामर्थद्वयं सम्भवति । **तत्र**

---

१. 'वा' नास्ति–ख० ।

२. अबाधित्वातीयोऽर्थः–ख० ।

३. तद्बधेनेति–ख० ।

४. 'सिद्धान्तः' नास्ति–क० ।

५. चोच्चारिते–ख० ।

सिद्धान्तमाह—**लक्षितलक्षणायां गृह्यमाणायां फलकल्पना न भवति। श्रुतिवृत्ते तु फलकल्पना स्यात्। तस्मात् फलकल्पनाभयाल्लक्षितलक्षणयाऽपूर्वार्थं प्रोक्षणमिति सिद्धम्।** एवं हन्तिशब्देनापि प्रणाड्या हन्तिसमवेतमपूर्वव्यापारविशेषत्वं [ षं ] लक्षयित्वा तदङ्गत्वेन प्रोक्षणं विधीयते, यया क्रियया तण्डुलनिर्वृत्तिद्वारेणापूर्वं क्रियते, तां प्रोक्षितसाधनेन कुर्यादिति। ततश्च साधनविशेषद्वारेण प्रधानभावनाविशेषणत्वाल्लब्धातिदेशं प्रोक्षणं नखनिर्लुञ्चनस्यापि [1]तद्रूपसद्भावात्तत्साधनेषु नखेषूहितव्यमिति।

**एवं वा—संस्कारे दीक्षणीयाख्ये यो धर्मो विहितः स परमापूर्वप्रयुक्तः। कुतः? परमापूर्वप्रयुक्तत्वाद्दीक्षणीयायाः,** स्वयं निष्फलत्वात्। अवश्यं ह्यत्र दीक्षणीयाशब्देनापूर्वसाधनत्वं लक्षयितव्यं श्रुत्यर्थे धर्मस्यानर्थक्यापत्तेः। तत्र किमिति फलवत्परमापूर्वलक्षणया तादर्थ्ये सम्भवति निष्फलावान्तरापूर्वार्थत्वमाश्रीयते। **तस्माद्यस्तत्र धर्मो विहितः स प्रोक्षणवत्परमापूर्वप्रयुक्तो न स्वरूपप्रयुक्तः।**

## तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् ॥ ३ ॥ सि०

**दीक्षणीयाद्यर्थत्वेन यो धर्मः संयुक्तो न स परमापूर्व**प्रयुक्तः, किन्तु स्वापूर्वप्रयुक्तः। **कुतः? दीक्षणीयात्मीयमपूर्वं लक्षयति** प्रथमम्। **तेन** च **धर्माणां सम्बन्ध**स्तदतिक्रमे [2]कारणाभावात्। तस्मिन् पक्षे[3] **लक्षणयैव** [णैव] केवला। **यदा तु दीक्षणीयापूर्वं** लक्षितं **परमापूर्वं लक्षयति, तदा लक्षितलक्षणया धर्माणां सम्बन्धः।** [4]स चान्याय्यः। यदि सिद्धान्तेऽपि लक्षणा, कथं तर्हि भाष्ये श्रुत्यभिधानम्। अत आह—**तस्माल्लक्षणां श्रुतिं ब्रवीति, लक्षितलक्षणापेक्षया** सन्निकृष्टार्थत्वात्। यथावस्थितमेव वा भाष्यमित्याह—**अथवाङ्ग**

---

१. तत्सद्भावा. क.।

२. क्रम—ख०।

३. तस्मिन् हि पक्षे—ख०।

४. स चान्यायः—ख०।

दीक्षणीयाख्यं **सम्बन्धादङ्गिनं ज्योतिष्टोमं शक्नोति लक्षयितुम्**। नह्यवश्यं पूर्वपक्षेऽपि दीक्षणीययाऽपूर्वद्वारेणैव परमापूर्वं लक्षयितव्यम्। एवमपि सम्भवति, दीक्षणीयया ज्योतिष्टोमो लक्ष्यते। तेन च परमापूर्वम्। **तेनाङ्गिसम्बन्धे लक्षणा, अङ्गसम्बन्धे तु श्रुतिः**। अङ्ग्यपूर्वसम्बन्धे श्रुतलक्षितेनाङ्गिनाऽपूर्वं लक्षयितव्यम्, अङ्गापूर्वं तु श्रुतयैव दीक्षणीययाऽपूर्वलक्षणा लभ्यते। तदनेनापि प्रकारेण पूर्वपक्षे लक्षितलक्षणा, सिद्धान्ते[१] लक्षणेत्येतदेव प्रतिपादितमिति। न चानर्थक्यं धर्मस्य, तेन परमापूर्वानिष्पत्तेः, तत्स्वरूपस्याप्यलौकिकत्वेन धर्मैर्विना सिद्ध्यनवगमात्। तस्मादवान्तरापूर्वप्रयुक्तो वाङ्नियमः। अत्र च दीक्षणीयाजन्यो दीक्षार्थो यजमान-संस्कारोऽवान्तरापूर्वमित्युच्यते। क्रत्वङ्गभूतयमनियमपरिपालनविषयो मानसः सङ्कल्पो दीक्षेत्युच्यते। तत्कर्तृभूतयजमानसंस्कारार्था दीक्षणीया नापूर्वार्था, नाप्युभयार्था प्रमाणाभावात्, तद्द्वारेणापि दीक्षणीयाया ज्योतिष्टोमाङ्गत्वोपपत्तेः। अथवा दीक्षणीयोत्पत्त्यपूर्वमवान्तरापूर्वमित्युच्यते। तच्चावश्यमङ्गीकर्तव्यम्, तेन विना स्विष्टकृदाद्युत्तरतन्त्रानुष्ठानं प्रति सापेक्षस्य संस्कारस्य क्रियास्वरूपेण निष्प-त्त्ययोगात्, सन्निपातित्वाच्च[२] वाङ्नियमस्यावघातादिवदुत्पत्त्यपूर्वप्रयुक्तता युक्तेति। अत्र[३] **पूर्वपक्षे त्रैधातव्या[1] दीक्षणीया भवतीति आग्नावैष्णव-कार्यापन्ना[४] त्रैधातव्या तद्धर्मैर्युज्यते, यथा नीवाराः प्रोक्षणेन** युज्यन्ते। **सिद्धान्ते त्वाग्नावैष्णवापूर्वप्रयुक्ता धर्मास्त्रैधातव्यायां न[५] भवन्ति। अपूर्वान्तरं हि तत्।[६] न चापूर्वान्तरमपूर्वान्तरधर्मान् गृह्ण**ातीति

---

1. भाष्यटीकादिषु सर्वत्र त्रैधतव्या इति स्थाने त्रैधातवीया इत्येव प्रचुरः पाठः।

१. सिद्धान्ते तु—क० ख०।

२. संनियतत्वाच्च—ख०।

३. 'अत्र' नास्ति—ख०।

४. कार्यापत्त्या—पू० मु०।

५. 'न भवन्ति' इति पदद्वयं नास्ति—क० ख०।

६. 'हि तत्' इति पदद्वयं नास्ति—क० ख०।

भाष्योक्तं प्रयोजन[1]माक्षिपति—**अनुपपन्नमिदं प्रयोजनम्। कथम्? त्रैधातव्या दीक्षणीया भवतीति सामानाधिकरण्यमुभयोः**[2]**। तत्र यदि मुख्यवृत्ते गृह्येयातां द्वे अपि, पदे ततः सामानाधिकरण्यं नोपपद्यते। तस्मादेकमत्र गौणं पदम्, अन्यन्मुख्यम्। तत्र प्राथम्यादविरोधाच्च त्रैधातव्यापदं मुख्यम्। दीक्षणीया**[3]पदं तु जघन्यत्वात् सञ्जातविरोध-**मात्मीयं क्रतूपकारं लक्षयति। तस्मिन् लक्षिते त्रैधातव्या विधीयते**—त्रैधातव्या दीक्षणीयाकार्यकारिणी भवतीति। **सा च विधीयमाना तत्कार्यापन्नत्वात्तद्धर्मान् लभते। सिद्धान्तेऽपि यथा खलेवाली यूपकार्ये विधीयमाना तद्धर्मान् अञ्जनादीन्**[4] लभते। नहि सिद्धान्तेऽपि दीक्षणीया-स्वरूपप्रयुक्तोऽयं धर्मः, किन्तु तत्कार्यभूतयजमानसंस्कारप्रयुक्तः। त्रैधातव्यापि तत्कार्यापन्नापूर्वीयं [ अपूर्वीयान् ] लभते, एवं [ एव ] तद्धर्मान्। **तस्मादुभयोः पक्षयोस्तुल्या धर्मप्राप्तिरिति। अथोच्येत—त्रैधातव्या दीक्षणीया भवतीत्यनेन** वचनेन प्रसिद्धाया**स्त्रैधातव्याया यत्कार्यं तन्निवार्य दीक्षणीयाकार्यं** तस्यां **विधीयते,** नात्राप्रसिद्धा त्रैधातव्येष्टिरुत्पाद्यते, किन्तु यान्यत्र कामाय प्रयुज्यत इति प्रसिद्धा त्रैधातव्या, सा दीक्षणीयाकार्ये विधीयते। **तच्च दीक्षणीयाकार्यमात्मीयैर्यथा**सिद्धैरेव **धर्मैरात्मीयेन चोत्पत्त्यपूर्वेण** त्रैधातव्या साधयिष्यति, **न दीक्षणीयाधर्मान् ग्रहीष्यति सिद्धान्त-वादिनः।** "अज्ञातधर्मकं हि कार्यापत्त्या धर्मान् लभते न निर्ज्ञातधर्मकम्" इति। दूषयति—**तन्न, पूर्वपक्षेऽपि यदि दीक्षणीयाकार्ये** यथासिद्धैव **त्रैधातव्या वर्तेत, तथा सत्यात्मीयैरेव धर्मैस्तत्कार्यं साधयिष्यति,** प्रसिद्धधर्मकत्वात् न कार्यापत्त्या धर्मान् गृह्णाति। **अथ न** तत्कार्ये **वर्तेत,** एवमपि कार्यापत्तेरप्य-

---

१. जनमनुभाषितमा–क०।

२. अनयोः–ख०।

३. दीक्षणीयादि–क०।

४. जदादीन्–ख०।

भावात् **सुतरामात्मीयैरेव धर्मैस्तस्या** अन्वयो न दीक्षणीयाधर्मैः। तदुभयोरपि पक्षयोरप्राप्तिर्धर्माणाम्। इतश्चैवमित्याह—**अपि च परमापूर्वप्रयुक्ततायामपि वाङ्नियमस्य प्रकृतावाग्नावैष्णवो विशिष्टं द्वारमभूत्।** आग्नावैष्णवापूर्वमित्यर्थः। **तच्चेह द्वारं नास्ति। तस्मान्नास्ति** पूर्वपक्षेऽपि **वाङ्नियमः।**

**नन्वनेन न्यायेन नीवारेषु प्रोक्षणं न प्राप्नोति।** व्रीहयो हि तस्य प्रकृतौ द्वारमित्याग्नावैष्णवग्रहणं यथाश्रुतं मन्वानस्य चोद्यम्। **उच्यते—सत्यं विशिष्टं द्वारं व्रीहयः प्रोक्षणस्येति। इयांस्तु विशेषो** नीवारत्रैधातव्ययोः—**व्रीहयो** हि **दृष्टेनैव** तण्डुलनिर्वृत्त्यापूर्वस्योप**कुर्वन्ति। नीवाराश्च तत्कार्यं प्रत्यक्षतः साधयन्तो दृश्यन्ते। तत्र कार्यापत्त्या तद्धर्मप्राप्तिर्युक्ता।** नहि व्रीहिस्वरूपप्रयुक्तं प्रोक्षणम्। **इह तु** दीक्षणीयाया**मदृष्टमपूर्वं द्वारम्।** तस्मिन् **कार्ये** त्रैधातव्या **वर्तत इति नास्ति प्रमाणम्।** नहि त्रैधातव्यायां दीक्षणीयापूर्वमस्ति। तेन द्वारभेदान्नास्ति धर्मप्राप्तिः, यथा तदपूर्वसाधनेष्वपि स्रुवादिषु द्वारभेदान्न प्रोक्षणम्। अथ तदेवापूर्वं त्रैधातव्यायाः, ततः सिद्धान्तेऽपि धर्मप्राप्तिः स्यात्। अत एवैतदपि न वक्तव्यं सिद्धान्ते दीक्षणीयोत्पत्त्यपूर्वप्रयुक्तो वाङ्नियमः। तच्च त्रैधातव्यायां नास्तीति न तत्र प्राप्यते। पूर्वपक्षे तु परमापूर्वप्रयुक्तत्वात् प्राप्यत इति। द्वारान्यत्वेन परमापूर्वप्रयुक्तत्वेऽपि परधर्मप्राप्त्यभावात्। **अथवा दूरादेवेदं भ्रष्टं प्रयोजनमिति** पूर्वोक्तमेव स्पष्टीक्रियते। **कथम्? त्रैधातव्या यादृश्येवोत्पन्ना तादृश्येवात्र चोद्यते।** कुतः? **त्रैधातव्याशब्देन सैव** हि **विपरिवर्तते।** नन्वनुपादेयसंस्कारोद्देशेन विधीयमाना प्रकरणान्तरन्यायेन कर्मान्तरं स्यात्, अत आह—**आख्याताभावात् कर्मान्तरमपि न भवति,** "भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः" इत्युक्तत्वात्। **तस्माद् यादृश्येव तत्र विज्ञाता तादृश्येवात्र कर्तव्या। यद्यपि च कर्मान्तरं स्यात्, तथापि नाम्ना** त्रैधातवीया**धर्मानेव गृह्णीयात्, न तु चोदकेन** दीक्षणीयाधर्मान्। तस्मात् पक्षद्वयेऽपि धर्मप्राप्त्यभावात् प्रयोजनान्तरं मृग्य**मिति** ॥ ३ ॥

[ ३. फलदेवताप्रकाशकयोर्मन्त्रयोरपूर्वप्रयुक्तत्वाधिकरणम् ]

## फलदेवतयोश्च ॥ ४ ॥ पू०

अनन्तरसङ्गतिमाह—**दीक्षणीयापूर्वप्रयुक्तो वाङ्नियमः, न परमापूर्वप्रयुक्त इत्यस्य पूर्वाधिकरणाप[करणस्याप]वादोऽयम्।** **दीक्षणीयासिद्धान्तेनैव फलदेवतयोश्चेत्यत्र पूर्वः पक्षः।** तमेवाह—**अग्निस्वरूपप्रयुक्तोऽयं मन्त्रः स्वर्गरूप[स्वरूप]प्रयुक्तश्च। लिङ्गेन ह्यत्र विनियोगः, सामर्थ्यं च लिङ्गम्। स्वरूपे च मन्त्राणां सामर्थ्यम्, नापूर्वीये स्वरूपे। लक्षणा हि तथा स्यात्। न च प्रकरणवशेन लिङ्गबाधो युक्तः। तेन कामं[1] वाक्यं प्रकरणेन बाध्यताम्, लिङ्गं तु ततो बलवत्तरं न बाधितुं युक्तम्। तेन यथा वाङ्नियमो ज्योतिष्टोमार्थदीक्षणीयार्थः, न तु** ज्योतिष्टोमार्थः, **तथा मन्त्रोऽपि** दर्शपूर्णमाससम्बन्धी यः स्वर्गोऽग्निश्च तत्प्रयुक्त इति। अपि चान्यथा मुख्यमेव कार्यं मन्त्राणामिति न्यायः प्रत्युद्भियेत। तस्माद्दर्शपूर्णमासफलत्वेनाभिमतं[2] यत्स्वर्गरूपं तत्प्रयुक्तोऽयं मन्त्र[3] इति।

**अथवा अयं मन्त्रः स्वसामर्थ्यादेवाग्निप्रकाशकः। तत्र यो योऽग्नि**र्दर्शपूर्णमासदेवताभूतोऽन्यो वा, **स सर्वः सामर्थ्याविशेषात् प्रकाशनीयः। न** चानर्थक्यम्। देवता हि स्वयमेव मन्त्रेणाशासितं[4] फलमुज्जित्यादि प्रयच्छति। फलमपि स्वयमेव पुरुषार्थमपूर्वादपि प्रधानं मन्त्रस्य प्रयोजकं भवति, नापूर्वसम्बन्धमपेक्षते। **तदेवं प्रकरणबाधं सामर्थ्येन मन्यमानः पूर्वपक्षं** करोति। **प्रोक्षणवत्तूत्तरम्।** न ह्यग्निस्वरूपप्रकाशनस्य प्रयोजनमस्ति। तेन फलाभावात् [5]प्रतिहते स्वरूपार्थत्वे प्रकरणसहितेन लिङ्गेनापूर्वीयदेवताप्रकाशनार्थतया विनियुज्यते। नन्वेवं लक्षणा स्यात्। तत्र मुख्यार्थे मन्त्राणां विनियोग इति न्यायो बाध्येत। न,

---

१. कामे—ख०।
२. अभिमते—ख०।
३. 'अयं मन्त्रः' नास्ति—ख०।
४. आशासिते—ख०।
५. विनिहते स्वरूपार्थत्वे प्रयोग इति—ख०।

अर्थस्वरूपाभिप्रायत्वात्तस्य । सर्वाण्येव पदान्येकवाक्यभूतानि पदार्थान्तरान्वितमर्थं लक्षयन्ति ।

तत्र कदाचित् स्वाभिधेयमेवार्थान्तरान्वयित्वेन[1] लक्षयन्ति, कदाचित्तु तत्सम्बन्ध्यर्थान्तरम्, कदाचित्तु सदृशम् । तत्र मन्त्रा मुख्यमेवार्थमर्थान्तरान्वयितया लक्षयन्ति, न तु गौणं लाक्षणिकं वेत्येतत्तत्रोक्तम् । तदिहापि नैव बाध्यते, मन्त्राभिधेयतां [अभिधेयानां] स्वर्गाग्न्यादीनामेव प्रकृतापूर्वसम्बन्धित्वात् । तदिदमुक्तं भाष्यकारेण "शब्दार्थस्य फलदेवतेन संप्रतिपन्नत्वाददुष्टा लक्षणा" इति । तेनानेन मन्त्रेण देवताफलप्रकाशनद्वारमपूर्वं कुर्यादिति विनियुक्तो मन्त्रो मुख्ययैव वृत्त्या प्रकाशयति । स्वरूपमात्रार्थत्वे [2]चानर्थक्यमदृष्टार्थता वा स्यात् । यद्यपि च देवता फलस्येष्टे, तथापि मन्त्रेण[3] ज्ञाप्यमाना फलं ददातीति नास्ति प्रमाणम् । एवं फलमपि यद्यपि सर्वस्मात् प्रधानम्, तथापि मन्त्रेण तत्प्रकाशनमनर्थकमेव । नहि प्रकाशितमात्रं फलं सिध्यतीति प्रमाणमस्ति । तस्मादपूर्वीयदेवतादिप्रकाशनार्थत्वान्मन्त्राणां देवतान्तरवत्यां विकृताहः स्यादिति ॥ ४ ॥

[ ४—धर्माणां देवताप्रयुक्तत्वाभावाधिकरणम् ]

## देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥६॥ पू०

प्रधानभूतापि देवता फलवन्न प्रयोजिकेत्युक्तम् । इदानीं तु नास्याः प्राधान्यमिति प्रतिपाद्यते । सर्वपूर्वोक्ताक्षेपेणैतदारभ्यते, अपूर्वापह्नवात् । तदाह—**अत्र यागो देवताराधनार्थ इति मन्यमानः पूर्वपक्षं करोति—न भाव्यमानार्थो यागः । किं तर्हि ? देवताराधनार्थः** । तस्यास्त्वाराधितायाः फलम् । **कुतः ? तद्धितशब्दादाग्नेय** इति । ततः किमित्याह[4]—**अग्निदेवताशब्दावस्यशब्दस्य विशेषणम् । अस्यशब्दश्च द्रव्याभिधायी**, इतरत्[5] तद्विशेषणम् ।

---

१. मेवार्थमर्थान्तरा—ख० ।

२. त्वानर्थक्य—ख० ।

३. मन्त्रेणानेन—ख० ।

४. अग्निर्देवता—क० ख० ।

५. इतर—क० ख० ।

तथापि किमित्याह—**तद्द्रव्यं यद्यग्न्युद्देशेन प्रदीयते, एवमग्निशब्दोऽस्य विशेषणं भवति नान्यथा ।** तथापि किमित्याह—**यदा च द्रव्यमग्न्युद्देशेन प्रदीयते, तदाग्निः संप्रदानं भवति । संप्रदानं च कर्मणोऽ**पीप्सिततमात् **प्रधानतरम्** । कथम् ? **यजतिक्रिया[क्रियया] द्रव्यं व्याप्यते । द्रव्येण च संप्रदानम् । तस्मादग्न्यर्थो यागः, यथा उपाध्यायाय गां ददाती**त्युपाध्यायार्थं दानमिति । **अपि च, देवतापूजायां यजिर्वर्तत इति स्मरन्ति** शाब्दाः । पूजा च पूज्यमानार्थतया लोके दृष्टा । **तस्मात् "यजेत स्वर्गकामः"** इत्यस्यायमर्थः—**देवतां यागेनाराधयेत, ततो** देवतायाः **स्वर्गो भविष्यतीति** ॥ ६ ॥

**अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः ॥ ९ ॥ सि०**

'यजेत स्वर्गकामः' इत्यत्र यजेतेति पदस्योत्तरार्धाद् भावनावचनात्तिस्र आङ्क्षाक्षा जायन्ते । तत्र प्रथमं तावद्भाव्यमाकाङ्क्ष्यते भावयेत्किमिति । तत्फलपदेन निराकाङ्क्षीक्रियते । तच्च फलं भाव्यमानं केन भाव्यमितीमां द्वितीयां करणाकाङ्क्षां पूर्वार्द्धो यजिः प्रत्यासन्नत्वान्निराकाङ्क्षीकरोति यागेनेति । ततः कथमितीमां तृतीयामाकाङ्क्षामग्न्यन्वाधानादीनि निराकाङ्क्षीकुर्वन्ति सन्निधानात् । तदेवमस्माद्वाक्याद्यागादेव फलं श्रूयते, न देवतायाः । ननु देवता संप्रदानं प्रधानमित्युक्तम् । उच्यते—यागः फले चोदितो निर्वृत्तिमपेक्षते । सा च निर्वृत्तिर्द्रव्यदेवतमन्तरेण न सम्भतीति तदपेक्षते । अपेक्ष्यमाणं च द्रव्यदेवतं कारकांशेनैवापेक्ष्यते न भाव्यांशेन, फलस्यैव साध्यस्य लब्धत्वात् , द्रव्यदेवतस्य चापुरुषार्थस्य साध्यत्वायोगात् । यदि प्रमाणान्तरेण देवतायाः फलदातृत्वमवगतं स्यात् , ततस्तत्सम्बन्धित्वेन चोद्यमानो यागस्तदर्थः स्यात् , न त्वेतदस्ति "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इत्येवमादेरर्थवादस्वरूपत्वेन फलविधित्वाभावात् । तस्मात् कारकमेव द्रव्यदेवतम् । **तत्र द्रव्यं तृतीयया**

**कारकं भवतीति। देवता तु तद्धितेन चतुर्थ्या वा।** ननु ताभ्यां प्राधान्यं देवतायाः प्रतीयते? सत्यम्, न त्वयं दोष इत्याह—**तच्च**[१] **देवताकारकं यागं प्रति यदि न प्राधान्यं प्रतिपद्यते, तथा सति यागो नैव निर्वर्तेत यागनिर्वृत्त्यभावाच्च कारकमेव देवता न स्यात्। तथा यदि यागस्तस्य** देवताकारकस्य **गुणतां न प्रतिपद्येत,** तत **आत्मानमेव न** प्रति**लभेत। तस्माद्यागेन** फलसाधनभूतेन निर्वृत्तिमपेक्षमाणेन तत्सिद्ध्यर्थं [1]**नान्तरीयकेण व्यापारेण गुणभावः प्रतिपत्तव्यः,** तथा **देवताकारकेणापि** यागं निर्वर्तयता **नान्तरीयकः प्रधानभावः** प्रतिपत्तव्यः। न चैतावता देवतातदर्थता[2] यागस्य भवतीत्याह—**न च नान्तरीयको व्यापारो गुणभावे प्रधानभावे वा कारणम्।** कुतः? **अचोदितत्वात्।** कथमचोदितत्वमित्याह—**यागो हि फले** साधनत्वेन **चोदितः** [3]**सन्नान्यथा फलं साधयतीत्येवं** फलसाधनत्वसिद्ध्यर्थं **नान्तरीयकेण व्यापारेण देवतां प्रति गुणभूतेन भवितव्यम्,** न तु गुणभाव एव चोदितः। **तस्मात् सर्वत्र** द्वयोः सम्बन्धे**ऽशाद्वयमस्ति** प्राधान्यं गुणत्वञ्च। **तत्र किं विवक्षितं किमविवक्षितमिति विज्ञेयम्। तत्र लोकेऽर्थकृता विवक्षा, वेदे तु शब्दकृता। शब्देन च प्रत्यासन्नस्य** [२]**यागस्य फलसाधनत्वात् प्राधान्यं देवतायाश्च गुणत्वं विज्ञायते।**

---

1. 'नान्तरीयको गुणभावः' इति पूनामुद्रितो मूलपाठः।

2. देवतातदर्थतेत्येकं पदम्। देवतां प्रति तादर्थ्यमित्यर्थः।

3. यागेन हि⋯'अहं नान्यथा फलं साधयामि' इत्येवम् इति पूनामुद्रितो मूलपाठः। सुश्लिष्टः, 'यागेन' इत्यस्य 'गुणभूतेन भवितव्यम्' इत्यनेन स्वरसान्वयात्। यथावस्थितपाठे तु गुणभूतेनेत्यनन्तरं यागेन इत्यध्याहारः कर्तव्यः।

१. तत्र—ख०।

२. 'यागस्य' नास्ति—ख०।

किमिति पुनर्वेदे शब्दकृता विवक्षा नार्थकृता ? आह—**न चोपकारलक्षणं शेषत्वम्**। चशब्दो हेतौ। **किं तर्हि ? चोदनालक्षणं तदिति स्थितम्**, श्रुत्यादीनि च विनियोगे कारणानीत्यत्र। यदि ह्युपकारलक्षणं स्यात्, ततस्यांश[ ततस्तस्यांश ]स्याशास्त्रीयत्वात् प्रत्यक्षादिभिरेवोपकारं गृहीत्वा शेषत्वं गम्येत। तत्तु श्रुत्यादिलक्षणमित्युक्तम्। तदिह पदश्रुत्या यागस्यैव फलभावनाकारणत्वात् प्राधान्यम्। द्रव्यदेवतादीनां तु वाक्यप्रकरणादिभिः यागार्थत्वमिति।

**किं भवति प्रयोजनं चिन्तायाः। यदि देवताराधनार्थो यागः, ततः पूज्यमाना देवता, यागश्च पूजा। सा च लौकिकः पदार्थः। तत्र येनैव प्रकारेणाग्निः पूज्यते तेनैव सूर्यः पूज्यत इति कस्तवाश्वासः। विपरीतमपि कदाचित् स्यात्। अपि च** स एव[1] **सूर्य एकाकी सन्नग्निपूजया तृप्यति, देवतान्तरसहितस्त्वग्नीषोमपूजयेति नैतत् सम्भाव्यते। नहि देवदत्तोऽत्यन्तमधुरमधुपयःप्रभृतिभिः प्रीयमाणो यज्ञदत्तसाहचर्यात् सौवीरप्रियो भवति। सिद्धान्ते तु भाव्यमानेनापूर्वेण धर्माः सम्बन्ध्यन्ते। तत्र सौर्येऽपि भाव्यमानेनैव धर्मा** आकाङ्क्ष्यन्ते। तत्र **सादृश्यादाग्नेयधर्मप्राप्तिर्युक्ता भवति।** कुतः ! **अलौकिकत्वाद्धर्माणामपूर्वार्थानाम्।** नहि तदा लौकिकपूजास्वभावोऽनुसर्तव्य इति। **अथवा यदा देवताराधनार्थो यागस्तदा यदुक्तं** [2]**द्रव्यदेवताविरोधे द्रव्यसामान्याद्विध्यन्त इति तन्नोपपद्यते, देवताराधनार्थत्वाद्यागस्य। देवतासामान्यमेव** प्रधानगतत्वाद् **बलीयः** स्यात्। **विप्रकृष्टत्वादङ्गस्थस्य द्रव्यसामान्यस्येति।** यो ह्यग्नेः पूजाप्रकारः स यत्राग्निस्तत्र सर्वत्र भवितुमर्हति द्रव्यमनादृत्य। तेनाग्नेये पयसि आग्नेयविध्यन्तः स्यान्न त्वैन्द्रसान्नाय्यविध्यन्त इति ॥ ९ ॥

[ ५—श्रुतिविनियुक्तप्रोक्षणादिधर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ]

**द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥ पू०**

---

1. स च–क०।
2. 'द्रव्य' नास्ति–ख०।

ननु हन्तिपिष्यधिकरणेन फलदेवताधिकरणेन च गतम्। यद्युच्येत युक्तं तावद्धन्तिपिषिभ्यां सम्बन्धे हन्तिपिष्योर्भाव्यार्थतया कार्यपर्यन्तत्वम् फलदेवतयोश्च साध्यसम्बन्धनिबन्धनत्वाद् व्यपदेशस्य युक्ता साध्यप्रयुक्तिः, इह पुनर्द्रव्यादयो न कार्यपर्यन्तस्वभावाः, नापि सम्बन्धितया व्यपदिश्यन्ते। तेन न कार्यार्थतया धर्मविधिः सम्भवतीति। स्यादेवं हन्तिपिषिवैषम्यम्। फलदेवतवैषम्यं तु न सिध्यति। स्वर्गाग्न्यादिप्रयुक्त्या हि तत्र पूर्वपक्षो न फलदेवतप्रयुक्त्या। फलदेवतग्रहणं तु सिद्धान्ताभिप्रायमिति भाष्यकारेणैवोक्तम्। अतो गतार्थमेवैतत्। अत आह—**प्रोक्षिताभ्यामिति वाक्याद्धन्त्यर्थं प्रोक्षणम्। स च वाक्यसंयोगः श्रौतांशेन निराकृतः।** श्रौतेन हन्तिरूपेण यो वाक्यात् प्रोक्षणस्य संयोगः स निराकृतः प्रकरणवशेन तदीयव्यापारविशेषलक्षणाश्रयणेन। **तथा लिङ्गसंयोगश्च श्रौतांशेन** स्वर्गाग्न्यादिरूपेण **निराकृत** एव। **अस्मिंश्चाधिकरणे लिङ्गवाक्यसंयुक्तो नोदाहरणं निराकृतत्वात्। श्रुत्या तु येषां तादर्थ्यं** यथा व्रीहिप्रोक्षणचतुर्होत्राभि[ त्रभि ]मर्शादीनाम्, **त इहोदाहरणम्। तांश्च श्रुत्या तदर्थान्** व्रीह्यादिस्वरूपार्थान् **मन्यमानः पूर्वपक्षं करोति।** तथाहि—**व्रीहीन् प्रोक्षतीति द्वितीयाविभक्तिः श्रुत्यैव व्रीह्यर्थतां प्रोक्षणस्य प्रतिपादयति। अपूर्वसम्बन्धः प्रकरणात् स्यात्।** सा **श्रुतिश्च ततः प्रकरणाद् बलीयसी।** तथा **पौर्णमासीमित्यत्रापि समुदायार्थमभिमर्शनं श्रुत्यैव द्वितीया प्रतिपादयति।** तथा **त्रीन् परिधीनित्यपि द्वितीया।** सापि **श्रुत्यैव मन्त्रस्य संख्यार्थतामाह।** ननु मन्त्रगतेयं द्वितीया कथं मन्त्रस्य तादर्थ्यं प्रतिपादयेत् स्वात्मनि क्रियाविरोधात्। सत्यम्, मन्त्रकल्पिता तु श्रुतिरियमुदाहृता। सा हि त्रिसंख्याप्रकाशनसमर्थमन्त्रवशात् [2]कल्प्यमानेदृशी कल्पते [ कल्प्येत ], मन्त्रेणानेन त्रीन् परिधीन् प्रकाशयेदिति। नन्वेवं लिङ्गविनियोगोऽयं स्यात्। स च निराकृतः। सत्यम्, उदाहरणान्तरं तु दातव्यम्, यत्र

---

१. संयुक्ता–ख०।

२. कल्पमाना–क०।

[1]प्रत्यक्षेणैवेदृशी श्रुतिः। **तस्मात् त्रिसंख्याप्रयुक्तो मन्त्रो नापूर्वप्रयुक्तः। "शूर्पेण जुहोति तेन ह्यन्नं क्रियते" इत्यत्र शूर्पं तावदनुदाहरणम्. करणविभक्तिनिर्देशात्।** यदि हि शूर्पार्थो होमः स्यात्, ततः किं तत्स्वरूपप्रयुक्तो होम उतापूर्वसाधनविशेषप्रयुक्त इति विचार्येत। करणविभक्तिनिर्देशात्तु शूर्पमेव होमार्थम्। तस्मादनुदाहरणम्। **यथा व्रीहिभिर्यजेतेत्येत**दनुदाहरणम्। अथ हेतुनिर्देशकल्पित**मन्नकरणेन जुहोती**त्युदाहरणम्, **एतदपि करणविभक्तिनिर्देशादेवानुदाहरणम्। अथोच्येत—हिशब्दसंयोगाद्** हेतुत्वेनावगम्यमानमन्न**करणमुदाहरणं स्यात्।** व्याप्यस्य हि हेतुत्वम्, प्रधानस्य चाङ्गेन व्याप्तिर्भवति। यत्र यत्र प्रधानं तत्र तत्राङ्गं न तु यत्राङ्गं तत्र प्रधानम्। नहि प्रधानमङ्गेनाकृष्यते। तस्माद्धिशब्दश्रुत्यान्नकरणस्य हेतुत्वावगमात् प्राधान्यम्। होमस्तु तदर्थः। तेनेदृशमत्र वचनं कल्प्यते, यद्यदन्नकरणं तत्तद्धोमेन संस्कर्तव्यमिति। निराकरोति—**तन्न। शूर्पस्य विधीयमानस्यार्थवादोऽयम्,** न हेतुरित्युक्तम्। **उच्यते—हिशब्दश्रुत्या हेतुत्वेनेहान्नकरणम्, यस्मादन्ने-**

---

1. यत्र प्रत्यक्षेणैवेदृशी श्रुतिरिरिति। ईदृशी त्रीन् परिधीन् मन्त्रेणानेन प्रकाशयेद् इत्येतत्सदृशी प्रत्यक्षेणैव प्रत्यक्षरूपैव श्रुतिर्यत्रास्ति तादृशमुदाहरणं दातव्यमिति पूर्वेण सम्बन्धः। अत्रायं भावः—मन्त्रस्य संख्याप्रयुक्तत्वपूर्वपक्षे "त्रीन् परिधीँस्तिस्रः समिधः" इति मन्त्र उदाहृतो भाष्ये। तद्विवरणावसरे च टीकायां त्रीन् परिधीनिति द्वितीयाश्रुत्यैव मन्त्रस्य संख्यार्थतामाह इत्युक्तम्। तत्र त्रीन् परिधीन् इति मन्त्रपदस्थाया द्वितीयाश्रुतेः संख्योद्देशेन तन्मन्त्रविनियोजकत्वं नैव संभावयितुमपि शक्यम्। अतो मन्त्रगतत्रित्वसंख्याप्रकाशनसामर्थ्यरूपलिङ्गकल्प्यं यत् त्रीन् परिधीनिति मन्त्रेण त्रित्वं प्रकाशयेदिति विनियोजनम्, तत्रस्था द्वितीयैव टीकायामभिप्रेतेत्यास्थेयम्। अत एव त्रीन्····गम्यत इति समनन्तरभाष्यमपि संगच्छते। तस्माल्लिङ्गविनियोज्यत्वादस्य मन्त्रस्य, लिङ्गविनियोज्यानां चापूर्वप्रयुक्ततायाः स्थापितत्वाद् लिङ्गवाक्यसंयुक्ता अस्मिन्नधिकरणे नोदाहरणमिति टीकायां विवेचितत्वाच्च अयं मन्त्रो नात्रोदाहरणम्, किन्त्वन्यदेव किञ्चिद्

नान्नं क्रियते तस्मादनेन होमः कर्तव्य इति, न[2] स्तुतिः, लक्षणाप्रसङ्गात्। ननु प्रसिद्धसम्बन्धो हेतुर्भवति। न च होमान्नकरणयोः सम्बन्धोऽवगतः प्रमाणान्तरेण यथा कृतकत्वानित्यत्वयोः। उच्यते—सत्यमेवं लोके प्रमाणान्तरेण सम्बन्धोऽपेक्षितः। वेदे तु हिशब्दश्रवणाद्वाक्यमनुमीयते होमान्नकरणयोः सम्बन्धकर्तृ यद्यन्नकरणं तत्तद्धोमेन सम्बन्धयितव्यमिति। तेन चानुमितेन हेतुश्रवणमुपपत्स्यते। तथापि किमित्याह—सति च हेतुश्रवणेऽन्नकरणं संस्कार्यम्; होमश्च संस्कारकः। कथम्? यद्यदन्नकरणं तत्तद्धोमेन व्याप्यते, यथा यद्यत्कृतकं तत्तदनित्यत्वेन व्याप्यते, यथा च यत्र यत्र धूमस्तत्र तत्राग्निना व्याप्यते[1]। प्रधानं चाङ्गेन व्याप्यते। तस्माद्धिशब्दश्रुत्यान्नकरणस्य हेतुत्वेन व्याप्यत्वाद् अन्नकरणार्थो होम इति मन्यमानः पूर्वपक्षं करोति। यत्तु प्रथमेऽध्यायेऽर्थवादत्वं साधितमित्युक्तम्, तत्राह—इहान्नकरणसंस्कारार्थत्वनिराकरणेनापूर्वार्थे होमे स्थिते प्रथमेऽध्याये किं होमसाधनत्वेनान्नकरणं

---

दातव्यमिति टीकाभिप्राय इति। एतदेवाभिप्रेत्यास्मिन्नधिकरणे श्रीखण्डदेवेनाभिहितम्—"संख्योदाहरणस्य त्रीन् परिधीन्" इति मन्त्रस्य "अगन्म सुवः" इति मन्त्रवदपूर्वसाधनीभूतपरिधीयत्ताप्रकाशनार्थत्वस्य सिद्धत्वादनुदाहरणत्वमिमि वार्त्तिककारेणैवोक्तम्" इति। पूनामुद्रणसंशोधकैस्तु यथादर्शितं भाट्टदीपिकावाक्यमवलम्ब्य अत्रवार्त्तिकग्रन्थो लुप्त इति य उल्लेखः, यश्च लुप्ततद्ग्रन्थार्थस्य स्वयमभ्यूहष्टिप्पण्यां दर्शितः, तत्र नातीव श्रद्धेयमिति नः प्रतिभाति। "वार्त्तिककारेणैवोक्तमिति भाट्टदीपिकावचनं तु अस्मत्प्रदर्शितया वार्त्तिकव्याख्यानदिशा वार्त्तिककारेणैवोक्तप्रायमिति व्याख्येयम्। इतरथा ह्येतद्ग्रन्थसन्दर्भगतस्य तन्त्ररत्नग्रन्थस्य स्वरसः परित्यक्तो भवेदिति।

1. व्याप्यत इति स धूम इति शेषपूरणेन व्याख्येयम्।

२. न तु स्तुतिः—ख०

**विधीयते**, शूर्पं तु प्रदर्शनार्थमेकदेशानुवादः, उत शूर्पं विधीयते तस्य **त्वन्नकरणं स्तुतिरित्ययं विचार** इत्यपुनरुक्तता ॥ ११ ॥

**अर्थो वा स्यात्प्रयोजनमितरेषामचोदनात् तस्य च गुणभूतत्वात् ॥ १३ ॥ सि०**

**यदि व्रीहिस्वरूपप्रयुक्तं प्रोक्षणं स्यात्तथा सति फलकल्पना स्यात् । न हि** व्रीहि**स्वरूपार्थत्वे परम्परयापि प्रकृतापूर्वप्रयोजनत्वम्**, **अग्निद्वारेणेवाधानस्य** क्रत्वपूर्व**प्रयोजनता सम्भवति** । तत्र ह्याहवनीयादिरूपं क्रत्वर्थम्, तच्चाधानसाध्यमिति युक्ता तत्स्वरूपार्थत्वेऽप्याधानस्य प्रयोजनवत्ता, न त्विह प्रोक्षणजन्यादृष्टविशिष्टानां व्रीहीणां क्रत्वर्थतया विधानमस्ति, यतोऽपूर्वं यावद् गत्वापि प्रोक्षणं प्रयोजनवत् स्यात्, व्रीहिभिर्यजेतेति तज्जातिमात्रश्रवणात् । तस्मात् स्वरूपार्थत्वे फलं कल्पयितव्यम् । न च तद्युक्तम् । न च सम्भवति फलकल्पना । कुतः ? तद्धि कल्प्यमानं न तावत्प्रोक्षणात् कल्पयितुं शक्यम् । तथा सति तस्य व्रीह्यर्थत्वाभावेन द्वितीयाश्रुतिबाधप्रसङ्गात् । नापि व्रीहिभ्यः, तेषां द्रव्यरूपाणां क्रियामन्तरेण फलसाधनत्वासम्भवात्, क्रियाविशेषस्य चाश्रवणात् । तस्मात् प्रकरणादपूर्वार्थं प्रोक्षणम् । एवमवघाताभिमर्शनादयोऽपि । अत्र चोद्यभाष्यम्—अपूर्वसम्बन्धेऽपि तदीयैर्व्रीह्यादिभिरेव धर्मः प्रयुज्यते यद् व्रीह्याख्यमपूर्वसाधनं तत्प्रोक्षितव्यमिति । तथा सति हि व्रीहिश्रवणं नाविवक्षितं भवति । अवश्यं चैतदेवं विज्ञेयम्, साधनमात्रप्रयुक्तत्वे स्रुवादिष्वपि प्रोक्षणं प्रसज्येत । तस्मादपूर्वीयव्रीहिप्रयुक्तत्वाद् द्रव्यान्तरेषु नोहः सिध्येदिति । इदं च हन्तिपिषिफलदेवतेऽपि तुल्यं चोद्यम् । अनया विशेषाशङ्कया तदपि सर्वमिहोदाहरणमेव । दर्शिता चेयमाशङ्का सूत्रकारेण "अर्थकारिते च द्रव्येण न व्यवस्था स्यात्" इति । एतन्निराकरणार्थत्वादप्यपुनरुक्तमधिकरणम् । तत्रोत्तरम्—नैवं शक्यमित्यादि । तद्व्याचष्टे—**न च वाक्यस्य द्वावर्थौ । यदि वा तण्डुलनिर्वृत्तिप्रणाल्या यदपूर्वं लक्ष्यते तस्यायं धर्मः** । [1]यदि वा **व्रीहिजातिलक्षितस्य द्रव्यस्य**, न तु द्वयमपि लभ्यते । नहि सकृदुच्चारितं व्रीहि-

१. अथवा–पू० मु० मूलपाठः ।

पदं व्रीहिस्वरूपं च तत्समवेतं च साधनविशेषं प्रतिपादयितुं शक्तम्। तत्र स्वरूपपरत्वे सत्यानर्थक्यात् साधनविशेषलक्षणा विज्ञायते। तच्च द्रव्यान्तरेऽपि तथाविधेऽस्तीति भवत्यूहः। यत्तु स्रुवादिष्वपि प्रसङ्ग इत्युक्तम्, तत्परिहारार्थोऽत्र **भाष्यग्रन्थः—व्रीहिजातिलक्षितं यत्साधनं किं तत्? यतस्तण्डुला भवन्ति, तत्प्रोक्षितव्यमिति** शास्त्रार्थः। कुतः? **तण्डुलनिर्वृत्तिकरता हि तत्र** व्रीहिषु **साधनत्वम्, न द्रव्यतेति**। तमनुभाष्य व्याचष्टे—**कोऽभिप्रायः**। उत्तरम्—**तण्डुलनिर्वृत्तिप्रणाड्या** हि **यत्साधनत्वं** व्रीहिसमवेतं **लक्ष्यते, तदर्थं प्रोक्षणम्। यवेष्विपि तण्डुलनिर्वृत्तिरविशिष्टा**। तथा विकृतिष्वपि नीवारेषु[1]। तस्मात्तेष्वेव प्रोक्षणम्। **न चान्यद् द्रव्यं** स्रुवादि **तण्डुलनिर्वृत्तिकरणांशेन** शक्यं **लक्षयितुम्। तस्मा**त्साधनविशेषप्रयुक्तत्वादन्**येषु द्रव्येषु प्रोक्षणाभावः** ॥ १३ ॥

अत्रान्तरं [ अत्रानन्तरं ] लौकिकेष्वपि प्रोक्षणं पूर्वपक्षे प्रसज्यत इत्युक्त्वा चोदितं प्रकरणाद्विशेषो भविष्यतीति। तत्रोत्तरम्—

## नाश्रुतित्वात् । १७ ॥

तत्र भाष्यम्—**न प्रकरणस्य** कथंभावरूपस्य **विशेष्टुं सामर्थ्यमस्ति। कर्तव्यतया हि तत्क्रियमाणं चोद्यते, न प्रसिद्धसम्बन्धमिव परविशेषणत्वेनेत्यनु**भाष्य व्याचष्टे—**कोऽभिप्रायः**? उत्तरम्—**भावयेत्स्वर्गम्। केन? यागेन। कथमिति प्रकाराकाङ्क्षा भवति। स च प्रकारोऽनिर्ज्ञातस्वरूपत्वात्कर्तव्यः**। प्रकार एव ह्याकाङ्क्ष्यमाणः प्रकरणमित्युच्यते। जिज्ञास्यमान इति यावत्। **यश्च निर्ज्ञातस्वरूप उच्चार्यते स परविशेषणं भवति यथा शुक्लः पट इति। इह तु यत्कथंभावाकाङ्क्षायामग्न्यन्वाधानाद्युपनिपतति, तदस्य सम्बन्धित्वे कारणम्**। तत् कथंभावात्मकं प्रकरणम् अग्न्यन्वाधानादेरित्थंभावेन सम्बन्धित्वे कारणं भवति। कथं कुर्यात्? अग्न्यन्वाधानव्रीहिप्रोक्षणादिप्रकारेणेति, **न त्वन्यस्य** कारणं **भवति** विशेषणादेः। यद्दर्शपूर्ण-

१. नीवारादिषु—ख०।

मासेत्थंभावसम्बन्धि व्रीह्यादि, तत्प्रोक्षेदिति, इत्थंभावस्यास्यामवस्थायामविज्ञातत्वात्। ननु यदि प्रकरणं न[1] विशेषणम्, कथं तर्हि प्रकृतापूर्वसाधनेषु व्रीहिषु सिद्धान्ते प्रोक्षणं व्यवतिष्ठते ? अत आह। **न चान्यस्य** भवितुमर्हति। न स्वरूपेण प्रकरणं विशेषणम् प्रकृतान् व्रीहीनिति। किं तर्हि ? प्रोक्षणस्य फलापेक्षायां प्रकृतैकवाक्यतयैव फललाभे सम्भवत्यप्रकृतफलवचनकल्पनया तदेकवाक्यत्वमन्याय्यमिति प्रकरणादेकवाक्यता प्रकृतेन कल्प्यते प्रोक्षणेन व्रीहिद्वारेण दर्शपूर्णमासयागं प्रति व्याप्रियेतेति। न चातत्साधनभूतव्रीहिद्वारेण तं प्रति व्यापारितुं शक्यते। तेनार्थात्प्रकृतापूर्वसाधनेषु व्रीहिषु प्रकरणेन प्रकृतैकवाक्यतामापन्नेन वाक्येन प्रोक्षणस्य विनियोगः। तेन साक्षान्न प्रकरणं विशेषकम्, एकवाक्यतापादनमुखेन तु भवति विशेषणमिति। पूर्वपक्षे तु स्वतन्त्रस्य प्रोक्षणविधेः कल्प्यफलकस्य प्रकृतैकवाक्यताकारणाभावाल्लौकिकेष्वपि प्रोक्षणं स्यादिति। अथासत्यपि कथंभावात्मकस्य प्रकरणस्य विशेषकत्वे सन्निधिलक्षणलौकिकप्रकरणवशेन विशेषलाभ इत्युच्यते, तदयुक्तम्, तुल्यत्वादनयोः शास्त्रयोः। व्रीहिभिर्यजेत व्रीहीन् प्रोक्षतीति द्वयोरपि लौकिकव्रीहिग्राहित्वान्न गृह्यते विशेषः कतरेण सन्निधापितं कतरद् गृह्णात्विति। तस्मादपूर्वप्रयुक्तं प्रोक्षणमिति ॥१७॥

[ ६—उपांशुस्वरस्याग्नीषोमीयप्राग्भावितत्त्वान्तरापूर्वप्रयुक्तत्वाधिकरणम् ]

## देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥ सि०

यज्ञभागधर्मः पदार्थधर्मो वेत्यस्योहलक्षणे का सङ्गतिः ? तामाह—**आद्यस्त्येऽधिकरणे समुदायप्रयुक्तमभिमर्शनमित्युक्तम्**। समुदायापूर्वप्रयुक्तमित्यर्थः। तेन **समुदायप्रसङ्गेनान्योऽपि यः समुदाय इव लक्ष्यते** ज्योतिष्टोमयागः। कथं समुदाय इवेत्याह—**ग्रहयज्यभ्याससमुदाय इति**। समुदायधर्मकत्वात् समुदाय इव। **तत्र विचार्यते—किं तत्प्रयुक्तं** तदपूर्वप्रयुक्तम् ? **उपांशुत्वम्**, **उत** तदीया येऽग्निषोमीयात् प्राग्भाविनः पदार्थाः, तत्प्रयुक्तं तदपूर्वप्रयुक्तमिति प्रासङ्गिकी सङ्गतिः। **अथवा संस्कारोहो विचार्यते**—ऊह्यत इत्यूहः। ऊहविषयः

---

1. 'न' नास्ति—क०।

संस्कारो यः स विचार्यते **प्रकृतौ विकृतावूहानूहनिर्णयाय**। यज्ञभागधर्मो हि स्वरो विकृतावपि तद्भागारम्भके पदार्थे ऊहितव्यो भवति, पदार्थप्रयुक्तत्वे तु यूपावटस्तरणबर्हिर्न्यायेनापूर्वे वैकृते पदार्थे नोपांशुत्वं स्यादिति। तेन हन्तिपिष्यादिविचारवदुपोद्घाततया सङ्गतिरिति। तत्र सिद्धान्तेन तावदुपक्रमते—

**अग्नीषोमीयात् प्राग्भाविनां पदार्थानामुपांशुत्वं श्रुत्या भवति। ननु** च **वाक्येनैष धर्मो विनियुक्तो न श्रुत्येति** भाष्यमनुभाषितम्। **नह्युपांशु**-शब्देऽङ्गत्वाभिधायिनी **तृतीयाद्या विभक्तिरस्ति**। तस्मात् समभिव्याहारादेवैष विनियोग इति। 'न ब्रूमो न वाक्येन' इत्यादिपरिहारभाष्याभिप्रायमाह—**उच्यते**—**सत्यं** वाक्येन; **किन्तु प्राक्शब्दः** साकाङ्क्षत्वादवश्यं **निराकाङ्क्षी-कर्तव्यः। तत्र यदि सोमयागेन सम्बन्धः क्रियते** यज्ञस्य यत्प्राचीनमिति, तथा सति **प्रकरणाम्नानानुमितेन** वाक्येन **सम्बन्धः स्यात्**। नहि यज्ञस्य यत् प्राचीनमित्येवंविधं वाक्यं श्रूयते। यत्तु 'त्सरा वा एषा यज्ञस्य' इति, तत् त्सराशब्द-विशेषणत्वान्न व्यवहितप्राचीनशब्दसम्बन्धमर्हतीति। **यदि त्वग्नीषोमीयेन सम्बन्धः** क्रियते, तथा सति **श्रुतेन** वाक्येन सम्बध्येत। प्राचीनमग्नीषोमीयादिति हि श्रुतमिति। तस्मात् प्राचीनपदस्य श्रुतेनाग्नीषोमीयेन सम्बन्धात्तत्प्राग्भाविपदार्थ-धर्मोऽयमिति श्रुत्येत्युच्यते। **श्रुतेन** च वाक्येन **सम्बध्यमानोऽयं** धर्मो**ऽग्नीषो-मीयाद्ये प्राग्भाविनः पदार्थास्तैः** सम्बध्यत इत्यन्वयः। तत्रापि न केवला-रादुपकारकैः, किन्तु सन्निपातिभिः सोमप्रवहणीयसूक्तादिभिरारादुपकारकैश्च प्रायणी-यादिभिः सर्वै**र्गृह्यमाणविशेषत्वात् सम्बध्यते**। तदनेनैतत् प्रदर्शितम्—अविशेषादेव सोमप्रवहणीयस्यापि सिद्ध एवेति न विशेषतः प्रतिपादयितव्यः, सिद्धसाधनदोषापत्तेः। अतः "तस्य च तत्र भावात्" इति सूत्रावयवो न यथाभाष्यं व्याख्येय इति। नह्यारादुपकारकाणमेव प्रयोजकत्वं न सन्निपातिनामवघातादि-वदिति शङ्कितुं शक्यम्। सन्निपातिन्येव हि दीक्षणीया वाङ्नियमस्य प्रयोजिके-त्युक्तम्। अदृष्टार्थता हि प्रयोजकत्वे निमित्तं न त्वारादुपकारकत्वम्। अवघातस्तु दृष्टार्थत्वात् प्रोक्षणस्याप्रयोजको न सन्निपातित्वात्। तस्मान्नायमर्थः सूत्रावयवस्य।

कस्तर्हीत्याह—**तस्य च तत्र भावादिति सूत्रावयवेनापूर्ववन्तस्ते**[1] **पदार्था इति ब्रवीति**। एतदुक्तं भवति—**यस्तेषु धर्मो विधीयते नासावनर्थकः। यथा दीक्षणीयावाङ्नियमः पदार्थप्रयुक्त इत्युक्तम्, एवमिहाप्य-** पूर्ववत्त्वात् पदार्थानां तत्प्रयुक्त एवायं धर्मः। नन्ववान्तरापूर्वमपि सिद्धमेवेति तत्प्रतिपादनमपि व्यर्थम्। नैव तत्प्रतिपाद्यते, पदार्थप्रयुक्तत्वे तु हेतुत्वेनोच्यते, हेतोश्च प्रसिद्धिर्गुण एव न दोषः। प्रतिज्ञा तु सिद्धगोचरा दुष्यतीति वैषम्यम्। **श्रुतिनिर्देशादिति** सूत्रपदमपि पूर्ववदेव **श्रुतेन वाक्येन सम्बन्धमभिप्रेत्य** श्रुतिमाह। **अथवा पदार्थापूर्वेण सम्बध्यमानो लक्षणया** सम्बध्यते। **परमापूर्वेण तु** सम्बन्धे **प्रथमं** तावत् **पदार्थाः, तैः स्वापूर्वाणि, तैरपि** परमापूर्वं लक्षयितव्यम्। **एवं लक्षितलक्षणामभिप्रेत्य लक्षणां श्रुतिमाह। अथवा-ग्नीषोमीय इति पदार्थः** श्रुतः। **स चोच्चारितः प्राग्भाविनः पदार्थान् बुद्धावुपस्थापयति न यज्ञभागम्। तदभिप्रेत्य श्रुतिमाह**—श्रुतिनिर्देशादग्नी-षोमीयस्येत्यर्थः॥ २०॥

## यज्ञस्य वा तत्संयोगात्॥ २१॥ पू०

पूर्वपक्षोऽभिधीयते। **न यज्ञशब्दोऽ**नन्तरेणापि **त्सरुशब्देन सम्बध्यते, अप्रवृत्तिविशेषकरत्वात्। यस्माद्** व्यवहितेनापि **प्राचीनशब्देन सम्बध्य-मानः प्रवृत्तिविशेषकरो भवति, तेन यज्ञस्य यः प्राग्भागस्तस्यायं धर्म उपांशुत्वं विधीयते**। यज्ञस्येति हीदानीमवयवव्यतिरेकजनिता षष्ठी। तेन प्राचीनशब्देन यज्ञावयवोऽभिधीयते न पदार्थाः। किञ्च, **न च प्राचीनशब्दः पदार्थान् शक्नोति** वक्तुम्। **श्रुत्या** हि **भागवचन एव प्रतीयते**। तथा **ह्यक्षरोच्चारणमात्रेणैव प्रग्भागमाह, इतरत्र** पक्षे **लक्षणया**। कतरत्र पक्षे ? तं दर्शयति—**पदार्थान् यदि लक्षयेत्**। नहि प्राचीनशब्दः पदार्थान् स्वरूपेण वक्ति, किन्तु प्राग्देशविशेषितान्। अतश्चाकृतिन्यायेन देशे श्रुतिः। पदार्थेषु तु लक्षणेति। **अत्र ग्रन्थः—अथाप्यर्थवादपदस्य** त्सरुशब्दस्य **शेषो यज्ञस्येति**

---

१. ये इति—पू० मु०।

**स्यात्, तथापि प्राग्देशः श्रुत्या धर्मेण सम्बध्यते**, पदार्थास्तु लक्षणयेति। तस्य **कोऽर्थः?** उत्तरम्—**प्राचीनशब्दमुद्दिश्योपांशुत्वं विधीयते। तत्र यद्यग्नीषोमीयशब्देन विशेष्येत प्राचीनशब्दः, ततो वाक्यं भिद्येत। तस्मान्न विशेष्यते।** यदि चाग्नीषोमीयेन विशेष्येत, ततस्तस्यानवयवित्वाद् अवधिमात्रत्वेनावस्थानात् प्राचीनशब्देन नावयवोऽभिधीयते। प्रथमपदार्था एव त्वभिधीयेरन्। न तु तेन विशेष्यते। ननु यदि तेन न विशेष्यते, **कस्य तर्हि प्राग्भागः?** सर्वथा हि येन केनचिदसौ विशेषयितव्यः, सापेक्षत्वात्। उत्तरम्—**विपरिवृत्तेर्ज्योतिष्टोमस्येति।** तेन यद्यप्यस्मिन् वाक्येऽर्थवादशेषो यज्ञशब्दः, तथापि प्राचीनशब्दः प्रकरणलब्धज्योतिष्टोमावयववाचीति भागधर्मोऽयम्॥ २१॥

अत्रानन्तरं सूत्रद्वयम्। तस्य तावदेकं व्याख्यानमाह—

**प्रणीतादि तथेति चेत्॥ २३॥** इति प्रत्यनुभाषणसूत्रम्।

**न यज्ञस्याश्रुतित्वात्॥ २४॥** इति परिहारः।

[1]अत्रावान्तरापूर्वप्रयुक्तत्वे हि सिद्धान्तिनोपक्रमे प्रणीतावाग्यमो दृष्टान्तो दत्तः। सोऽनेनानुभाष्य परिहृत इति। व्याख्यान्तरमाह—**अथवा नासिद्धो दृष्टान्तो भवतीति दृष्टान्तसिद्धयेऽधिकरणं प्रक्रियते। प्रणीतादि तथेति चेदिति।** "प्रणीताः प्रणेष्यन् वाचं यच्छति, तां स हविष्कृता वाचं विसृजति" इति श्रुतो वाग्यमः परमापूर्वप्रयुक्तोऽवान्तरापूर्वप्रयुक्तो वेति चिन्तयितु[2] सूत्रद्वयेनाधिकरणान्तरमन्तरागर्भिणीन्यायेन प्रस्तूयते। प्रकृताधिकरणसिद्धान्त-दृष्टान्तसिद्ध्यर्थत्वात्तदीयपूर्वपक्षन्यायेन च पूर्वपक्षकरणादन्तरागर्भिणीत्वम्। तत्र पूर्वपक्षमाह—**यथा यज्ञेन संयोगादिति** हेतोः, **उपांशुत्वं परमापूर्वप्रयुक्तम्, एवमिहापि** "यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः। यदध्वर्युयजमानौ वाचं यच्छतस्तत् प्रजापतिभूयङ्गत्वा यज्ञं तन्वाते। तस्मात् प्रणीताः प्रणेष्यन् वाचं यच्छति" इति यज्ञसंयोगान्न **पदार्थप्रयुक्तो वाग्यम इति।** भाष्ये तु[2] **नन्विदानीमेवोक्तमिति, स्थितादुत्तरमिति चैतस्माद् ग्रन्थादिदमनु-**

१. 'अत्र' नास्ति–ख०

२. हि–ख०

**मीयतेऽधिकरणान्तरम्।** नन्विदानीमेवेत्यादिना हि चोद्यपूर्वं प्रयत्नेनावान्तरापूर्वप्रयुक्तताप्रसाधनमधिकरणान्तरत्वे न समञ्जसं भवति। स्थितादुत्तरमित्यनेन च स्पष्टीकृतमेव त्वधिकरणान्तरत्वमिति। **'न यज्ञस्याश्रुतित्वात्' इति उत्तरपक्षे सूत्रं वर्णनीयम्।** नहि वाग्यमसम्बन्धी यज्ञः श्रूयते। अत्र भाष्यम्—नन्विदानीमेवोक्तमित्यादि। तस्यायमर्थः—इदानीमेव वाचं यच्छतीत्यस्यान्तरमेव यज्ञं तनिष्यन्तावित्युक्तं वेदे। अतः कथं यज्ञसयोगो नास्तीति। उच्यत इति तस्योत्तरं गतार्थम्। यज्ञं तनिष्यन्तावित्येवमुपक्रमं यद्वाक्यं प्रणीताः प्रणेष्यन् वाचं यच्छतीति तत्पूर्वमेवोक्तम्। अतः कथं यज्ञस्याश्रुतत्वमिति। तत उत्तरं गतार्थम्॥ २३-२४॥

## तद्देशानां वा संघातस्याचोदितत्वात्॥ २५॥ सि०

प्रस्तुताधिकरणसिद्धान्तोऽभिधीयते। **अत्र** भाष्यग्रन्थः**—नैवमभिसम्बन्धः क्रियते—यज्ञस्य यत्प्राचीनमिति। कथं तर्हि? त्सरा वा एषा यज्ञस्येति।** तस्य **कोऽर्थः?** उत्तरम्**—पदार्थप्रयुक्तोऽपि वाङ्नियमवदु**पांशुत्वधर्मो**ऽर्थवान् भवति,** तेषामपूर्वत्वात्। तथा **परमापूर्वप्रयुक्तोऽप्यर्थवान्। तत्र यदि पदार्थापूर्वप्रयुक्तोऽनर्थको भवति,** ततोऽर्थवत्त्वाय **व्यवहितकल्पना** स्यात्। तस्मादित्यनेन व्यवहितोऽपि यज्ञशब्दः प्राक्शब्देन सम्बध्येत। **अध्याहारो वा** यज्ञस्येत्यश्रुतो**ऽपि कल्प्येत। इह** त्वध्याहारव्यवहितकल्पनाभ्यामृतेऽपि **यथाश्रुत एव वाक्ये घटमाने किमर्थं व्यवहितकल्पनाध्याहारो वा**श्रीयते? **अपि च, प्राचीनशब्दे, यज्ञशब्देन विशेष्यमाणेऽपि यद्यग्नीषोमीयपदमविवक्षितं** स्यात्**, तथा सति साकाङ्क्षत्वाद् वाक्यमेव न घटते, कतरस्मात् पदार्थात् प्रागिति** सापेक्षत्वात् प्राक्शब्दस्य। **तस्मादग्नीषोमीयशब्दोऽवश्यं विवक्षणीयो** भवतापि। **तस्माद् द्वयोरपि** पक्षयो**रग्नीषोमीयशब्दस्तन्त्रं** विवक्षितः। **तेन** यस्मात् **सुदूरमपि गत्वा प्राचीनशब्दस्याग्नीषोमीय**शब्देन **सम्बन्ध** एषितव्यः**,** तस्मादादावेव प्राचीनशब्देनाग्नीषोमीयशब्दः सम्बन्धनीयः। **तेन सम्बन्धे च कृते पदार्थधर्मो भवतीत्यादावेवोक्तम्।** अत्र भाष्यग्रन्थः—अथापि प्राचीनेन यज्ञस्य सम्बन्धः

स्यात्, नैवमपि परमापूर्वप्रयुक्तता। नहि यत्किञ्चिदित्यनेन देशोऽभिसम्बध्यते। किं तर्हि? तद्देशगताः पदार्थाः। **यदि हि देशोऽभिसम्बध्येत यत्प्राचीनमग्नीषोमीयादिति भवेत्, न यत्किञ्चिदिति।** तस्य **कोऽर्थः**[1]? उत्तरम्[2]—**यस्य**[3] मतेऽयं **धर्मः परमापूर्वप्रयुक्तस्तस्य प्रदेशो नामैकं वस्तु।** तत्र **भवता किञ्चिच्छब्दोऽनुवादो वर्णयितव्यः, उत्स्रष्टव्यो वा। तत्रानुवादस्तावन्न घटते।** कथम्? **वीप्सार्थे किञ्चिदिति** शब्दो **वर्तते। न चैकस्मिन्नेव वस्तुनि वीप्सा सम्भवति?** तस्मान्नानुवादः। **उत्सर्गोऽपि नैव** सम्भवति। कुतः? **गम्यमानत्वादस्मिन्** पदेऽ**र्थस्य।** पदवेलायां गम्यमानोऽपि वाक्यवेलायामुत्सृज्यत इति चेत्, तत्राह—**वाक्ये च** श्रुतोऽ**यमर्थो विवक्षित** एव, अविवक्षाकरणाभावात्। **तस्मादयं वीप्सावाची सन्न**वश्यं **विवक्षितव्यः।** ततः किमित्याह—**पदार्थधर्मे चाभ्युपगम्यमाने बहुत्वात् पदार्थानां किञ्चिदिति शब्दस्यार्थोऽनुगृहीतो भवति,** भागधर्मत्वे तु बाध्येत। **ननु नायं वीप्सावाची। उच्यते, किञ्चिच्छब्दोऽयमज्ञाते ज्ञातुमिष्टे वर्तते। देशश्च ज्ञात एव, प्राचीनशब्दस्य** तद्वाचिनः **श्रवणात्।** तत्राज्ञातवचनः **किञ्चिच्छब्दोऽनुपपन्नः** स्यात्। मत्पक्षे तूपपन्न इत्याह—तद्देशगताः पदार्थ**विशेषास्त्वज्ञाता** विशेषशब्दस्येहाश्रवणात्। अतस्तेषु प्राचीनशब्दात् सामान्येन ज्ञातेष्वपि विशेषरूपेणाज्ञाते**षूपपद्यते** किञ्चिच्छब्दः। **तस्माद्वीप्साफलोऽयमस्मिन् वाक्ये वर्तते।** अतश्च तस्य मुख्यत्वात् तदनुसारेण प्राचीनशब्दस्य जघन्यस्य वर्णनात् सोऽपि पदार्थपरः। तस्मात् पदार्थधर्मोऽयम्। इदानीं प्रसङ्गात् स्वरान्तराणामस्य च समावेशं निरूपयितुमाह—**दीक्षणीयाया याजुर्वैदिकत्वाद्** उपांशु यजुषेति नानावेदस्वरः **साङ्गाया उपांशुत्वं प्राप्नोति। तच्चोदकेन बाध्यते।** कथम्, **"प्राक्स्विष्टकृतः प्रथमस्थानेन मध्यमेनेडायाः शेषं तृतीयस्थानेन" इत्येतत् स्वरवैचित्र्यं चोदकप्राप्तम्। तच्चोद**काश्रय-

१. 'कोऽर्थः' इति स्थाने मते—ख०।

२. 'उत्तरम्' नास्ति—ख०।

३. 'यस्य' नास्ति—ख०।

त्वात् प्रयोगवचनाश्रयाद् नानावेदस्वराद् बलवत्। तदपि यत्किञ्चित् प्राचीनम**ग्नीषोमीयादित्यनेन** वाचनिको**पांशुत्वेन बाध्येत,** ततश्च पुनरपि दीक्षणीयादीनां साङ्गानामुपांशुत्वमेव प्राप्तम्। ततो **यावत्या वाचा कामयीत इत्येतेन दीक्षणीयाशब्दवाच्ये वाङ्नियमो विधीयते। स** च **दीक्षणीयाशब्दः प्रधानमात्रे वर्तते नाङ्गेषु।** तेन **प्रधानेषु यावत्या वाचेति** स्वरः। तदङ्गेषु तूपांशुत्वमिति। चोदयति—**ननु यत्किञ्चिच्छब्देनापि** प्रकृता **विशेषा उच्यन्ते। दीक्षणीयादिभिरपि** शब्दै**र्विशेषा एव। तत्र द्वयोर्विशेषवाचिनोर्नास्ति बाध्यबाधकभावः। तस्माद्दीक्षणीयादिषु प्रधानेषु विकल्पः प्राप्नोति।** परिहरति—**उच्यते। दीक्षणीयादिभिः** शब्दै**र्वर्णोपात्तमेव प्रधानम्।** तत्र हि वर्णश्रवणादेवान्यनिरपेक्षं दीक्षणीयादि प्रधानं प्रतीयते। **यत्किञ्चिच्छब्देन** तु **न वर्णोपात्तः** कश्चित् पदार्थः। नहि तत्र वर्णश्रवणमात्रात् कश्चिदपि पदार्थविशेषः प्रतीयते। किन्तु प्रकरणालोचनसव्यपेक्षः। ततः किमित्याह—**बाधे च** निरोधा[ विरोधा ]दवश्यंभाविनि **वर्णोपात्तेन** निरपेक्षेणा**वर्णोपात्तः** सापेक्षो **बाध्यते।** सावकाशं चोपांशुत्वम्। अङ्गेषु तु निरवकाशं यावत्या [1]वाचेत्यादि। तस्मादपि प्रबलम्। नन्वेवं प्रवर्ग्येऽप्यङ्गेषूपांशुत्वं स्यात्, उच्चैस्त्वं तु प्रधानमात्रेऽत आह—**उच्चैः प्रवर्ग्येणेति करणविभक्तिनिर्देशात् साङ्गस्यैवोच्चैस्त्वम्।** दीक्षणीयादिषु तु करणविभक्तिनिर्देशाभावात् प्रधानमात्रधर्मतेति विशेषः। ननु यत्किञ्चित्प्राचीनमग्नीषोमीयादित्यनेनैव सिद्धत्वात् 'उपांशूपसत्सु' इति वचनमनर्थकमत आह—**उपांशूपसत्स्वित्यौचित्येन** दीक्षणीयादिस्वरप्रशंसार्थो **नित्यानुवादः।** भाष्यकारीयं प्रयोजनमाक्षिपति—**यदेत**द्वक्ष्यमाणं **प्रयोजनं वर्णितम्, तद्देशप्रयुक्तत्वे** सत्युपांशुत्वस्य **मासाग्निहोत्रादिषु प्राप्तिरिति, तन्न।** कुतः? **तेषां** कौण्डपायिनामयनाग्निहोत्रादीनां नैयमिकाग्निहोत्रादिभ्यो **नाम्नाऽन्यः स्वरः प्राप्नोति।** इदं **चोदकेनोपांशुत्वम्। चोदकाच्च नामधेयं बलवत्। तस्मादन्यत् प्रयोजनं** वाच्यम्। तदेव

---

१. 'वाचा' नास्ति–ख०।

दर्शयति—**अनामसंयुक्तमेवंविधमेव**[क्ते एवंविधमेव] प्रयोजनम्। यथा राजसूये **"पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेणोपरिष्टाद्वैष्णवेन"** **इति**। पूर्वपक्षे सौम्यादिष्वप्युपांशुत्वं स्यात्, सिद्धान्ते नेति ॥ २५ ॥

[७—प्रोक्षणादेरिष्टकासु सकृदनुष्ठानाधिकरणम्]

## अग्निधर्मः प्रतीष्टकं संघातात् पौर्णमासीवत् ॥२६॥ पू०

प्रासङ्गिकमधिकरणमिदम्। पूर्वाधिकरणे ग्रहयज्यभ्याससमुदायात्मकज्योतिष्टोम-प्रयुक्तमुपांशुत्वं पदार्थप्रयुक्तं वेति विचारिते समुदायप्रसङ्गाद्धिरण्यशकलप्रोक्षणादि समुदायप्रयुक्तमवयविप्रयुक्तं वेति चिन्त्यते। पूर्वपक्षमाह—**प्रतीष्टकं प्रोक्षणादि कर्तव्यम्। कुतः—इष्टकाव्यतिरिक्तस्यावयविनोऽभावात्।** कथम्? **यत्र व्यतिरिक्तोऽवयव्यस्ति, तत्रैकावयवाकर्षणे कृत्स्नोऽवयव्याकृष्यते,** यथा हस्त आकृष्यमाणे कृत्स्नो देवदत्त आकृष्यते। इह त्वेकेष्टकाकर्षणेऽपि न द्वितीयाकृष्यते। आकर्षणमेव ह्यवयविसद्भावे प्रमाणम्। तच्च दर्शितं भाष्ये। तदभावे कथं तत्सिद्धिः। तस्मादवयव्यभावादग्निशब्द इष्टकासमुदायवचनः। समुदायश्चामूर्तो न शक्यते प्रोक्षितु-मिति, तल्लक्षितानामिष्टकानां प्रोक्षणं विधीयत इति प्रतीष्टकं कर्तव्यमिति ॥ २६ ॥

## अग्नेर्वा स्याद् द्रव्यैकत्वादितरासां तदर्थत्वात् ॥२७॥ सि०

"इष्टकाभिरग्निं चिनुते" इति शब्दतस्तावदिष्टकानां तृतीयान्तानां पारार्थ्येना-वगतत्वात् तदर्थं प्रोक्षणं न भवति, "गुणानां च परार्थत्वात्" इति न्यायात्। किन्तु द्वितीयासंयोगादग्न्यर्थं प्रोक्षणम्। अग्निशब्दश्च ज्वलनवचनोऽपि प्रोक्षणादिवाक्येषु तदाधारभूते स्थले लक्षणया वर्तत इति वेदितव्यम्। नन्वग्निशब्देन समुदायोऽभिधीयतेऽ-वयव्यभावादित्युक्तम्। उच्यते। प्रत्यक्षेणेष्टकाव्यतिरिक्तोऽवयव्युपलभ्यते। न च काला-न्तरे पुरुषान्तरेऽवस्थान्तरे वाऽविपर्यासाद् भ्रान्तिरिति शक्यते कल्पयितुम्। अथे-ष्टकाः पृथक्कृत्यानुपलम्भान्न तद्व्यतिरिक्तोऽवयव्यस्ति। अव्यतिरेके तु तन्मात्रापातः। व्यतिरिक्ताव्यतिरिक्तत्वं तु विप्रतिषेधान्न सम्भवति। तस्मान्नाग्न्यवयवी [नाग्निरवयवी] विद्यत इत्युच्यते, तथा सतीष्टकानामप्यपह्नवः स्यादित्याह—अपि चात्मीयानेवाव-यवानपेक्ष्य इष्टकाप्यवयविनी भवत्येव। तेन तद्वदग्निरप्यभ्युपगम्यतामिति।

आशङ्कां विवृणोति—**अथोच्येतेष्टका अपनीय सन्निदर्श्यतां यदि व्यतिरिक्तोऽस्ति।** न च स निदर्श्यते। तस्मादिष्टका एव परमार्थतः सन्तीति। परिहरति—एवं वर्ण्यमाने भवताप्यात्मीयावयव्यतिरिक्तेष्टका निदर्शयितव्या। न च भवतापि सा शक्यते निदर्शयितुम्। अपि चेष्टकानामवयवान्तरम्, एवं तेषामप्यवयवान्तराणामन्येऽवयवास्तेषामप्यन्ये। तेनानेन क्रमेणापरमाणुभ्यो गमनात् परमाणुषु प्रोक्षणमवतिष्ठते। न च ते शक्याः प्रोक्षितुम्। तस्मात् **पूर्वपक्षवादिनः प्रोक्षणमेवानर्थकं स्यात्।** **अथावयवव्यतिरिक्तेष्टकेष्यते** दर्शनबलात्, सर्वतर्काभासानां संविदैव भगवत्या निराकरणात्, तथा **सत्यग्निरपीष्यतां** बुध्यविशेषाभावात्। **यत्तूक्तमेकेष्टकाकर्षणे न कृत्स्नः कृष्यत इति, तदुच्यते। यत्र यत्र द्रव्यान्तरबुद्धिर्भवति तत्र तत्र द्रव्यान्तरम्। नतु**[1] **यत्रैकस्मिन्नवयवे कृष्यमाणे कृत्स्नोऽवयवी कृष्यते।** बुद्धिरेवात्र प्रमाणम्, नाकर्षणमित्यर्थः। कथं तर्हि क्वचिदाकर्षणं क्वचिन्नेति वैचित्र्यम्? यदि तथा दृश्यते किं क्रियताम्। तदाह—[2]यत्र कृत्स्नः कृष्यते **तत्रापि तथा दृष्टम्। यत्र त्वेकस्मिन् कृष्यमाणे** स **एवैकः कृष्यते** न तु कृत्स्नः, **तत्रापि तथा दृष्टम्।** [3]न त्वेताव[ तावताव ]यव्यपलापः शक्यते कर्तुम्। अप्रयोजकत्वादाकर्षणस्येत्याह—**न चैकस्मिन् कृष्यमाणे यस्मात् कृत्स्नः कृष्यते, तस्माद् द्रव्यान्तरम्।** आकर्षणमवयविद्रव्यस्य न कारणमित्यर्थः। कुत इत्याह—**न च द्वितीये कृष्यमाणे**ऽवयवाख्यं **द्रव्यान्तरमवयवाख्यस्य** [ अवयव्याख्यस्य ] **द्रव्यान्तरस्य कारणम्**, किन्तु **यत्र द्रव्यान्तरबुद्धिर्न विपर्येति,** तत्र सर्वत्रावयवैरवयव्यारभ्यत इति ॥ २७ ॥

---

1. 'न तु' इत्येतत् यद्यपि पूनामुद्रिते मूले न दृश्यते, तथापि क ख संज्ञितयोः कोशयोरुपलम्भाद् मूलस्थमेव तदित्यभ्यूह्य तथैव निवेशितम्।

2. 'तत्र तथा दृष्टम्' इति मूलम्। अत्र तत्रेति सर्वनाम्नः सापेक्षत्वाद् यत्रेत्यादीनि पदानि पूरयित्वा व्याचष्टे—यत्रेत्यादि।

3. 'न चैकस्मिन् कृष्यमाणे' इति मूलं भावविवरणपूर्वकमवतारयति—न त्वेतावतेत्यादिना।

[ ८—द्वादशाहे उत्तमाहवर्जं पत्नीसंयाजान्तत्वाधिकरणम् ]

## पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥२९॥ पू०

समुदायप्रसङ्गादिह समुदायात्मकद्वादशाहान्तर्भूता पत्नीसंयाजान्तता चिन्त्यते, कथं स्यादिति । यद्वोपोद्घातोऽयमूहस्य । द्विरात्रे द्वादशाहिकं पाष्ठिकमाद्यमहर्द्वयं प्रवर्तते । तत्र पूर्वपक्षे द्वितीयमहः प्रकृतिवत् पत्नीसंयाजान्तं कर्तव्यम् । सिद्धान्ते प्रकृतावनन्त्यत्वेन पत्नीसंयाजान्तमनुष्ठितमपि द्वितीयमहरिहान्त्यत्वात् साकल्येन क्रियत इति प्रयोगविकार ऊहो भवतीति । पूर्वपक्षमाह—**"पत्नीसंयाजान्तान्यहानि[1] सन्तिष्ठन्ते" इत्यविशेषश्रवणात् सर्वेषां पत्नीसंयाजान्तता । ननु गम्यते विशेषः "असंस्थितो हि तर्हि यज्ञः" इति । यत्रासंस्था, तत्र पत्नीसंयाजान्तता । अन्त्ये चाहनि सन्तिष्ठते ।** तेन **तत्रा**संस्थाभावात् **पत्नीसंयाजान्तता न भवति, हेतुसामर्थ्यात् । असंस्थितता हि** पत्नीसंयाजान्ततायाः हेतुः । असति हेतौ कथं स्यात् । **नैतदेवम् । वचनात् सर्वेषां पत्नीसंयाजान्तता प्राप्यमाणा वचनान्तरेण विना कथं शक्या विशेषेऽवस्थापयितुम् । यदुक्तं हेतुसामर्थ्याद् यत्रासंस्था तत्र पत्नीसंयाजान्ततेति । उच्यते—हेतुवचनं** न हेत्वर्थम्, किन्तु **पत्नीसंयाजान्तता स्तुत्यर्थं भविष्यति ।** ननु स्तुतिरपि निरालम्बना स्यात् [न स्यात्] अन्त्येऽहनि । तेन स्तुतिवशादेवान्त्यवर्जं भविष्यतीत्यत आह—**चिरेण संस्थामालोच्यासंस्थित इति स्तुतिः ।** यो हि चिरेण सन्तिष्ठते, सोऽसंस्थित एव भवति । तदयमर्थः—चिरेण ह्यसौ यज्ञः सन्तिष्ठते दीर्घत्वात् । तस्माल्लाघवार्थं पत्नीसंयाजान्तं कृत्वा शिष्टं लुप्यतामिति । तेनोत्तममहः पत्नीसंयाजान्तं कृत्वाऽवभृथादीन्येव कर्तव्यानि, न तु हारियोजनपर्यन्तमहःशेषं कर्तव्यमिति ॥ २९ ॥

## स्याद्वाऽनारभ्य विधानादन्त्ये लिङ्गविरोधात् ॥ ३२ ॥

**भावयेत् प्रजाः । केन ? द्वादशाहसंज्ञकेन** कर्मणा । **तत्र "संख्यया कर्मभेदः" इत्यनेन न्यायेन द्वादश यागा एते ।** नन्वहःसंख्येयं न याग-

1. **'पत्नीसंयाजान्तानि' इत्यारभ्य 'असंस्थितता हि' इत्यन्तं मूलस्थमेव वचनजातम् । तच्च खपुस्तके नास्ति ।**

संख्या। अत आह—**अहःशब्दो** याजयेदिति **यागसामानाधिकरण्याद्** यागमेवाहःसम्बन्धादहरिति **ब्रवीति। प्रकृतौ च** ज्योतिष्टोमेऽहःशब्देनोपांश्वादि-**हारियोजनपर्यन्तो यागः परिच्छिन्नः। इहापि** द्वादशाह **एवं द्रष्टव्यम्। तत्र द्वादश यागाः सह** [1]**फले चोदितत्वात् सहैव कर्तव्याः।** [2]**तेषाम-**[तेषामा]**ग्नीषोमीयाद्येतिकर्तव्यता,** अभिविधावाकारः, अग्नीषोमीयपर्यन्तायाः [ पर्यन्ता या ] पुरस्तात्तदितिकर्तव्यता, **साऽगृह्यमाणविशेषत्वात्** [3]**तन्त्रेण कर्तव्या। अवभृथादीन्यप्यु**परितनान्यङ्गानि **तन्त्रेणैव** कर्तव्यानि। ये तु मध्यस्थाः **सन्निपत्योपकारकाः** पदार्थाः ग्रहयज्याभ्यासादयः, तन्मध्यपातिनश्चारादुपकारकाः सवनीयादयस्त **आवर्तन्ते।** तत्र **सहप्रयोगवचनात्** स्थित्वा द्वितीयादिष्वहस्सु प्रवर्तितव्यम्। यस्मिन् कस्मिंश्चि**दनियमेनावस्थाने प्राप्ते पत्नीसंजायान्तता नियम्यते** चोदकाबाधात्। लोपविधौ चोदकबाधश्च स्यात्। **तत्रान्त्ये उत्तरस्य यागस्य** कर्तव्यस्या**भावादवस्थानं नास्त्येवानियमेन। अनियमस्याभावा-त्तद**पेक्षः पत्नीसंयाजान्तत्व**नियमोऽपि नास्ति।** अथ तत्रापूर्वमेव पत्नीसंयाजा-न्तत्वं विधीयते, मा भून्नियम इत्युच्यते, अत आह—**न चैतदेव वाक्यं क्वचि-न्नियमपरं क्वचिदपूर्वविधिपरं** भवितुमर्हति, विवक्षाभेदात्। **अपि च यस्य नियमार्थं** वचनम्, **तस्य दृष्टोऽर्थः। यस्य त्ववलोपस्तस्यानाकाङ्क्षित-त्वाद् अदृष्टोऽर्थः** कल्प्यः स्यात्, **तस्मात् प्रागुत्तमात् पत्नीसंयाजान्तता नियम्यते** ॥ ३२ ॥

[ ९—सामिधेन्यीषु त्रिरभ्यासस्य प्रथमोत्तमस्थानत्वाधिकरणम् ]

**अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् ॥ ३३॥ सि०**

स्त्रीलिङ्गसम्बन्धात्तस्य चर्ग्धर्मत्वादृगुपलक्षणार्थं प्राथम्यं न स्वयं त्रिरभ्या-सेन सम्बध्यते। प्राथम्यं च प्रवोवाजाया धर्मः। तेन तां लक्षयित्वा

---

1. **फलेन—पू० मु०।**
2. **तेनाग्नीषोमीयात्—पू० मु०।**
3. **तन्त्रेणेतिकर्तव्यता—क० ख०।**

तस्यास्त्रिरभ्यासस्तत्कार्यौपयिकतया विधीयते । तेन प्रवोवाजाकार्यप्रयुक्तोऽयं त्रिरभ्यासः, न प्रथमवचनकार्यप्रयुक्तः । किञ्च, यदि प्रथमवचनधर्मोऽयं स्यात्, ततो वर्णपदादिसम्बन्धोऽपि स्यात्, तच्चानिष्टम्; तथा सति स्त्रीलिङ्गस्यानुवादत्वेनाप्यसम्भवाद् अत्यन्तानर्थक्यं स्यात् । तस्माद्यत्रतत्रस्था प्रवोवाजा त्रिभिर[त्रिर]भ्यसितव्येति । अत्राभिधीयते—न तावत् प्रथमाशब्दः कस्याश्चिदृचो वाचकः, यतस्तत्प्रयुक्तस्त्रिरभ्यास ऋग्धर्मः स्यात् । प्राथम्यवचनो ह्यसौ । तत्र मुख्यं प्राथम्यमुल्लङ्घ्य न युक्तम्, यत्तल्लक्षितं गृह्यते । स्त्रीलिङ्गं त्वाश्रयधर्मोऽनूद्यते । गुणवचनो हि प्रथमाशब्दः । स च[1] गुण ऋगाश्रितः । सा च स्त्रीति नित्यानुवादः स्त्रीलिङ्गशब्दः । यत्तु पदवर्णादिधर्मतयापि सम्भवान्नानुवादो घटत इत्युक्तम्, तत्रोच्यते—कार्यार्थमनुवचनम्, त्रिरभ्यासोऽपि कार्यार्थतयैव विधीयते । वाक्यानुवचनं च कार्याय पर्याप्नोति, न पदवर्णादिमात्रानुवचनम् । वाक्यं चात्रर्गेवेति तदाश्रयं स्त्रीलिङ्गं नित्यानुवादो युज्यते । तस्मात् प्राथम्यप्रयुक्तोऽयमभ्यास इति ॥ ३३ ॥

[ १०—दर्शपूर्णमासयोरन्वारम्भणीयायाः सकृदनुष्ठानाधिकरणम् ]

## इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया ॥ ३४ ॥ पू०

यावज्जीविके प्रयोगेऽकरणनिमित्तप्रत्यवायपरिहारमात्रं प्रयोजनम्, न तु किञ्चित् फलं भाव्यमस्ति । नाप्यपूर्वम् । भाव्यप्रयुक्ता चेतिकर्तव्यता । अतः कथमितिकर्तव्यताङ्गीकरणेनारम्भणीयाया आवृत्त्यभिधानम्, प्रयाजवदिति च दृष्टान्तदानम्? अत आह—**अपि वाप्येकदेशे स्यादिति** सर्वशक्त्यधिकरणेऽस्माभिर्या**वज्जीविकेऽपि प्रयोग इतिकर्तव्यता भवतीत्युक्तम्** । तत्र **प्रथमपदार्थद्वारेण श्रूयमाणा दर्शपूर्णमासाङ्गं** तावदा**रम्भणीये**त्यसंदिग्धम् । **सा** तु **किं** प्रयोगे प्रयोगे **कर्तव्या, उत सर्वप्रयोगाणां सकृदिति** चिन्त्यते । [2]किं तावद्युक्तम्? **प्रतिप्रयोगं**

---

१. 'च' नास्ति—क० ख० ।

२. किं प्राप्तम्—पू० मु० ।

**कर्तव्येति । कुतः ? इतिकर्तव्यता हि प्रयोगाङ्गम्** । यद्यपि विनियोगः कर्मार्थतया, तथापि यदा कर्मणा स्वकार्यं प्रति व्याप्रियते, तदेतिकर्तव्यतयोपकर्तव्यम् । व्यापृतिरेव च प्रयोगः । तेन प्रयोगाङ्गमितिकर्तव्यता । **प्रयोगस्य च भेद** आवृत्तिः । **तस्मात्** प्रधानवृत्तेरितिकर्तव्यतात्मिकारम्भणीयाप्यावर्ततेति ॥ ३४ ॥

**सकृद्वारम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥३५॥ सि०**

**सकृद्वा कर्तव्या । कुतः ? आधानं कृत्वा सर्वः सङ्कल्पयति यन्मया यावज्जीवं दर्शपूर्णमासौ कर्तव्यावागत आगते काल** इति । **स च सङ्कल्पः सर्वेषां प्रयोगाणामगृह्यमाणविशेषत्वात् साधारणः** । किमतो यत्साधारणः सङ्कल्पोऽत आह—**सङ्कल्पश्च पूर्वा**मौदासीन्यरूपा**मवस्थां बाधमानोऽध्यवसानम्** इदमहं कुर्वे इत्येवंविधं भवति । तथापि किमित्याह—**अध्यवसानं** चारम्भ**पदस्यार्थः** । तच्च **सर्वेषां साधारणमित्युक्तम् । तस्मात् सकृत्कर्तव्या** । पक्षान्तरमप्यत्र निगदव्याख्यातेन भाष्येणैव दर्शयति ।

**अत्र ग्रन्थः—अथापि प्रथमं प्रवर्तनमग्न्यन्वाधानमारम्भः, तथाप्यारम्भणीयाप्रवृत्तेन सर्वे प्रयोगाः कृता भवन्तीति** । एको ह्यग्न्यन्वाधानपदार्थः । तदर्थेन च सकृत्कृतारम्भणीया सर्वप्रयोगाणामुपकरिष्यतीति नावर्तनीयेति । एवं व्याख्याय पुनर्भाष्यकारेण व्याख्यानान्तरमारब्धम् । तत्पूर्वत्रापरितोषादिति दर्शयन् पूर्वव्याख्यानं दूषयति—**नैतद्युक्तम्, कथम्? कालो** नाम **निमित्तं** कर्मणः । तेन **स कर्म प्रयोजयति । प्राक् पौर्णमासीकालात् कर्म न प्रयुज्यते; निमित्ताभावात्** । ततः किमित्याह—**तच्च निमित्तमेकमेव प्रयोगं प्रयोजयति**, न प्रयोगान्तरम् । **पुरुषश्च पूर्वावस्थामौदासीन्यमुज्झित्वा तत** एव निमित्तात् **सङ्कल्पमध्यवसानं**[1] **करोति** । तथापि किमित्याह—तच्च निमित्तवशात् क्रियमाण**मध्यवसानं सङ्कल्पो वैकस्यैव प्रयोगस्य न द्वितीयादेः** ।

---

१. अध्यवसानं वा—क० ख० ।

कुतः ? **निमित्ताभावात्** । तेन सङ्कल्पस्य साधारणस्याभावात् प्रतिप्रयोगं भेदादारम्भणीयापि भिद्येतेति । यदप्युक्तम्—अथाप्यग्न्यन्वाधानमारम्भः, तथापि तस्यैकत्वात् सकृदारम्भणीयेति । तदप्ययुक्तमित्याह—**अपि चेतिकर्तव्यता प्रयोगेण प्रयुज्यते, न कर्मणा** कर्मस्वरूपेण । [1]**प्रयोगभेदाच्च भेदस्तस्याः** पुनः पुनः प्रयुज्यमानं ह्यग्न्यन्वाधानं स्वाङ्गमप्यारम्भणीयां पुनः पुनः प्रयोजयति । **यदि च कर्मणा प्रयुज्येत तथा सति कर्मैकत्वात् प्रयाजादीनामपि सकृदेव प्रयोगः स्यात्, न चैतदिष्टम्** । अथाद्यपदार्थानुष्ठानयोग्यत्वमारम्भणीयायाः कार्यम् । तच्च सकृदेव जातमिति प्रयोजनाभावान्न पुनः करणम् । नैवम्, यथोपदेशं हि कार्यम् । उपदेशाच्चाधिकारावृत्तेरारम्भणीयाप्यावर्तनीयेति गम्यत इति प्रत्यावृत्ति भिन्नैव योग्यता कल्प्या, एकत्वेऽपि चाद्यपदार्थस्य तदनुष्ठानानां भेदात्तद्योग्यताया अपि युक्त एव भेद इत्यावृत्तिः स्यादेव । **यदप्युक्तम्—आधानं कृत्वा सर्वः सङ्कल्पयति—पर्वणि पर्वणि मया दर्शपौर्णमासौ कर्तव्याविति । स च सङ्कल्पः सर्वप्रयोगाणामङ्गमगृह्यमाणविशेषत्वादिति । तत्रोच्यते—सर्वप्रयोगाणां सङ्कल्प एव न प्राप्नोति; निमित्ताभावादित्युक्तम् । नन्वाधानानन्तरं सर्वसाधारणः सङ्कल्पो** भवन्नापह्नोतुं शक्यतेऽत आह—**विद्वांश्चाधिक्रियते । स** चाधानानन्तरमेवं **जानाति**—केवलं **नित्यानि कर्माणि मया कर्तव्यानि, काम्यानि** च **फलार्थिनेति** । यदि फलार्थी भविष्यामि ततः काम्यानामपि कर्ता भविष्यामीति ज्ञानमात्रं तदा भवति, न तु तदैव सङ्कल्पयति । तेन **योऽसावस्य** [2]**पुरुषस्याधानादुत्तरकालं** सङ्कल्प इति त्वयोच्यते, **स सङ्कल्प इव न** तु परमार्थतः **प्रयोगाङ्गभूतः** सङ्कल्पः । ज्ञानमात्रं तु तत् । सर्वकर्मसाधारणत्वाच्च नायं दर्शपूर्णमासारम्भ इति शक्यते वक्तुम् । यदि चैवंविधं सङ्कल्पमङ्गीकृत्य आरम्भणीयायाः सकृदनुष्ठानमुच्येत, ततोऽस्य प्रकृतिविकृतिसाधारणत्वाद्विकृतिषु न पृथगारम्भणीया कर्तव्या स्यात् । तत्र द्वादशाधिकरण-

---

१. प्रयोगाभेदात्–पू० मु० ।

२. 'पुरुषस्य' नास्ति–क० ।

विरोधः । किञ्च, यद्यपि नित्याः प्रयोगा निश्चितत्वात्तदैव सङ्कल्प्येरन्, काम्यास्तु कामोत्पत्तेरनिश्चयान्न कथञ्चित् सङ्कल्पिता इति तेषु प्रतिप्रयोगं स्यात् । **तस्मादिदमशोभनं** व्याख्यानम् । **अतो** भाष्यकारेण व्याख्यान**मन्यत् क्रियते—दर्शपूर्णमासावारप्स्यमान इति शानजारम्भकर्तारमभिधत्ते । तत्र** संशयः—**किमारम्भशब्दो दर्शपूर्णमासाद्यं पदार्थमग्न्यन्**वाधानाख्य**मभिधत्ते**; ततश्च तदङ्गमारम्भणीया तदावृत्तावावर्तते; उत दर्शपूर्णमासयोर्यदप्रवृत्तपूर्वस्य पुरुषस्याद्यं **प्रवर्तनम्**, तदारम्भशब्दोऽभिधत्ते । ततश्च तत्कुर्वतः पुरुषस्य शानचाभिहितस्य संस्कारिका आरम्भणीया । तस्यैकत्वेनावृत्त्यभावान्न आवर्तत इति । **पूर्वपक्षवादी मन्यते—यद्यप्ययं कर्तारमभिद**ध्यात्, तथापि **फलकल्पनाभयादारम्भणीया न पुरुषार्था । किं तर्हि ? क्रत्वर्था** । क्रत्वार्था चेत् प्रयाजादिवत् **प्रतिप्रयोगमावर्तेत** । अथारम्भशब्देनाद्यः पदार्थ उच्यते । तेन तदङ्गमारम्भणीया । पुरुषवचनस्त्वनुवादः । तदङ्गं हि तत्कर्त्रा क्रियते नान्येनेति । पुरुषार्थत्वे फलं कल्पयितव्यं स्यादिति । **सिद्धान्तस्तु—दर्शपूर्णमासारम्भयोग्यं पुरुषं कुर्वती क्रतुना गृह्यते** । तेन पुरुषार्थत्वेऽपि दीक्षणीयावत् पुरुषसंस्कारद्वारेण क्रत्वर्थत्वान्न फलकल्पना । नन्वनारभ्याधीतेयम् । किमस्याः क्रत्वर्थत्वे प्रमाणम् । नेयमनारभ्याधीता । प्रकरणाधीतेयमिति भाष्यकारेणैवोक्तम् । अस्तु वानारभ्याधीता, तथापि क्रत्वर्था । किं प्रमाणम् ? वाक्यमिति ब्रूमः, यथैव हि पर्णमयीत्वादीनां क्रतुसाधनभूतजुह्वाद्युद्देशेन विधीयमानानां तद्द्वारेण क्रत्वर्थत्वम्, एवमारम्भणीयापि क्रत्वारम्भकर्तृभूतपुरुषोद्देशेन विधीयमाना तदारम्भयोग्यपुरुषकरणात् क्रत्वर्था । यस्त्वेवं न [1]मृष्यते, तस्यानर्थक्यमारम्भणीयायाः स्यात् । फलं वा कल्पेत । अथ स्वतन्त्र एव पुरुषोऽनया संस्क्रियते, न तु साधनभूतः । स तु संस्कृत उत्तरकालं क्रतुप्रयोगाङ्गं भविष्यति । अतो न क्रत्वर्थता । नापि फलकल्पनेति चेत्, न; प्रमाणाभावात् । नहि पुरुषस्वरूपसंस्कारत्वे प्रमाणमस्ति, आरप्स्यमानशब्देन कर्तृस्वरूपस्यैवोपादानात् । नापि संस्कृतस्य प्रयोगाङ्गत्वे प्रमाणमस्ति । न तावदेतद्वाक्यं तत्र प्रमाणम्, एतस्य पुरुषसंस्कारमात्रप्रतिपादनपर्यवसानात् । नाप्यन्यत्

---

१. मृष्यति-ख० ।

प्रमाणम्। आहवनीयादिशब्दास्तु संस्कृताग्निवचनाः संस्कृतानामग्नीनां क्रत्वर्थतां कुर्वते, न त्विहैवं किञ्चित् कारणमस्ति। अथासत्यपि कारणान्तरे संस्कृतस्य प्रयोगाङ्गता। तथा सति व्रीहीन् प्रोक्षतीत्यत्रापि व्रीहिस्वरूपार्थे प्रोक्षणं श्रुतिबलात्, पश्चात्तु संस्कृता व्रीहयः क्रत्वङ्गं स्युः। अथ ग्राहकवशात्तस्यापूर्वार्थता, तन्न; श्रुतिविरोधे ग्राहकस्याक्षमत्वात्। अन्यथा वाङ्नियमस्यापि ग्राहकेण परमापूर्वार्थता स्यात्। दीक्षणीयाशब्दश्च तत्साधनलक्षणः स्यात्। तस्मादिदमेव वाक्यमारम्भ-कर्तृसंस्कारद्वारेणारम्भणीयायाः क्रत्वर्थतां प्रतिपादयति। अथारप्स्यमान इति न संस्कार्यनिर्देशः, किन्तु नियोज्यनिर्देशः। ततश्च साधिकारत्वान्नास्या अङ्गत्वमिति उच्यते, तथा सति संस्कारकर्मता न स्यात्। नहि संस्कारेषु नियोज्यसम्भवः। किञ्चैवमपि साध्यारम्भविशिष्टं नियोज्यं स्वीकुर्वन् विधिरेव विषयस्य स्वर्गाद्यर्थत्व-मिवारम्भार्थत्वमाक्षिपति। किञ्चारप्स्यमान इति लृट् क्रियार्थायां क्रियायामुपपदे। तेन श्रुत्यैवारम्भाङ्गमारम्भणीया। न चारम्भस्वरूपार्थता सम्भवति, विनापि तयारम्भस्वरूपसिद्धेः। तेनारभ्यमाणापूर्वसाधनत्वेन रूपेणारम्भाङ्गमारम्भणीयाऽनेनैव वाक्येन प्रतिपाद्यते। तथा च सूत्रकारो वक्ष्यति—'नवाङ्गत्वात्' इति। भाष्य-कारोऽपि 'अङ्गभूता हि सा दर्शपूर्णमासयोः' इति वक्ष्यति। तस्मात् क्रत्वर्था। अथ न साध्यतयाधिकारिविशेषणमारम्भः, किन्तु निमित्ततया, तथापि निमित्तवतोऽ-धिकारिणः श्रुतत्वात् साधिकारनियोगविषयत्वादियं प्रधानभूतं कर्म दर्शादिवत् स्यान्न संस्कारकम्। पुनरपि च प्रतिप्रयोगं निमित्तभूतारम्भावृत्ते[1]रावृत्तिः स्यादिति न सिद्धान्तसिद्धिः स्यादित्यास्तां तावत्। नन्वेवं [2]प्रयाजादिवत् क्रत्वङ्गमेव भवतु। कुतः पुरुषार्थत्वम्? आरम्भसंयोगादिति ब्रूमः। न खल्वारम्भशब्दः कस्यचित् पदार्थस्य वाचकः, किन्तु यत्पुरुषस्याप्रवृत्तपूर्वस्याद्यं प्रवर्तनम् उपक्रमणा-परनामधेयं तस्यायं वाचको लोके प्रसिद्धः। तेन पुरुषप्रवृत्तिसंयोगा-देव तावत् पुरुषार्थता[3]। **अपि च यः शानचा पुरुष उपात्तस्तस्य**

---

१. आरम्भवृत्तेः—क०।

२. प्रयाजवत्—क०।

३. पुरुषार्था—क०।

**विपरिवर्तमानस्य निर्वपेदित्यनेनान्वारम्भणीया**[1] **श्रुत्या तदर्था प्रतिपाद्यते**[2]। श्रुत्येति च शानचा पुरुषस्य श्रुतत्वात्तत्समभिव्याहृतारम्भणीया वाक्येन तदङ्गं भवतीत्यर्थः। न तु श्रुतिविनियोगोऽयम्, आरप्स्यमानपदे तादर्थ्य-प्रतिपादकयोः षष्ठीचतुर्थीश्रुत्योरभावादिति। **इतरथा** यदि केवलं क्रत्वर्थारम्भ-णीया, तथा सति दर्शपूर्णमासावारप्स्यमान इति **शानजनर्थकः स्यात्**। कथम्? **निर्वपेदित्येतावतैवानुच्चारितेऽपि**[3] दर्शपूर्णमासावारप्स्यमान इति शब्देऽन्वार-**म्भणीया क्रत्वर्था भवत्येव**। कथमित्याह—**महाप्रयोगवचने** दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र **यो भावनावचनः, तेन विधानं** ग्रहणं **भविष्यति** प्रकरणात्। तेन पुरुषवचनोऽनर्थकः स्यात्। तस्मात् पुरुषार्था। तदिदमुक्तं भाष्य-कारेण—"इतरथा [4]कर्तृप्रयत्नवचनं दर्शपूर्णमासारम्भकर्तृसम्बन्धित्वेन प्रयत्नस्य वचन-मविवक्षितं स्यात्" इति। भवत्वेवं पुरुषसंस्कारिका। प्रकृते तु किमायातम्? अत आह—**सा च बहिःप्रयोगात् क्रियमाणा**[5] **पुरुषं** क्रत्वा**रम्भयोग्यं करोति**। दर्शपूर्णमासावारप्स्यमान इति क्रत्वारम्भाद्बहिष्ठेन श्रवणात्। **तस्य** चारम्भ-**स्यैकत्वान्न ज्ञायते—अस्यायं** पुरुषः **प्रयोगस्य योग्यो** भवत्यस्य **नेति, अगृह्यमाणविशेषत्वात् सर्वप्रयोगाणाम्**। **यदि च**[6] **तन्त्रमध्ये क्रियते, तथा सति यस्य** प्रयोगस्य **तन्त्रं तस्यैव योग्यं करोति** नान्यस्येति गम्येत विशेषः। न चैवमस्ति। यदि हि पदार्थवचनोऽयमारम्भशब्दः स्यात्, तथा सत्यन्तः-प्रयोगं क्रियेत। ततश्च सकृत्कृता न सर्वप्रयोगाणामुपकुर्यात्। पुरुषप्रयत्नवचन-स्त्वयमारम्भशब्दः। तेन दर्शपूर्णमासयोः प्रवृत्तौ भविष्यन्त्यां विहितेयं बहिःप्रयोगं

---

१. चान्वारम्भणीया—क०।

२. प्रतिपद्यते—क०।

३. उच्चारितेऽपि—ख०।

४. पुरुषप्रयत्न—पू० मु० भाष्यपाठः।

५. क्रियमाणं—क० ख०।

६. 'च' नास्ति—ख०।

विहिता भवतीत्यगृह्यमाणविशेषत्वात् सकृत्कृतैव सर्वेषामुपकरिष्यतीति नावर्तनीया। **ननु लृटः समानेऽहन्युत्पद्यमानत्वाद्यस्यैव समानेऽहनि प्रयोगस्यारम्भणीया क्रियते तस्यैव योग्यं पुरुषं करोति, न** प्रयोगान्तरस्येति **गृह्यते विशेषः।** **उच्यते**—तत्र भाष्यकारस्तावदिदं चोद्यं **द्वितीयादिष्वपि प्रयोगेषु समान एवाहनि दर्शपूर्णमासावारप्स्यमानोऽसौ कृतारम्भणीयाको जात इति योग्य एव भविष्यतीत्यनेन ग्रन्थेन निराकरोति। वयं त्वन्यथा** निराकुर्मः। **समानेऽहनि लृडुत्पद्यत इत्येतन्न क्षम्यते**[1]। **भविष्यत्कालसामान्येऽय**[2]**मुत्पद्यते।** भविष्यतीति च, क्रियायां क्रियार्थायामिति चानुवृत्तौ 'लृट् शेषे च' इति विधानात्। ननु लुटाऽनद्यतनभविष्यत्काले**त्पन्नेनायं** सामान्यविहितोऽनद्यतनविषये **बाध्यते।** अतोऽद्यतन एव भविष्यति। उच्यते—**नैतद्युक्तम्। यदि लुडनद्यतने विधीयमानो लृटं** सामान्यविहितम**बाधमान आत्मानं न लभते**[3] **ततो बाधेतापि। अयं पुनरबाधमानोऽप्यात्मानं लभत एव,** विषयभेदात्। सामान्यं हि लृटो विषयः। विशेषस्तु लुटः। तयोः समुच्चयसंभवान्न विरोधः। **तस्मान्न बाधते।** कस्तर्ह्यनयोर्विशेषोऽत आह—**तस्माल्लृडनद्यतनेऽद्यतने च भविष्यति काले भवति। लुट्प्रत्ययस्त्वनद्यतन एवेति** विशेषः, न तु लृडनद्यतन एवेति। यदि चाद्यतन एव लृट् स्यात्ततो भविष्यच्छब्दोऽपि लृडन्तत्वादद्यतन एव प्रयुज्येत। तत्र भविष्यत्यनद्यतन इति सामानाधिकरण्यं न स्यात्, विरोधात्। तस्मात् सामान्यवचनः। ननु "सोमेन यक्ष्यमाणोऽग्नीनादधीत" इत्यत्राद्यतनवचनो लृडिति कृत्वा सोमस्याधानानन्तर्यमुक्तम्, तदिहापि तथैव स्यात्, अत आह—**न च सोमेन यक्ष्यमाण इत्यनेनैतत्तुल्यम्।** [4]यत्र **ह्याधानं कृत्वा सोमेनान्यैश्च** क्रतुभिः पुरुषो **यक्ष्यते, तत्र सोमेन यक्ष्यमाणोऽग्नीनादधीतेति यद्येतद्वाक्य-**

---

१. युज्यते–पू० मु०।

२. लृट्–पू० मु०।

३. प्रतिलभते–पू० मु०।

४. तत्र–क० ख०।

**मानन्तर्यं न कुर्यात्, ततोऽनर्थकमेव स्यात्। तस्मादनेनानन्तर्यं विधीयते। तेन यद्यपि लट् सामान्येनोत्पन्नः**[1]**, तथापि सोमाधानानन्तर्यसामर्थ्याल्लक्षणयाद्यतने कल्प्यते प्रमाणान्तरवशात्, इह तु नास्ति प्रमाणम्, येनाद्यतने कल्प्येत। तस्मात् सामान्येनोत्पद्यते।** तेन समानेऽहनीत्यत्र प्रमाणाभावाद्बहिः प्रयोगं क्रियमाणारम्भणीया सकृत्कृतैवागृह्यमाणविशेषत्वात् सर्वप्रयोगाणामुपकरिष्यतीति नावर्तयितव्येति।

इदं त्विह वक्तव्यम्। यद्यप्यारप्स्यमान इति वचनादियं कृत्स्नात् प्रयोगात् प्रागेव कर्तव्या, तथाप्यङ्गत्वाद्यस्मिन् पर्वणि प्रधानं क्रियते तस्मिन्नेव कर्तव्या, प्रधानकालत्वादङ्गानाम्। ततश्च तत्कालस्यैव [1]प्रयोगस्योपकरोति, नान्येषाम्; विशेषश्रवणात्। तस्मात् प्रयोगान्तरेषु पुनः कर्तव्या। बहिःप्रयोगं क्रियमाणा च विकृतीनामप्युपकरोतीति तास्वपि न पुनः कर्तव्या स्यात्। तत्र स एव द्वादशाधिकरणविरोधः। तस्मादन्यथा वक्तव्यमिति मत्वाह—**अथवा दर्शपूर्णमासा**वारम्भणीयायां **निमित्तभूतौ श्रूयेते आरम्भसंयुक्तौ।** दर्शपूर्णमासारम्भोऽस्याः शेषताया[2] निमित्तमित्यर्थः। **तत्राङ्गित्वात् समानेऽहनि दर्शपूर्णमासा**वारम्भणीयासंयुक्तौ **कर्तव्यौ** प्रारब्धव्यौ। **एवमारम्भद्वारेणारम्भणीयां प्रथमः प्रयोगोऽपेक्षते। द्वितीयश्च** प्रयोग **एवमे**वारम्भद्वारेणैवापेक्षते, न तु स्वरूपेण। तदङ्गमारम्भणीया, येन तेष्वपि क्रियेत, आरम्भाङ्गत्वात्। **तत्र बहिः प्रयोगात् क्रियमाणायां योऽसौ दर्शपूर्णमासारम्भाद्यतनकालो** यस्मिन्नारम्भणीया कृता, **स सर्वेषु** प्रयोगेषु **विद्यते।** सर्वसाधारणोऽयमित्यर्थः। कथमित्याह—**किं दर्शपूर्णमासावारभमाणेनान्वारम्भणीया**द्यतने **न कृता, येन पुनः क्रियेत।** ननु प्रयोगान्तरस्याद्यतने न कृतेति तदर्थं पुनः कर्तव्या। अत आह—**न च प्रयोगोऽद्यतनेनापेक्षितः।** कुतः? **दर्शपूर्णमासशब्दश्रवणात्।** दर्शपूर्णमासारम्भाङ्गतया हीयं श्रूयते, न प्रयोगारम्भाङ्गतया। एष ह्यत्र वाक्यार्थः—

---

१. 'प्रयोगस्य' नास्ति–क०।

२. शेषितायाः–क०।

आरम्भणीयासंस्कृतेन पुरुषेणारब्धव्यौ दर्शपूर्णमासाविति । एवं चारब्धौ यावदायुषं प्रयुज्यमानौ पुरुषस्य फलं साधयतः । प्रथमप्रवृत्तिश्चारम्भः । स चैकस्यैव क्रतोरेक एव । न तु बहवः । प्रयोगारम्भास्तु भिद्यन्ते । न च तदङ्गमारम्भणीया, दर्शपूर्णमासशब्देन प्रयोगस्यानभिधानात् । **तस्मादारम्भैक्यात्** तद्द्वारेण सकृत्कृतैव सर्वप्रयोगाणामुपकरिष्यतीति **सकृत् कर्तव्या । एवं च** व्याख्यायमाने **काम्ये** दर्शपूर्णमासप्रयोगे **नैव** [1]**क्वचित् कर्तव्या, प्रयोगमात्रभेदात् कर्मणो भेदाभावात्**, अध्यवसानारम्भपक्षे ह्याधानानन्तरं पर्वणि पर्वणि मया दर्शपूर्णमासौ कर्तव्यौ इत्येतस्याध्यवसानस्य केवलं नित्यविषयत्वात् काम्यप्रयोगसंकल्पस्य प्रातिस्विकत्वात् काम्येषु प्रयोगेषु पुनः पुनराम्भणीया कर्तव्या स्यात् । तस्मात् क्रतुविषयौदासीन्यप्रच्युत्यभिधायित्वादारम्भशब्दस्य, तस्याश्चैकस्मिन् कर्मण्येकत्वाद् द्वितीयादिप्रयोगेषु निमित्ताभावादकरणम् । विकृतिषु [2]चारम्भविभागाद् भविष्यतीति निरवद्यम् । प्रासङ्गिकं चेदमधिकरणम् । पूर्वाधिकरणे दर्शपूर्णमासाङ्ग त्रिरभ्यासः प्रथमस्थानधर्म इत्युक्तम् । तत्प्रसङ्गादारम्भरणीयापि तदङ्गभूता प्रथमस्थान एव कर्तव्या, न द्वितीयादिष्विति प्रतिपाद्यत इति ॥ ३५ ॥

[ ११—निर्वापमन्त्रे सवित्रादिपदानामसमवेतार्थानां विकृतावनूहाधिकरणम् ]

## अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् तत्राचोदितमप्राप्तं चोदिताभिधानात् ॥ ३६ ॥ सि०

**उपोद्घातप्रसक्तानुप्रसक्तं** [3]**निवृत्तम् । इहेदानीमूहश्चिन्त्यते–किं सवित्रादयः शब्दा विकृतावूहितव्या** [4]**नेति ।** तदर्थमिदं चिन्त्यते । किं समवेतदेवताप्रकाशनार्था एते शब्दाः, [5]उतासमवेतस्वार्थद्वारं निर्वापमेव प्रशंसितुं

---

१. कदाचित्–क० ।

२. तु–ख० ।

३. प्रसक्तादि वृत्तम्–पू० मु० ।

४. उत नेति–पू० मु० ।

५. उतसममेत–क० ।

प्रकाशयन्तीति। पूर्वपक्षमाह—**ऊहितव्याः। कुतः? सवित्रा**[1]**दयस्ताव-च्छब्दा अर्थप्रकाशका** न त्वदृष्टार्थाः, मन्त्राधिकरणन्यायात्। तत्र [1]यदि **श्रुतिवृत्ता गृह्यन्ते ततोऽदृष्टार्थाः स्युः। कथम्? प्रकाशनद्वारेण** क्रतुना **मन्त्रस्यापेक्षितत्वात्**, नहि प्रकाशनव्यतिरिक्तं मन्त्राणां दृष्टमस्ति (न)प्रयोजनम्, न च सवितृप्रकाश[ प्रकाशन ]मपेक्षितमित्यदृष्टार्थत्वं स्यात्; निर्वापप्रशंसायामप्य-दृष्टार्थतैव। यदि तु लक्षणयाग्निमभिवदन्ति ततो दृष्टार्था भवन्ति। तस्मात् [2]समवेताः सवित्रादयः शब्दाः। अथवा सवित्रादिभिर्मुख्य एवार्थः प्रत्याय्यते—**तथापि तु समेवतवचनाः। कथम्? भिन्नत्वादेतेषां मन्त्राणाम्।** अभिन्नत्वे हि सवित्रादीनामदृष्टार्थता स्यात्। तस्माद्देवस्य त्वा सवितुरित्यादिप्रतिदेवतं मन्त्रभेदः। तेषु च जुष्टं निर्वपामीत्यनुषङ्गः। तत्र **मान्त्रवर्णिको देवताविधि-र्दर्शपूर्णमासयागेष्वग्न्यादिभिर्विधिभिर्वैकल्पिको भविष्यति। अत्र केचित्** पुनराहुः—**मान्त्रवर्णिकेन देवताविधानेन न** [3]**शक्यन्तेऽग्न्यादय** [4]उत्पत्तिशिष्टा **देवता बाधितुम्; विषमशिष्टत्वात्। तस्मात् सवित्रादि-मन्त्रवर्णैर्यागान्तराणि** सवित्रादिदेवत्यानि **कल्प्यन्ते। तेषु मुख्याश्च समवेत-वचनाश्च** सवित्रादिशब्दा **इति। नैतद्युक्तम्। एवं** हि **सति यागान्तरत्वात्** [5]प्रयाजादितुल्याः स्युः। **तत्र चोदकेनातिदिष्टानामपि** विकृताव**विकारः**

1. यदि श्रुतिवृत्ता इति। श्रुतिशब्दितयाभिधावृत्त्या यदि सवित्रादिशब्दाः स्वार्थप्रकाशकाः स्युरित्यर्थः। एवं च मुख्यवृत्त्या प्रकाशितानां तेषामसमवेत-तया तत्प्रकाशनं प्रकृतेऽदृष्टार्थं स्यादिति भावः। 'प्रकाशनद्वारेण मन्त्रस्य' इत्यादिटीकावाक्यमापाततो गृहीत्वा 'दृष्टार्थः' इति पूनामुद्रणं भ्रान्तमिति द्रष्टव्यम्।

१. दयः शब्दास्तावत्—ख० ।

२. समवेताग्निवचनाः—ख० ।

३. शङ्क्यते—क० ख० ।

४. उत्पत्तिवाक्यशिष्टाः—ख० ।

५. प्रयाज—पु० मु० ।

**स्यात्, यथा प्रयाजादीनाम्**[1]। **नह्येषु** यागेषु देवतान्तरं विकृतिषु विहित-मिति। **तत्र पूर्वोत्तरपक्षयोः**[2] **न कश्चिदूहानूहविशेषः** स्यात्। **तस्माद् एव**[3] युक्तः पूर्व**पक्षः, यत्रोहः सिद्ध्यतीति।**

**एवं प्राप्ते ब्रूमः—लोके सवित्रादयोऽग्न्यादिवचना न प्रसिद्धाः। न च गुणेन** गुणवृत्त्याश्रयणेनाप्यग्न्यादीन**भिधातुं समर्थाः**। कुतः ? यत्र हि **परशब्दसामानाधिकरण्यं तत्र गुणेन** निमित्तेन **परशब्दः परत्र वर्तते। न**[4] **चेहाग्निसामानाधिकरण्यं** सवित्रादीनामस्ति, [5]**विविभक्तिनिर्देशात्**[I]। तत्र [तन्न] तावदग्निवचनत्वम्। **न च मान्त्रवर्णिको देवताविधिः शक्यते कल्पयितुम्, मन्त्रभेदे हि** सति **स भवति। एकश्चायं मन्त्र इत्युक्तम् "अर्थैकत्वादेकं** वाक्यम्" इत्यत्र। **कल्पितेऽपि मन्त्रभेदे नैवाग्न्यादिना सह** मान्त्रवर्णिकानां सवित्रादीनां **विकल्पो** युक्तः, **विषम-शासनात्। तस्मान्निर्वापस्तुत्यर्थमेषामुच्चारणमित्यनूहः** ॥ ३६ ॥

[ १२—निर्वापमन्त्रे श्रुतस्याग्निशब्दस्य विकृतावूहाधिकरणम् ]

## गुणशब्दस्तथेति चेत् ॥ ३८ ॥ पू०

---

I. विविभक्तिनिर्देशात्—इत्येव पूनामुद्रितो मूलपाठः। विरुद्धविभक्तिनिर्देशा-दित्यर्थः। तथाहि 'सवितुः प्रसवे, अश्विनोर्बाहुभ्याम्, पूष्णो हस्ताभ्याम्' इति गौणत्वाभिमताः सवित्रादिशब्दाः षष्ठ्यन्ताः, विशेष्यत्वाभिमतोऽग्नि-शब्दस्तु 'अग्नये जुष्टम्' इति चतुर्थ्यन्तः। तस्माद् विभिन्नविभक्तिनिर्देशाद् न सामानाधिकरण्यमिति भावः।

१. प्रयाजानां—पु० मु०।

२. पक्षयोः सह न—पु० मु०।

३. स च—क०।

४. न चेह—क०, पु० मु०।

५. विभक्तिनिर्देशात्—क० ख०।

कथं पुनरग्निशब्दस्यासमवेतवचनत्वं शक्यते, अत आह—**अग्नये जुष्टं निर्वपामीति जुषी प्रीतिसेवनयोरिति** स्मरणात्, **अग्निना यद्द्रव्यं सेवितं तन्निर्वप्तव्यम्**। भूते निष्ठा। **न च** निर्वापकालेऽ**ग्निना सेवितं द्रव्यमस्ति**; पुरोडाशावस्थस्य तेन सेवनात्। **तस्माद्विद्यमानत्वात्तादृशस्या**ग्निना जुष्टस्य **द्रव्यस्यासमवेतवचनो**ऽग्निशब्द **इति**। इदमाकूतम्—यद्यप्यस्मिन् कर्मणि समवेतोऽग्निः, तथापि निर्वापे यथाविधः श्रुतस्तथाविधस्य नास्ति समवायः। नह्येषा संप्रदानचतुर्थी। सम्प्रदीयतेऽस्मा इति व्युत्पत्त्या ददातिकर्मणाभिप्रेयमाणस्य सम्प्रदानत्वम्, न क्रियान्तरकर्मणा। न च निर्वापवेलायां दानमस्ति। तस्मात्तादर्थ्ये चतुर्थ्येषा। सा च जुष्टशब्दविशेषणम्। तदयमर्थः—अग्न्यर्थं यत्तेन जुष्टं द्रव्यं तन्निर्वपामीति। न च निर्वापवेलायां [1]तज्जुष्टमस्ति, प्रशंसार्थं तु कीर्त्यते सवित्रादिवत्। ततश्च तद्विशेषणभूतोऽग्निशब्दोऽस्मिन् वाक्ये न समवेतवचनः। सम्प्रदानचतुर्थीत्वे हि कारकाणां क्रियासम्बन्धाद् जुष्टशब्दमनादृत्याग्निशब्दो निर्वापेण सम्बध्यमानः स्वदेवताविशिष्टनिर्वापप्रकाशनात् समवेतवचनः स्यात्, न त्वेवमस्तीति ॥ ३८ ॥

## न समवायात् ॥ ३९ ॥ सि०

**समवेतवचनोऽग्निशब्दः**। कुतः? नात्र जुष्टस्य निर्वाप उच्यते, **निर्वापेण करणभूतेन जुष्टं भावयेदित्युच्यते**। नहि निर्वपामीत्यस्यायमर्थः—निर्वापं करोमीति, किं तर्हि? निर्वापेण करोमीति। ततः किमित्यपेक्षायां जुष्टमिति। **स** जुष्टो **भाव्यमान एवं भाव्यते। अग्निरिदं जोषिष्यते द्रव्यमिति**। देवताविशिष्टं द्रव्यं जुष्टं [2]निर्वापेण भाव्यते, नाविशिष्टमित्यर्थः। तेनाग्नये जुष्टं निर्वपामीति कोऽर्थः? यथाग्निजुष्टं भवति द्रव्यं तथा निर्वापेण करोमीति। ततश्च समवेतवचनावेव जुष्टाग्निशब्दौ। किमित्येवं व्याख्यायते? अत आह—**एवं** स्वदेवताविशिष्टः **सेव्यमानः**

---

१. 'तत्' नास्ति—ख०।

२. निर्वाणे—क०।

प्रकाश्यमानो **दृष्टार्थो** भवति निर्वापः। निर्वापमात्रे हि प्रकाशिते सम्मुग्धमिव स्यात्। कस्यै देवतायै निरुप्तमिदमिति न ज्ञायेत। तस्मात् समवेतवचनत्वादूह इति।

एवं वा—

धान्यशब्दोऽसमवेतवचनः। कुतः? तण्डुलेषु ह्ययं मन्त्रः प्रयुज्यते—"अधिवपामि धान्यमसि" इति। न च तण्डुला धान्यशब्देनाभिधीयन्ते; तस्य सतुषद्रव्यवाचित्वात्। लक्षणातश्चादृष्टकल्पनैव ज्यायसी। लक्षणा हि प्रमाणान्तरवशाद् भवति। अदृष्टार्थता तु [1]समाम्नानबलादेव सुकल्प्या। तस्मादसमवेतवचनत्वेनादृष्टार्थत्वात्, अनूह इति पूर्वः पक्षः। उच्यते—न दृष्टे सम्भवति समाम्नानमात्राददृष्टं कल्पयितुं शक्यते। सम्भवति चेह लक्षणया तण्डुलप्रतिपादनेन दृष्टार्थत्वम्। अस्ति च लक्षणायां प्रमाणम् असिशब्देन स्वाभिमुखतण्डुलवाचिना सामानाधिकरण्यम्। अतः समवेताभिधायीति। प्रयोजनं भाष्योक्तमाक्षिपति—अत्र **प्रयोजने चोद्यते—प्रकृतिशब्देन** धान्यशब्देन **विकारास्तण्डुलाः प्रकाशिताः** प्रकृतौ **लक्षणया। तेनेहापि** शाक्यानामयने **चोदकस्तथैव** लक्षणया प्रकृतिशब्देन मांसप्रकाशनं **प्रापयति। तस्मान्मृगशब्देन मांसं प्रकाश्यं लक्षणया,** न तु मांसशब्देन, प्रकृतौ तण्डुलशब्दानाम्नानाद्[2] धान्यशब्दाम्नानाच्च नूनं विवक्षिता लक्षणेति गम्यते। अन्यथा हि **तण्डुलशब्द एव** समाम्नातः स्यात्। तस्माद्विकृतावपि लक्षणाश्रयितव्येति। समाधत्ते—**नैतदेवं विकृतावर्थः, चोदकेनातिदिश्यते,** न तु **शब्दो वाचक** इत्येतदत्रैव तृतीयपादे **वक्ष्यामः।** अर्थप्रतिपादनार्थं तु मन्त्रप्राप्तिः। ततः किमित्याह— **स चार्थोऽस्मदायत्ते प्रयोगे किमित्यवाचकेन प्रकाश्यते।** स्वरूपेण हि शब्देऽतिदिष्टे धान्यशब्द एव प्रयोक्तव्य इति न समांस [ न मांस ] शब्दप्रयोगः स्यात्। अर्थार्थे तु शब्दप्रयोगे मांसाभिधानासमर्थे धान्यशब्दे निवृत्ते शब्दान्तरप्रक्षेपे किमर्थं मुख्य-

---

१. साम्नात–क०।

२. शब्दाम्नानात्–ख०।

मुल्लङ्घ्य लक्षणाश्रयणमिति। यदुक्तं प्रकृतौ तथा कृतमिति, तत्राह—**प्रकृतौ धान्यपदाम्नानसामर्थ्येनावाचकेनापि शब्देन विकारप्रकाशनं कृतम्। तच्च** धान्यपद**मिहार्थान्निवृत्तं न तच्चोदकः प्रापयति** लुप्तार्थत्वात्। यत्तु विवक्षिता लक्षणेति, तत्राह—**न च वचनमस्ति प्रकृत्या विकारः प्रत्याय्य**[1] **इति**। नहि धान्यपदाम्नानस्यैतत् सामर्थ्यम्; यदुत लक्षणया प्रकाशयितव्यमिति। तदाम्नानात्तु तद्युक्त एव मन्त्रः कार्याङ्गमित्येतावद्गम्यते। लक्षणा नान्तरीयकी, न तु शास्त्रार्थः। न त्विह धान्यपदं प्रयोक्तुं शक्यम्। **तस्मान्मांसशब्दस्यैव प्रयोगः**। इदं च मांसस्याप्यधिवापोऽस्तीति कृत्वा चिन्तितुम् [ चिन्तितम्। ] परमार्थतस्तु मांसस्याधिवापो नास्त्येव। पेषणार्थत्वादधिवपनस्य, मांसे च तदभावात्। आवापाभावे च मन्त्रो न प्रयुज्यत इति॥ ३९॥

[ १३—इडानिगदे यज्ञपतिशब्दस्य विकृतावनूहाधिकरणम् ]

## चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात्॥ ४०॥ सि०

**"यज्ञपतिं वर्द्धान्" इति वृद्ध्या सह यज्ञपतेरिडापदमनपेक्ष्य प्रत्यक्षैकवाक्यता गम्यते। इडया तु सह परोक्षैक**वाक्यतेति पूर्वः पक्षः। तस्यां ह्याश्रीयमाणायां यज्ञपतिं वर्द्धानित्येतत् स्वार्थमुल्लङ्घ्य लक्षणयेडास्तुतिपरं स्यात्। तत्र वाक्येन लिङ्गं बाधितं स्यात्। लिङ्गेन हि यज्ञपतिवृद्धिप्रकाशनार्थता गम्यते। वाक्येनेडास्तुतिः। तस्मादनेन यज्ञपतिः, वृद्धिप्रकाशनेन संस्कारेण प्रोत्साह्यते। तत्र बहुषु यज्ञपतिषु सर्वेषु संस्कारार्थमूह इति। **सिद्धान्तस्तु—'यज्ञपतिशब्दो वृद्धिविशेषणम्। वृद्धिरिडास्तुत्यर्था,** न तु यज्ञपतिसंस्कारार्था। कुतः? **इडोपह्वानेनैकवाक्यत्वात्। अथ यदुक्तम्—इडापदानपेक्षं यज्ञपतिवृद्धिवचनं गम्यते** लिङ्गेन वाक्यं बाधित्वेति। **उच्यते—"स यो हैवं विद्वानिडया चरति" इत्यनेनेडया चरितव्यमिति विधीयते**। नहि यज्ञपतिवृद्धिरपि कर्तव्यतया विहिता या प्रकाशनमपेक्षते। अतस्तदर्थो मन्त्रः सन्ननर्थकः स्यात्। इडाप्रचारस्तु विहितः। ततश्चे**डाप्रचारस्यायं मन्त्रः** श्रुत्यैव विनियुक्तः। तत्रे-

---

1. प्रत्याय्यते—पू० मु०।

डोपहूतोपहूतेत्यादिर्ब्रह्मदेवकृतमुपहूतमित्येवमन्तः, इडोपह्वानार्थे "दैव्या अध्वर्यवः" इत्यादिकः त्विगुपह्वानार्थः। कथम्? अध्वर्युशब्दवाच्या इह सर्वर्त्विजो लक्षणया बहुवचनसामर्थ्यात्। 'उपहूता मनुष्याः' इत्यपि त एवोच्यन्ते। ततः किमायातमित्याह—कीदृशास्त इति विशेषापेक्षाया-मुच्यते। ये यज्ञमवन्ति रक्षन्तीत्यर्थः। ये च यज्ञपतिं वर्द्धयितुं समर्था-स्तादृशा मनुष्या उपहूता इति। तस्मान्मनुष्यविशेषणत्वात् परार्थो यज्ञपतिशब्दः। वर्द्धानित्येतत्तावदाख्यातं यच्छब्दोपबन्धबलात् श्रुत्यैवान्य-विशेषणतया प्रतीयते, न स्वार्थतया। यच्छब्दो हि स्वार्थस्य श्रुत्यैवान्यविशेषणता-माह। यज्ञपतिशब्दोऽपि सुबन्तस्तस्यैव विशेषणम्। तदेवं श्रुत्यैव यज्ञपतिविशिष्टा वृद्धिरुपहूता इत्यस्य विशेषणतया गम्यते। उपह्वानमपि च प्रकाशयितव्यमेवेति तदर्थ एव यज्ञपतिशब्दः। "स्योनं ते सदनम्" इत्यत्रापि यदि यच्छब्दोपबन्धः स्यात्? घृतस्य धारया यत्तव सदनं कृणोमीति, ततो नैव लिङ्गेन स्वार्थे विनियोगः स्यात्, लिङ्गेनैव परविशेषणत्वावगमात्। तन्त्रमेव तु तत्र सदनकरणं प्रतिष्ठापनं च गम्यते। द्वयमपि च तत्कर्तव्यं प्रकाशनापेक्षम्। तस्मात्तत्र मन्त्रभेदः। इह तु लिङ्गेनैव परार्थो यज्ञपतिशब्दः, तेन [1]नोह्यत इति ॥ ४० ॥

[ १४—सूक्तवाकस्थयजमानपदस्योहाधिकरणम् ]

## विकारस्तत्प्रधाने स्यात् ॥ ४१ ॥ सि०

नन्वत्र यजमानस्य प्राधान्यात् कथमनूहाशङ्का? अत आह—प्रत्युदाहरण-मेतत्। पूर्वसूत्रे पदार्थत्वान्नोह इत्युक्तम्। तस्य परार्थग्रहणस्यैतत् प्रत्युदाहरणम्—स्वार्थे पुनर्भवत्येवोह इति। अथवाऽधिकरणान्तरं कयाचिदाशङ्कयारभ्यते। तामेवाशङ्कामाह—'अयं यजमान आयुराशास्ते' इत्यत्रायुषः फलत्वं नाव-गतं प्रमाणान्तरेण। तस्माद्यजमानस्याशिषा सम्बन्धो वाच्योऽदृष्टाय। तत्र यजमानसम्बद्धाशीर्वक्तव्येति विवक्षितम्। सा चैकेनापि यजमानेन भवत्येवोक्ता। तस्मादनूहः। नैतदेवम्। "सूक्तवाकेन प्रस्तरं प्रहरति" इति करणविभक्तिनिर्देशात् कृत्स्नः सूक्तवाकः प्रस्तरप्रह-

---

१. नो गृह्यते—क० ख०।

रणाङ्गम्। **न चासौ साक्षात् प्रहरणं प्रकाशयति, न चापि तत्साधनं** प्रस्तरम्। **श्रुत्या च तस्याङ्गता निर्ज्ञाता। तस्माच्छ्रुतेर्यदनेन** प्रकाश्यते **तत्प्रहरणसम्बन्धि**। नह्यन्यथा श्रुत्यवगतं कृत्स्नस्य प्रहरणाङ्गत्वं घटते। क्रियातत्सम्बन्धिप्रकाशनेनैव हि मन्त्रस्य करणता। **तेन चाग्न्यादयो देवताः प्रकाश्यन्ते, आयुरादीनि च फलानि। तत्र देवताः क्रियायाः साधनतां प्रतिपद्यन्ते, आयुरादीनि फलानि च साध्यत्वम्। तस्मादायुरादीनि फलानि।**

नन्वेषां फलत्वं तृतीय एवोक्तम्। सत्यम्। इहत्यमेवानागतावेक्षणेनार्थान्तर एव साध्यमाने प्रसङ्गादुक्तम्। अत्रैव त्विदं प्रतिपाद्यत इत्यपुनरुक्तता। भवन्तु फलानि, ततः किमित्याह—**कर्तृगामि च क्रियाफलं** कर्त्रर्थमित्यर्थः। **तस्माद्यजमानः प्रधानभूतः फलं प्रति**। तथापि किमित्याह—**प्रधानभूतत्वादूह्यः**।

अयमभिसन्धिः—सर्वैस्ताव[1]द्यजमानैः प्रस्तरः सूक्तवाकेन प्रहर्तव्यः। कर्तृफलप्रकाशनद्वारेण च तस्य करणता। तत्र यदि कस्यचिदेव फलं प्रकाश्येत न सर्वेषाम्, ततस्तेनैकेनैव प्रहरणं कृतं स्यात्, न सर्वैः। तस्मात् सर्वे फलभागित्वेन प्रकाशयितव्या इत्यूहः ॥ ४१ ॥

[ १५—सुब्रह्मण्यानिगदस्थहरिवदादिपदानामनूहाधिकरणम् ]

## असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४२ ॥ सि०

सिद्धान्तेनोपक्रमते—**नैते** हरिवदादयः **सन्तीन्द्रे गुणाः, प्रमाणाभावात्**। **ऊहं चेच्छता** त्वया **सन्तीन्द्र एते गुणा इत्यभ्युपगमनीयं** विनैव प्रमाणेन। अन्यथा ह्यसमवेतार्थत्वेनोहो न सिद्ध्येत्। न केवल**मिन्द्रगुणसम्बन्धमात्र**मन्याय्यं [2]कल्प्यम्। अयं चापरो दोषः—**इन्द्रस्यात्मीया गुणा हरिवदादय**[3] इति **चाभ्युपगमे लक्षणा स्यात्**। कथमित्याह—**अनेनांशेन** हरिवदादिषु **प्रकाश्यमानेषु**। भवन्मते हि हरिवदादयो न हरिवदादय इत्यनेनाकारेण प्रकाश्यन्ते, किन्त्वपूर्वीयदेवतागुणा इत्यनेनाकारेण। अथोच्येतास्तत्पक्षेऽप्यसमवेता गुणा इन्द्रे।

---

१. 'तावत्' नास्ति–ख०। २. कल्प्यते–ख०। ३. 'हरिवदादयः' नास्ति–क०।

**न चात्मीयत्वं लक्षयिष्यन्ति**। तेन **द्वावपि दोषौ** त्वदुक्तौ **परिहरिष्याम** इति। तथा **सतीन्द्रो हरिवद्गुणविशिष्ट उच्चार्यमाणोऽभ्युदयकारी** भवतीत्यङ्गीकरणात् तत्स्थानापन्नस्याग्नेरपीष्यतामेतैरेव हरिवदादिभिर्विशिष्टस्याभ्युदयकारित्वम्। अतश्चानूहः॥ ४२॥

## कर्माभावादेवमिति[1] चेत्॥ ४३॥

इति पूर्वपक्षसूत्रम्। "पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी" इत्याद्यर्थवादप्रामाण्याद् ऐन्द्रे [ इन्द्रे ] सन्त्येते गुणाः। सत्सु च तेषु गुणद्वारेण लक्षणयापि देवताप्रकाशने दृष्टे सति नादृष्टार्थता युक्ताऽङ्गीकर्तुं तस्मादूह इति।

एतस्योत्तरं सूत्रम्—

## न परार्थत्वात्॥ ४४॥

**"पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी [2]ताभ्यां ह्येष सर्वं हरति" इति यदुक्तं** गुणसद्भावे प्रमाणम्, **तन्न** युक्तम्। कुतः? अस्य वाक्यस्य **यावेतौ पूर्वपक्षापरपक्षौ** हरणस्य कर्मणः **करणभूतौ ताभ्यामिन्द्रो हरति नान्योऽग्निरित्ययं तावदर्थो न लभ्यते, कुतः? ताभ्यां ह्येष सर्वं हरतीति हेतुरयम्। हेतुश्च प्रसिद्धे सम्बन्धे भवति, न चेन्द्रस्य हर्तृत्वं प्रमाणान्तरेणाधिगतम्, येन हेतुः स्यात्**। नापि चैताविन्द्रस्य [3]करणत्वेन प्रसिद्धौ। तस्मादसिद्धो हेतुः। अथैतयोः करणत्वमिन्द्रस्य च हर्तृत्वं विधीयते, तथा वाक्यभेदः स्यात्। अथ पूर्वपक्षापरपक्षाविन्द्रस्य विधीयेते, तयोश्च हर्तृत्वं हरणे हरिशब्दवाच्ये कर्तृत्वं विधीयते। तस्मादिन्द्रो हरिवान् भविष्यतीति। एवमपि हेत्वप्रसिद्धिस्तदवस्थैव। हर्तृत्वं हीन्द्रस्य प्रमाणान्तरेण नावगतम्। येन हेतुः समर्थितो भविष्यति। न केवलमनवगतिर्हर्तृत्वस्य, किन्तु विपर्यय एवेत्याह—पूर्वपक्षापरपक्षयोर्हर्तृत्वं विधीयमानं कथमिन्द्रस्य स्यात्। सोऽयं प्रतिज्ञाहेत्वोर्विरोधः। पूर्वपक्षापरपक्षौ हर्ताराविति प्रतिज्ञा। इन्द्रस्य हर्तृत्वादिति हेतुः। तेन प्रतिज्ञयैव हेतोर्विपर्यय इति। **वाक्यभेदादिदोषश्च स्थित एव**।

---

१. नेति—क० ख०। २. 'ताभ्यां···हरणस्य' नास्ति—क०।
३. 'करणत्वेन···निन्द्रस्य' नास्ति—ख०।

पूर्वपक्षापरपक्षाविन्द्रस्य, तौ च हरी इति विधानात्। **तस्मात् सर्वेषां स्तुतिद्वारेणैवैकवाक्यता** वक्तव्या। तेनेन्द्रे[1] हरिवदादिगुणानामभावादसमवेताभिधानादनूहः। तत्त्वे तन्न रोचयन्ते याज्ञिका इति भाष्यं किमर्थम्? न्यायेनानूहे साधिते तथैवानुष्ठानं मा भूदित्येवमर्थम्। अग्निस्तुत्यैव हि निगदान्तरम् अग्न आगच्छेत्यादिकमूहितमेव याज्ञिकाः स्मरन्ति, तस्यैव प्रयोगो न प्राकृतस्येति।

एवं वा—अथेदमन्यदुदाह्रियते—तस्यैव श्रुतम् [ तस्याः श्रृतम् ] इत्यादीनां गुणानां भावित्वेनापि तावदेकहायन्या समवायसम्भवाद्यथाकथञ्चिदपि स्वगुणद्वारेण कर्माङ्गैकहायनीप्रकाशनसम्भवे श्रुति [ स्तुति ] मात्रार्थत्वस्यान्याय्यत्वात्, त्रिवत्से च भावित्वेनाप्यसम्भवाद् ऊह इति प्राप्ते ब्रूमः—न तावत् प्रयोगाङ्गभूतायामेकहायन्यवस्थायामेते गुणाः सन्ति, यत्प्रकाशनं कर्माङ्गं स्यात्। भावित्वमपि नैकान्तिकम्, मरणसम्भवात्। सम्भावनामात्रं तु स्यात्। न चैवंविधप्रकाशनं कर्मणि दृष्टं प्रयोजनं साधयति। तस्मात् प्ररोचनामात्रार्थमेषां कीर्तनम्। सा च साण्डेऽप्येतैरेव गुणैः शक्या कर्तुम्, साण्डादपि पशोर्या गौर्जनिष्यते सा धोक्ष्यत इति। तस्मादविकारेण प्रयोग इति ॥ ४४ ॥

[ १६—सारस्वत्यां मेष्यामध्रिगुप्रैषस्य प्रवृत्त्यभावाधिकरणम् ]

## लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४५ ॥ सि०

पशूनां संस्थानां च सामानविध्यं कृत्वा चिन्त्यते। नन्वतिरात्रे समुच्चितेषु सहालभ्यमानेषु **चतुर्ष्वपि** सवनीयेषु **पशुष्वेकवचनान्तोऽसमर्थ एव प्रास्मैशब्दः**। तत्कथम् 'अप्राप्ता सरस्वती' इति सारस्वत्यामेवाप्राप्तिः सिद्धान्त्यते? **उच्यते—प्रातिपदिकार्थस्तावद्विद्यते** चतुर्ष्वपि पशुषु। तेन प्रातिपदिकं तावत् समर्थम्। **वचनेन तु यथा प्रातिपदिकं नोत्कृष्यते तथा वक्ष्यामः पाशाधिकरणे। तस्मात् समवेतवचनोऽयम्**, बहुष्वपि **प्रातिपदिकार्थसद्भावात्**। नन्वेवं सति सारस्वत्यामपि प्रातिपदिकार्थसम्भवात् कथमप्राप्तिः?

---

१. 'इन्द्रे' नास्ति—क०।

अत आह—**स्त्री तु पुंलिङ्गेन शब्देन न शक्या वदितुम्**। नन्वसत्यपि पुंस्त्वे प्रातिपदिकार्थसम्भवात् कथमशक्यता ? अत आह—**न चात्र लिङ्गं वचनमिव विभक्त्यर्थः, किन्तु प्रातिपदिकार्थो लिङ्गमित्युक्तम्** "अभ्यासः सामिधेनीनाम्" इत्यत्र भाष्यकारेण। **तस्मात्** प्रातिपदिकार्थस्यैवासम्भवान्**मेष्यां** मन्त्रस्याभावो **युक्तोऽसमवेत**वचनत्वादित्येवं **सिद्धान्तवादी मन्यते लिङ्गविशेषनिर्देशादिति**। यदापि टाबादीनां विभक्तिविकाराणां च वाच्यं लिङ्गमित्यङ्गीक्रियते, तदापि प्रातिपदिकस्य पुंपशुष्वपि सन्निहितेष्वर्थवत्त्वेनाविरोधात्, पुल्लिङ्गस्य तु मेष्यामत्यन्तानर्थक्येन पुंविषयत्वमेव युक्तम्। एकवचनं तु पशूनामग्निहरणं प्रति प्राधान्यात् प्रत्येकाभिप्रायं भविष्यतीति नात्यन्तानर्थक्यमिति विशेषः ॥ ४५ ॥

अत्र **पूर्वपक्षवादी मन्यते—पशुशब्देन सामानाधिकरण्यं भविष्यति, प्रास्मै पशावेइति। तच्च पशुशब्दवाच्यं** पशुत्वं **मेष्यामपि विद्यते** सन्निहितम्। तदभिप्रेत्य मेष्यामपि पुंलिङ्गं भविष्यति। पुंविषयमेव हि पशुत्वं पशुशब्देनोच्यते। नहि पशुशब्दाभिहितं कदाचिदपि लिङ्गान्तरं सहते। **तस्मात् समर्थो निगदोऽयं** मेष्यामपीत्येवमर्थम्—

**पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥४६॥ पू०**

**इत्यनेन** सूत्रेण **प्रतिपादयति** ॥ ४६ ॥

**विशेषो वा तदर्थनिर्देशात् ॥ ४७ ॥**

**इति सिद्धान्तसूत्रेण प्रथमसूत्रार्थ एव स्मार्यते** ॥ ४७ ॥

**पशुत्वं [1]चैकशब्द्यात् ॥ ४८ ॥**

इति पूर्वपक्षवादिना **पशुशब्दोऽपि पुंलिङ्गोऽस्मैशब्दोऽ**पीति **यत्सामानाधिकरण्यमुक्तं तत्प्रत्युच्चार्यते**[2] परिहर्तुम् ॥ ४८ ॥

**यथोक्तं वा सन्निधानात् ॥ ४९ ॥**

---

१. वैकशब्द्यात्—क० ख०

२. उच्चर्यते—क० ख०

इति सिद्धान्तसूत्रम्। **पूर्वपक्षवादिना यदुक्तं तदनेन निराक्रियते।** कथम् ? **सन्निहितवचनत्वं** हि **सर्वनामशब्दानां स्वभावः। तदुच्चरितमात्र** एव **सर्वनामशब्दः, यः**[1] **पदान्तरेण सन्निधाप्यते** अर्थः, **तेन सह शीघ्रं सम्बध्यते। न चेह पशुशब्द उच्चारितो येन सम्बन्धः स्यात्। तस्मिन्नसति शब्दोपात्ते** सम्बन्धिनि द्वितीयः **सम्बन्धप्रकार आस्थीयते**[2] **प्रकरणाद्यालोचनेन।** शब्दसन्निहितालाभे प्रकरणसन्निहितं गृह्यत इत्यर्थः। ततः किमत आह भाष्यकारः—**"लिङ्गादिसर्वविशेषणविशिष्टे रूपेण सन्निहिते प्रयुज्यते" इति।** तस्य **कोऽर्थः ?** आदिशब्देन रूपशब्देन च किमुच्यत इति प्रश्नार्थः। उत्तरम्—**जातिलिङ्गसंख्याविशेषणविशिष्टां** सन्निहितव्यक्तिमभिदधति सर्वनामशब्दाः। **रूपेण स्वसामर्थ्येनेत्यर्थः। सर्वनाम्नां ह्येतदेव सामर्थ्यं यदेतानि विपरिवर्तमान**मेवार्थमभिदधति। **व्यक्तिश्च विपरिवर्तते** न पशुत्वम्। तस्माद् व्यक्त्यभिधानम्। **अथवा रूपेणेति रूपशब्देन विद्यमानं वस्त्वभिधीयते। तच्चैवं विद्यमानं** भवति, **यदि**[3] **विपरिवर्तते प्रकरणसन्निहितम्।** अयञ्च भाष्यार्थः—लिङ्गादिविशिष्टे व्यक्तिरूपेऽर्थे प्रयुज्यते। केन हेतुना ? रूपेण। तादृशस्यैव प्रकरणसन्निहितस्य विद्यमानत्वादित्यर्थः। कथं पुनः सन्निहितवचनत्वमवगम्यते ? अत आह भाष्यकारः—**"सन्निधानेनैकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नुवन्ति" इति।** तद्व्याचष्टे—**यद्यत् सन्निधानविशिष्टं तत्तत् सर्वमभिदधति** सर्वनामशब्दाः। **तस्मात् सन्निधानमेषां सामान्यं निमित्तम्। सन्निहितं च पुल्लिङ्गम्।**

ननु मेष्यां स्त्रीलिङ्गमपि सन्निहितम्, अत आह—**यद्यपि स्त्रीलिङ्गमपि सन्निहितम्, तथाप्येष** प्रास्मैशब्द**स्तत्र न समर्थो वर्तितुं पुंल्लिङ्गत्वात्।**

---

१. यत्–पू० मु०।

२. आश्रीयते–पू० मु०।

३. 'यदि' नास्ति–ख०।

नहि यत्र यत्र सन्निहितं तत्र तत्र सर्वत्र सर्वनाम्ना वर्तितव्यम्, अपि तु यत्र शक्तम्। न च स्त्रियां पुंलिङ्गस्य शक्तिरस्ति। **तत्रोच्चार्यमाणे पशुशब्देऽस्मै** पशव इति पुल्लिङ्गोऽस्मैशब्दः **पुल्लिङ्गेन पशुशब्देन शक्यः सम्बन्धयितुं** मेष्यामपि। ननु तदापि कथं स्त्रियां पुल्लिङ्गोऽत आह—**अस्मिन् पक्षे व्यक्तितो निष्कृष्य पशुत्वं तेन सह सम्बध्यते प्रास्मैशब्दो न तु व्यक्त्या** तदा शब्दसन्निहितस्य लाभान्न प्रकरणसन्निहितं सर्वनामशब्दोऽपेक्षते। स्त्रीव्यक्तिगतमपि च[1] पशुत्वं[2] पशुशब्देन पुंविषयमेवोच्यते नान्यलिङ्गमिति तत्सामानाधिकरण्यात् स्त्रियामप्यस्मैशब्दः समर्थ एव स्यात्। **एतदपि तु पशुशब्देऽनुच्चार्यमाणे न सम्भवतीत्युक्तमेव**। तेन शब्दसन्निहिताभावात् प्रयोगे यत्सन्निहितं तदपेक्ष्य प्रास्मैशब्दः। प्रयोगसन्निधिश्च व्यक्तेरेव, न तु जातेः साक्षात् प्रयोगसन्निधिरस्ति। तस्माद्व्यक्त्यभिधानम्। अत्र[3] च सामर्थ्यात् पुंव्यक्त्यभिधानम्।

इदन्त्विह वक्तव्यम्—यदि पशुशब्दः स्त्रियामपि वर्तमानः पुल्लिङ्ग एव भवति, कथं तर्हि "अग्नीषोमीयं पशुमालभेत" इत्यत्र पुल्लिङ्गवशात् पुंपशोरालम्भसिद्धिरिति। तदुच्यते, शाखान्तरे—"अजोऽग्नीषोमीयः" इत्यजशब्देन पुल्लिङ्गेन विधानात्। स ह्यभिधेयवल्लिङ्गो न नियतलिङ्गः। तथा "छागस्य वपाया मेदसः" इति मन्त्रवर्णात् छागनियमवत्पुल्लिङ्गनियमोऽपीत्यनवद्यम्। तेन सामानविध्ये सारस्वत्यामप्राप्तिर्मन्त्रस्यासामानविध्ये तूहेन प्राप्तिरिति ॥ ४९ ॥

[ १७—यज्ञायज्ञिये नित्यमिरापदस्य गिरापदबाधकत्वाधिकरणम् ]

## आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥ ५० ॥ सि०

इदानीं सामोहं प्रतिपिपादयिषुस्तदुपोद्घातं चिन्तयति यावत् "सामप्रदेशे विकारः" इति। तत्रेह तावदिरापदे[4] गिरापदगीतेः[5] प्राप्तिं सामोहसिद्ध्यर्थं

१. तु—ख०।

२. 'पशुत्वं' नास्ति—ख०।

३. तत्र—ख०।

४. पदो—ख०।

५. पदं—ख०।

चिन्तयितुं तत्स्थानापत्तिः किं नियता न वेति चिन्त्यते। ज्योतिष्टोमे **यज्ञायज्ञियं प्रकृत्यामनन्ति—"न गिरा गिरेति ब्रूयात्। यद्गिरेति ब्रूयादात्मानं तदुद्गातोद्गिरेत्। ऐरं कृत्वोद्गेयम्" इति। अत्र पूर्वपक्षः—ऐरं कृत्वोद्गेयमिति इरापदस्थाने नोत्पत्तिः** [ इरापदस्यानेनोत्पत्तिः ] **केवलं क्रियते,** न विनियोगः। **उत्पत्त्युत्तरकालश्च प्रयोजनं प्रति साकाङ्क्षस्य यज्ञायज्ञियप्रयोगवचनेनैव** "यज्ञायज्ञियेन स्तुवीत" इत्यनेन प्रकरणात् स्तोत्राङ्ग गृह्णता गानं **विधीयते**। नह्यसति गाने स्तोत्राङ्गता भवति, यज्ञायज्ञीयात्मकगानसाध्यत्वात् स्तुतेः। तेन प्राप्तं गानमुद्गेयमित्यनेनानूद्यते, न तु श्रुत्या गानविधानं स्तोत्राङ्गत्वं वा। **गिरापदस्यापि यज्ञायज्ञीयप्रयोगवचनेनैव स्तोत्राङ्गता**। तेन हि यज्ञायज्ञीयं यथासिद्धसामर्थ्यं स्तोत्राङ्गत्वेन तृतीयाश्रुत्या विधीयते। तस्य च स्तुतिसाधनत्वसामर्थ्यमृगक्षरसंस्कारद्वारमेव नान्यथा। तेन यज्ञायज्ञीयेन स्तुवीतेत्यस्यायमर्थः—यज्ञायज्ञियेन संस्कृतेन प्रगाथेन स्तुवीतेति। तस्मिंश्च प्रगाथे गिरापदमपि विद्यत इति सामान्येन प्रगाथमुपदिशताऽनेनैव विधिना गिरापदमप्युपदिष्टं भवति। **तस्मादुभयोस्तुल्यप्रमाणत्वाद् विकल्पः। अथवा यद्यपीरापदमैरं** कृत्वोद्गेयमित्यनेनैव **वाक्येन विधीयते स्तोत्र**साधनत्वेन, न तु प्रमाणान्तरेण; **तथापि नानुत्पन्नं श्रुतिः[१] शक्नोति निर्वर्तयितुमित्यर्थादुत्पत्तिरपेक्षितव्या**। नहि विनियोगपरस्य श्रुत्योत्पत्तिपरत्वं सम्भवति। तेन सार्थादवाप्तव्या। **यज्ञायज्ञियेन स्तुवीतेत्यनेन गिरापदस्य स्तुतिसाधनत्वम्[1]** अन्यथानुपपत्त्या**क्षिप्तम्**। नहि विना गिरापदेन यज्ञायज्ञीयस्य स्तुतिसाधनत्वमुपपद्यत इति। **पाठात्तु गिरापदस्योत्पत्तिः सिद्धा। तस्मादेकत्रैरापदे** विनियोगः श्रुतः, **उत्पत्ति**स्त्वर्था**दपेक्षितव्या**। **अपरत्र** तु गिरापदे पाठादुत्पत्तिर्लब्धा, **विनियोग-**

---

1. यद्यपि 'स्तुतिसाधनत्वमुपपद्यते' इत्येव पूनामुद्रितः पाठः, तथापि 'नहि विना गिरापदेन' इत्यादितन्त्ररत्नस्थोत्तरविवरणस्वारस्यात् 'स्तुतिसाधनत्वमाक्षिप्तम्' इति वार्त्तिकपाठमभ्यूह्य तथैव निवेशितम्।

१. स्तुतिम्–क० ख०।

स्त्वर्थाल्लभ्यः । तस्मादेकाङ्गविकलत्वाद् द्वयोरपि प्रत्ययविप्रकर्षस्तुल्यः । प्रत्ययविप्रकर्षाच्च विकल्पः ॥ ५० ॥

## नियमो वा श्रुतिविशेषादितरत् साप्तदश्यवत् ॥ ५३ ॥ सि०

यत्तावदिदमुक्तम्—ऐरं कृत्वोद्गेयमित्यनेनोत्पत्तिः केवला क्रियते, यज्ञायज्ञीयप्रयोगवचनेन[1] स्तुतिसाधनत्वमिति तन्न, कुतः ? यद्येवं श्रूयेत ऐरं भवतीति, तदोत्पत्तिः स्यात्, इह त्वैरं कृत्वा ऐरमभिनिर्वर्त्य तत उद्गेयमिति श्रुत्यैव प्रकरणसनाथयाऽस्य साधनता विधीयते। स्तोत्रप्रकरणाद्धि तदपूर्वसाधनमुद्गायतिना लक्षयित्वा विधीयमानमिरापदं श्रुत्यैव स्तोत्राङ्गं भवति। सति चैवं श्रुतिविनियोगे यथाकथञ्चित् प्राप्तानुवादत्वं न युक्तमङ्गीकर्तुम्। यज्ञायज्ञीयेन त्वन्यथानुपपत्त्या गिरापदस्य स्तुतिसाधनत्वं क्रियते। सा च प्रत्यक्षेणेरापदेनान्यथानुपपत्तिर्बाध्यते । यदप्यपरमुक्तमिरापदेऽप्यर्थादुत्पत्तिरपेक्षितव्येति, [2]प्रत्ययविप्रकर्षतुल्यत्वाद्विकल्प इति, तत्रोच्यते—श्रुत्यैरापदविशेष एव स्तोत्रे विहितः। तस्य त्वर्थादुत्पत्तिरपेक्षितव्येति यदुच्यते, शब्दस्य तत्र नास्ति व्यापारः। स हि शृङ्गग्राहिकया विनियोगं कृत्वा चरितार्थो भवति। [3]इह गिरापदे, शब्देनैव कस्मिंश्चित् कार्यविशेषो विधातव्यः। नह्युत्पत्तिमात्रेण चरितार्थता भवति। तत्र गिरापदस्य कार्यविशेषे विनियोजकः शब्दो न विद्यते। स हि न श्रुतो नापि कल्पयितुं शक्यते, श्रुतेनैवैरापदेन स्तोत्रस्य निराकाङ्क्षत्वात्। तस्मादिरापदस्यैव नियम इति।

अथ सामान्येनोपदिष्टस्य गिरापदस्य को विषय इत्याशङ्क्य सूत्रभाष्यकाराभ्याम्—"इतरत्साप्तदश्यवद्विकृतिषु निवेक्ष्यते" इत्युक्तम्। तदाक्षिपति—न

१. वचनेन तु—ख० ।

२. प्रत्ययविकर्ष—क० ।

३. इह तु—ख० ।

[1]तुल्यो दृष्टान्तेन दार्ष्टान्तिकः। कथम्? "सप्तदशसामिधेनीरनुब्रूयात्" इत्यनारभ्य श्रूयते—"पञ्चदशानुब्रूयात्" इति दर्शपूर्णमासयोः। तत्र प्रकरणात् क्लृप्तसम्बन्धेन पाञ्चदश्येन साप्तदश्यं बाधितम्। तत्र कासुचिद्विकृतिषु साप्तदश्यं पुनः पठ्यते। तेन च चोदकप्राप्तं पाञ्चदश्यं निवर्त्यते प्रत्याम्नातेन। गिरापदं पुनर्न कस्याञ्चिद्विकृतौ पठ्यते, येनेरापदं बाधेत। अपि चेरापदं क्लृप्तोपकारं विकृतौ चोदकेन प्राप्यते। गिरापदं पुनर्नोपदेशेन नातिदेशेन प्राप्नोति। तस्माद्विकृति-ष्वपीरापदमेवेति सूत्रं भाष्यं चानुपपन्नमेवेति। उच्यते—एतावता दृष्टान्तः—यथा साप्तदश्यं प्रकृतौ पाञ्चदश्येन बाध्यते, एवं गिरापदमिरापदेनेति। तद्बाधितं यासु विकृतिषु प्रमाणं भवति तासु भविष्यति। प्रमाणाभावे वा क्वचिदपि न भवतु, नानेन काचित् क्षतिरिति। अन्यथा वा विनापि स्तुतिसाधनत्वेन प्रकारान्तरेण भवति कासुचिद्विकृतिषु गिरापदम्। तथा ह्यग्नौ श्रूयते—"यज्ञायज्ञियं पुच्छे गायति" इति। तत्र यथाम्नातमेव गिरापदयुक्तं यज्ञायज्ञियं प्रयोक्तव्यम्। यत्र ह्यग्निष्टोमस्तोत्रसाधनत्वेन यज्ञायज्ञियं प्रयुज्यते, तत्रैव क्लृप्तोपकारेणेरापदेन गिरापदं बाध्यते। तत्रैव तस्य प्रकृता-वुपदेशाद् नान्यत्र प्राप्तिरिति ॥ ५३ ॥

[ १८—गिरापदस्थानापन्नेरापदे गानकर्तव्यताधिकरणम् ]

**अप्रगाणाच्छब्दादन्यत्वे तथाभूतोपदेशः स्यात् ॥ ५४ ॥ पू०**

गिरापदस्य गीतिरिरापदेन कर्तव्या, कुतः? गीत्या वर्णाः संक्रियन्ते। वर्णसंस्कारार्था गीतिरित्यर्थः। ततः किमित्याह—गिरापदवर्णानाञ्च या

---

1. 'न तुल्यः' इत्यस्यानन्तरम् 'दृष्टान्तः' इति पूनामुद्रितपुस्तके पाठो दृश्यते, स न युक्तः पाठः। 'न दार्ष्टान्तिकः' इत्युत्तरवाक्यानानुगुण्यात्। अतः 'दृष्टान्तो न' इत्यत्र ओकारस्थाने एकारं कृत्वा 'दृष्टान्तेन' इति तृतीयान्त-तया पठनीयम्। तथैव तन्त्ररत्नेऽपि गृहीतम्। अतश्च प्रथमान्तदृष्टान्तपदस्य मुद्रणं प्रमादादित्यवगन्तव्यम्।

**संस्कारिका गीतिः, सा तानेव वर्णान् संस्करोति। तैरेव च प्रयुज्यते। इरापदवर्णैर्न प्रयुज्यते।** कथम्? **गिरापदवर्णस्वरूपप्रयुक्तत्वाद्गीतेः, इरापदे च** तदभावात्। नहि गीतिर्वर्णोद्देशेन विधीयते, येनापूर्वप्रयुक्ता स्यात्। समाम्नातमात्रं त्वस्याः, सा च वर्णेष्वेव समाम्नातेति वर्णप्रयुक्ता। **तस्माद्यथाभूतं** यथाम्नातमविकृत**मेवेरापदं** [1]प्रयोक्तव्यम्।

**ननु चैरमिति विकारे तद्धित उत्पन्नः। वर्णानाञ्च स्वर एव विकारो** नान्यः। **तस्मात्तद्धितशब्देनैव गीतिर्विकार उपदिश्यते।** कथमप्रगाणम्? उच्यते--**नात्र विकारे तद्धित उत्पन्नः, किं तर्हि स्वार्थ एवायं** तद्धितः। तेन **यावदेवोक्तं स्यादिरां कृत्वोद्गेयमिति तावदेवैरमिति।** अस्यार्थः— विकारार्थेऽपि तद्धिते न गीतिरेव विकार इति प्रमाणमस्ति, अप्रगाणस्यापि विकारस्य सम्भवात्। तत्र **यत्स्वरका**दिरापदात्तद्धितोत्पत्तिः, स एव स्वरोऽत्र तद्धितेनानूद्यत इत्युपपद्यते। अप्रगीताच्चेह तद्धित इत्यप्रगाणमेव स्यात्।

ननु प्रगीतादेव कस्मान्नोत्पद्यते। नहि तद्धितनिर्देशे स्वरविशेषः प्रगाण-मप्रगाणं वा निर्दिश्यते। तस्मात् प्रगीतादपि तद्धितः सम्भवत्येव, अत आह— **यदि च प्रगीतात्तद्धित उत्पद्येत, तथा सति "वृद्धं तालव्यं प्रथमस्वरं च" इति** कृत्वेकारस्य तालव्यत्वात् प्रथमस्वरत्वाच्चौच्छिक्योक्तः(?)अव्ययीभावः। [ आयीभावः ] स्यात्। **तत्राकारादित्वेन** वृद्धत्वात् **"वृद्धाच्छः" इति छो** भवेत्। **तथा चायीरीयमिति** रूपं **स्यात्। न चैवं** रूपं **श्रूयते। तदेवं** विकारार्थेऽपि तद्धिते **न** प्रमाणसिद्धिः, **तस्मात् स्वार्थे तद्धितः।** भाष्यकारस्तु विकारार्थे तद्धितमङ्गीकृत्याप्रगीतादुत्पत्तेरप्रगीतत्वमेव तेन विधीयत इत्याह ॥५४॥

## यत्स्थाने वा तद्गीतिः स्यात् पदान्यत्वप्रधानत्वात् ॥ ५५ ॥ सि०

**गिरापदगीतिरिरापदे कर्तव्या,** कुतः? **स्तोत्रापूर्वप्रयुक्ता हि गीतिः, न तु वर्णस्वरूपप्रयुक्ता।** समाम्नानमपि गीतेर्वर्णसंस्कारार्थम्। ते च न स्वरूपेण स्वसंस्कारमर्हन्ति, आनर्थक्यात्। अपि च वचनेनैव साम स्तोत्रार्थतया विनियुक्तं

---

1. **'तथाभूतम्' इत्यधिकः–मु० पा०।**

"यज्ञायज्ञीयेन स्तुवीत" इति। तस्मादपूर्वप्रयुक्ता गीतिः। **तस्मादिरापदाभावेऽपि गीतिरवतिष्ठते। सा च** गेयं प्रति **साकाङ्क्षा।** तथेरापदमपि स्तुतिसाधनत्वेन **विधीयमानं गीतिं प्रति साकाङ्क्षम्,** अप्रगीतस्य स्तुतिसाधनत्वायोगात्; यज्ञायज्ञियेन स्तुवीतेति वचनात्। **तस्मात्तयो**गिरापदगीतेरिरापदस्य च नष्टाश्वदग्धरथवत् **सम्बन्धः। ननु** चैरमितीराविकारे **तद्धितोऽयं न स्वार्थिकः, आनर्थक्यप्रसङ्गात्। तस्माच्छब्देनैव गीतिर्विधीयत इति** किमिति नोच्यते। अत आह—**सत्यं** विकारतद्धितोऽयम्, तथाप्यत्र पदे **चतस्रो वचनव्यक्तयः प्रतिभान्ति।** [1]**यद्वा इरापदगीतिं**[2] **तद्धिता**भिहितामनूद्य तत्सम्बन्धित्वेन प्रकृत्यभिहित**मिरापदं विधीयते। अथवा** विपरीत**मिरापदमनूद्य गीति**र्विधीयते। **अथवोभयं** प्रगाणमिरापदं च कर्तव्यमिति। **अथवा शुद्धमिरापदं** विधीयत इति। प्रथमपक्षस्तावन्न युक्त इत्याह—**तत्रेरापदस्य न लोकवेदयोर्गीतिः प्रसिद्धा। अप्रसिद्धत्वाच्च न शक्यानुवदितुम्।** नापि द्वितीय इत्याह—**इरापद**मप्य**प्रसिद्धत्वादेवाशक्यमनुवदितुम्, अपि च यदीरापदमनूद्य** गिरापद**गीतिर्विधीयते,** ततो **गिरापदनिवृत्तिर्न प्राप्नुयात्।** वर्णविधानेन हि वर्णा निवर्तन्ते तुल्यकार्यत्वात्, न तु **गीत्या वर्णा निवर्तन्तेऽतुल्यकार्यत्वात्।** वर्णानामर्थाभिधानं कार्यम्, गीतेस्तु तत्संस्कारः। **तत्र गिरापदप्रतिषेधानुवादो न प्राप्नोति। तत्र गिरापदस्य** च **भेदेन प्रतिषेधो वक्तव्यो** विधानव्यः[1]। **तस्मिंश्चोच्यमाने वाक्यभेदः** स्यात्। **अपि**

---

1. 'यद्वा' इत्यनेन निपातेनायमर्थो द्योत्यते—चतुर्षु वचनव्यक्तिविकल्पेष्वाद्यो विकल्पो निर्दिश्यत इति।

2. इरापदगीतिमित्यादितन्त्ररत्नस्थव्याख्यापदानुरोधात् 'इरापदगीतिं' विकारतद्धितीयामनूद्येरापदं विधीयते इति स्वरसो वार्त्तिकपाठः समुन्नीयते। पूनामुद्रितो यथाश्रुतपाठस्त्विरापदगीतिविकारे तद्धितोऽयमनूद्य इत्यादिः। स पाठ ऐरमिति। अयं तद्धितो गीतिरूपविकारे वर्तते। तद्धितेनानूद्य प्रकृत्या इरापदं विधीयत इति वाक्यं भित्वा क्लेशेन व्याख्येयः।

१. 'विधातव्यः' नास्ति—ख०।

**च गिरापदे** भेदेन प्रतिषिद्धे**ऽप्यनियमेन तत्स्थाने वर्णाः प्राप्नुवन्ति, नावश्यमिरापदम्** । ततश्च तदनुवादेन गीतिविधानमनुपपन्नम् । तृतीयं दूषयति—**अथोभयं** विधीयते—**गीतिरिरापदं च, तथा** सति **वाक्यभेदः** स्यात् । **विशिष्ट**विधानाददोष इति चेत्[1], तथापि गौरवं स्यादेव । किञ्च, नात्र गानं विशेषणं प्रत्ययार्थत्वात् । प्रकृत्यर्थभूतेरापदविशिष्टे तद्धितार्थे गाने विधीयमाने गानस्य प्राधान्यात्[2] संस्कारकत्वं न स्यात् । तस्मान्नोभयविधानम् । **तस्मादै**रपदे [ पदेन ] **प्रातिपदिक**मात्रं प्रकृतस्तोत्रसम्बन्ध्युद्गानसम्बन्धित्वेन **विधीयते । तच्च विधीयमानं गिरापदस्य या गीतिस्तां तत्कार्यापत्त्या** "धर्मस्यार्थकृतत्वात्" इत्यत्र वक्ष्यमाणतया [ माणया ] **लभते** । तथा लब्धा च तद्धितेनानूद्यते । यत्तु [3]भाष्ये प्रयोजनमुक्तम्—**यदि पूर्वः पक्षः प्रप्रपदं प्रप्रीपदं वा प्रयोक्तव्यम, यदि सिद्धान्तः प्रप्रीपदमेव प्रयोक्तव्यमिति, नैतदनन्तरस्याधिकरणस्य प्रयोजनं** घटते । कथमप्रगीतमिरापदं प्रयोक्तव्यं प्रगीतं वेत्येवं संशयं कृत्वा प्रगीतमित्यनन्तराधिकरणे निर्णयः कृतः । इदं पुनर्भाष्यं अधिकरणप्रयोजनं **पदप्रयोगविकल्पमाह—न प्रगाणा**प्रगाणविषये किञ्चिदाह कार्याकार्यत्वम् । **तस्मात् पूर्वाधिकरणस्य प्रयोजनमिदमाम्नातादन्यदित्यस्य प्रप्रपदं प्रप्रीपदं वा पूर्वपक्षे, सिद्धान्ते प्रप्रीपदमेवेति प्रमादात्तु** लेखकैरिह **लिखितम् । अप्रगाणादित्यस्य** त्वनन्तरस्येदं **प्रयोजनम् । अप्रगीतमिरापदं पूर्वपक्षे, सिद्धान्ते तु प्रगीतं प्रयोक्तव्यमिति । यत्पुनरिदं** भाष्यकारेणोक्तम्—"**नात्रो**दाहरणे **कश्चिद्विशेषः । अन्यस्मिन्नेतत् सदृशे प्रयोजनमस्तीति ।" "इदं वचनमिति चेत्", "न** तत्प्रधानत्वात्" **इत्यस्य सूत्रद्वयस्य प्रयोजनम् । अत्र हि** 'आइराचादाक्षासा' इति गानदर्शनं सिद्धान्तलिङ्गत्वेनोक्त्वा "वचनमिति चेत्", "न तत्प्रधानत्वात्" इति **सूत्र**द्वयेन

---

१. चेन्न–क० ।

२. अप्राधान्यात्–ख० ।

३. भाष्यकारेण–ख० ।

वचनत्वं निराकृतम्। तस्य किं प्रयोजनमित्याशङ्क्योक्तम्—नात्र कश्चिद्विशेष इति। तथाहि—**यदीरापदे वचनात् प्रगाणं यदि वा स्थानापत्त्या, सर्वथेरापदं प्रगीतं प्रयोक्तव्य**मिति न विशेषः, **प्रप्रीपदादीनां तु**[1] **न वाचनिकं प्रगाणमस्ति। किं तर्हि? न्यायादेव। तत्र यदीरापदे वचनेन गानं प्राप्यते,** ततः **प्रप्रीपदादीनां**[2] **वचनाभावादप्रगीतता स्यादिति** तद्व्यावृत्त्यर्थं लिङ्गं समर्थ्यते। लिङ्गं ह्येकत्रापि स्थितं समानन्यायं सर्वमभिद्योतयति। यत्तु कैश्चिदुक्तं द्वयोरपीदं प्रयोजनम् 'तद्गेयम्' इति वचनान्न विकल्पः, नाप्रगाणम्। प्रप्रीपदे तूभयं निरसनीयमिति तदेव प्रयोजनमिति, तदयुक्तम्। यथा 'प्रप्रीति ब्रूयात्' इति वचने सत्येव विकल्पाशङ्का, तथा तद्गेयमित्यपि वचने स्यादेव सा। अतः पूर्वाधिकरण इरापदेऽपि प्रयोजनमस्त्येव। अत्र प्रप्रीपद एव। अतो न द्वयोः प्रयोजनमित्यास्तां तावत् ॥ ५५ ॥

**तस्मात् प्रप्रीपदादीनां नैव स्यादप्रगीतता।**
**पदान्यत्वप्रधानत्वाद्वाक्यस्य स्यात् प्रगीतता ॥**

**इति श्रीमद्यज्ञात्मसूनुपार्थसारथिमिश्रकृतौ**[3] **तन्त्ररत्ने**
**नवमाध्यायस्य प्रथमः पादः ॥**



[ १—रथन्तरादिशब्दानां गीतिवाचित्वाधिकरणम् ]

## सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥ पू०

न प्रगीतो मन्त्रः साम, अपि तु गीतिमात्रमिति सप्तमसिद्धमेवोत्तरचिन्तार्थं [4]पूर्वपक्षेण सह स्मार्यते—सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम्, तदुक्तदोषम्

---

१. प्रप्रपदादीनां-क०, प्रप्रीपदे तु-पू० मु०।

२. 'तु' अधिकम्-पू० मु०।

३. इति तन्त्ररत्ने-क०।

४. सह पूर्वपक्षेण-ख०।

इत्यनेन सूत्रद्वयेनेत्युक्त्वा व्याख्यानान्तरं भाष्यकारेणारब्धम्। ऊह्य सामानि नित्यानि, न चेत् [ न वेति ]।

तत्राध्येतॄणां नित्यत्वस्मरणात्, 'ऊहश्चिकीर्षितः' इति च ब्राह्मणे सना[1] कर्तुमिष्टत्वोपदेशाद् अनित्यस्य चानिष्टत्वान्नित्यानीति पूर्वपक्षमुक्त्वा, अतिदेशवचन-मूलन्यायादेव प्रयोगसंभवात्, पाठस्य च प्रयोगकाले[१] सौकर्यार्थतयोपपत्तेरनित्यानि। ब्राह्मणोपदेशस्तु कर्तुमिष्टत्वप्रतिपादनात् प्रत्युतानित्यत्वमेव प्रतिपादयतीति[२] सिद्धान्तः कथितः। तमाक्षिपति—**तदुक्तदोषमि[३]त्येतदयुक्तम्। कथम्? "कवतीषु रथन्तरं गायति" इति कवत्यस्तावन्न कृतकाः, [४]रथन्तरमपि नैव कृतकम्। यदप्यतिदेशवाक्यं कवतीषु रथन्तरं गायतीति। तदपि नैव कृतकम्। तस्मादूहग्रन्थे[५] न किञ्चित् कृतकं पश्यामः। अत्रोच्यते—रथन्तरगीतौ कवतीषु गीयमाणायां पुरुषस्य गीतिक्रियां प्रति यः प्रथमः प्रयत्नः, स कृतकः** कवतीषु। एतदेव विवृणोति—**समाम्नाये[६] तावदभिवत्यां रथन्तरगीतिर्दृष्टा। [७]अतिदेशसामर्थ्यात्त्व-न्यासु कवत्यादिषु क्रियते। यथा [८]प्रयाजादीनां नित्यानामपि यदनुष्ठानं तत् कृतकम्। तच्च तर्के[९] एवमिहापि** कवतीषु रथन्तरस्यानुष्ठानं विधिवशात्

---

1. सनेति। सन्प्रत्ययेनेत्यर्थः।
१. प्रयोगः काल—ख०।
२. ज्ञापयतीति—ख०।
३. इति ह्येतत्—पू० मु०।
४. रथन्तरेत्यारभ्य पश्याम इत्यन्तं नास्ति—क०।
५. ऊहे—पू० मु०।
६. समाम्नायेन—पू० मु०।
७. सामर्थ्याच्च साऽन्यत्र नियता [ नीयते ]—पू० मु०।
८. प्रयाजानां—ख०।
९. तच्च तर्क—क०।

पुरुषेण स्वयं क्रियते, न त्वाम्नानसिद्धम्। [1]अपि च यद्युत्तरयोरिति [ योरपि ] समाम्नातं स्यात्ततस्तयोरपि सिद्धत्वात् तासामो[ तासामेवो ]त्पत्तिस्थानत्वेन योनित्वाद्योन्युत्तराविर्भावोऽपि [ विभागोऽपि ] न स्यात्। उत्तरयोर्गायत्यादिकं [ 'गायति' इत्यादिकं ] वचनं वानर्थकं स्यात्, समाम्नानादेव तत्रापि सिद्धत्वात्। तस्मान्न तत्राम्नानसिद्धिरभिवत्यामेव त्वाम्नानसिद्धिरिति ॥ १ ॥

[ २—साम्नामृक्संस्कारकर्मत्वेन प्राधान्याधिकरणम् ]

## कर्म वा विधिलक्षणम् ॥ ३ ॥ पू०

**ननु सप्तमे निर्णीतं संस्कारकर्म सामेति**—"अपि तु कर्मशब्दः स्यात्" इत्यत्र। तस्मात् पुनरुक्तमेतत्। **उच्यते—यदि प्रधानकर्म** साम **अथ गुणकर्म, सर्वथाप्यतिदेशस्य** साप्तमिकस्य **सिद्धिः**। अन्यत्रोत्पन्नस्य ह्यन्यत्र गमनमतिदेशः। स चोभयथापि सिद्ध्यतीति न तत्रैतत्प्रतिपादितम्। इहत्यमेव तु प्रसङ्गान्नीतम्। **इह तु गुणप्रधानताऽवश्यं विचारणीया**। तथा हि—**यदि** गीतिः **प्रधानं ततो गीत्यनुरोधेन वर्णा** भवन्ति, प्रधानानुरोधित्वादङ्गानाम्[2]। अतश्च प्रधानभूतगीत्यन्यथाभावपरिहाराय योनिवर्णवशेन गातव्यं भवति। **अथ गुणभूता** गीतिः, **ततो विपरीतं** वर्णानुरोधेन गीतिः। अतश्चोत्तरावर्णवशेन गातव्यं भवति, अन्यथाऽक्षरसंस्कारायोगात्। यत्र [3]चाल्पान्यक्षराणि महती गीतिः, यत्र वा बहून्यक्षराण्यल्पा गीतिस्तत्राप्यस्ति गुणप्रधानाभ्यां[4] विशेषः। तस्मादूहोपोद्घाततयेहैवेदं चिन्त्यत इत्यपुनरुक्तम्।

तत्र गीतिनामभ्यो रथन्तरादिशब्देभ्यो द्वितीयादर्शनाद् गीतेरेव प्राधान्यं नाक्षराणाम्। अपि च, दृष्टो वाभिव्यक्तिरूपोऽक्षराणां संस्कारः स्याददृष्टो वा, तत्राभिव्यक्तिस्तावत्कर्मकाल एव कार्येत्यकर्मकाले साम्ना प्रयोगोऽनर्थकः स्यात्।

---

१. अपि च ··· तत्रापि इत्यन्तस्य स्थाने 'अपि च यदुत्तरं यो देवतात्रापि' इति पाठः—क० ।

२. गुणानाम्—ख० ।

३. वा—क० ।

४. प्राधान्यानाम्—क० ।

अथ बहिःप्रयोगस्यादृष्टफलार्थता, मध्ये कर्मणस्तु दृष्टार्थतेत्युच्यते, तदर्थवैश-सभयाद् दृष्टसंस्कारार्थत्वम्, तथा सति बहिरेव संस्कृतान्यक्षराण्याधानसंस्कृताग्नि-वक्त्रतो[ वत् क्रतो ]रुपकुर्वन्तीति क्रतुमध्ये साम्नः प्रयोगो न स्यात्। अपि चाविनियुक्तत्वादक्षराणां न संस्कारभाक्त्वम्, नहि तेषां वाक्यान्तरेण विनियोगोऽस्ति।

ननु क्रमप्रकरणलिङ्गै[1]र्विनियुक्ता एवर्चः। नैवमुत्तरयोरेव क्रत्वर्थः प्रकरणपाठः, योनेस्त्ववध्यर्थो न क्रत्वर्थ इति। तस्यास्तावन्न संस्कार्यताऽवकल्पत इति। अतो विनियोगाभावमाह—सामविधिस्तु नर्चो विनियोगायालम्, नहि संस्कारविधयः संस्कार्यं विनियुञ्जते[2] होमविधिरिव सक्तून्। तस्मादकर्मकाले प्रयुज्यमानं विश्व-जिन्न्यायेन स्वर्गफलं प्रधानकर्म साम क्रत्वर्थमपि चार्थकर्मैव, न संस्कारकर्म साम। ऋचस्तु द्रव्यकर्म समुच्चारणन्यायेन गीतेर्द्रव्यतया गुणभूता इति प्राप्तेऽभिधीयते—साम्ना तावदक्षराणि प्रत्यक्षमभिव्यज्यन्ते। तैश्चाभिव्यक्तैः स्तुतिर्गुणाभिधानात्मिका प्रत्यक्षमेव क्रियते। सा च क्रत्वङ्गम्, 'आज्यैः स्तुवते' इत्यादिवचनात्। एवं दृष्टे संभवति नादृष्टकल्पनावकाशः। अकर्मकाले प्रयोगस्तु भूमिरथिकवच्छुष्केष्टिवच्च शिक्षणार्थः। [3]नह्यशिक्षितं कर्मकाले प्रयोक्तुं शक्यते। स्वाध्यायविधिबलाच्चाकर्मकाले व्रतनियमादीति[4]कर्तव्यतोपेताध्ययनगृहीतं सामकर्माङ्गमित्यवधारणान्न कश्चिद्दोषः। यत्त्वविनियुक्तत्वान्नाक्षराणां संस्कार्यत्वमिति; तत्राभ्युपेत्यापि क्रमप्रकरणविनियोगा-भावमुच्यते—अस्त्येवैषां विनियोगः सामविधिनैव। न तु [ ननु ] संस्कारविधिर्न संस्कार्यं विनियोक्तुं क्षम इत्युक्तम्। सत्यम्, यत्र संस्कारमात्रपर्यन्तो विनियोग-स्तत्रैवम्। इह तु साम्नः स्तुतिपर्यन्तो विनियोगः। सामविधिर्हि रथन्तरं गायतीत्यादिः प्रयोजनमपेक्ष[5]माणोऽदृष्टकल्पनादौर्बल्याद् दृष्टमेव स्तुतिर्नि[ स्तुतिनि ]र्वृत्तिप्रयोजन-

---

१. णैर्लिङ्गै–ख०।
२. बिनियुंक्तो–ख०।
३. न त्व–ख०।
४. नि–क०।
५. मपेक्ष्य–क०।

मङ्गीकरोति। केषाञ्चित्तु प्रत्यक्षवचनेनैव स्तुत्यर्थता, यथा—'रथन्तरं पृष्ठं भवति' इति। तस्मात् स्तुत्यर्थं तावत्साम। साचगर्क्षराभिव्यक्तिद्वारेण[1] साम्ना शक्या कर्तुं नान्यथेति। दृष्टशक्त्यनुसारिणः[2] सामविधेरयमर्थः—[3]साम्नर्गक्षराभिव्यक्तिद्वारा स्तुतिं कुर्यादिति। ततश्च सामसंस्कृतैर्ऋगक्षरैः स्तुतिं कुर्यादित्युक्तं भवति। तस्मादृचो विनियुक्ताः स्तुत्यङ्गभूताः। तथा चाह भाष्यकारः—स्तुत्यर्था ऋचः। सामार्थत्वमन्याय्यमिति। सूत्रकारोऽपि 'उपदेशाच्च साम्नः' इति सामोपदेशा-दृगुपदेशमदीदिशत्। किञ्च, ज्योतिष्टोमप्रकरणे स्तोत्रक्रमेणार्चः पठिताः। क्रम-प्रकरणाभ्यामपि विनियुक्ताः। न च योनेर्न क्रत्वर्थः पाठ इति प्रमाणमस्ति, प्रकरणपाठाविशेषात्, तृचविधिना चक्त्रयस्यापेक्षितत्वात्। तत्[4] संस्कारकर्म साम। अयं च न्यायप्रदीपः स्वाध्यायाध्ययनस्याप्यर्थज्ञानार्थस्य स्वाध्याय-संस्कारार्थत्वमभिद्योतयितुमारोपयितव्यः, [5]यमारोपयितुं धीदारिद्र्यादशक्नुवता-न्धीभूतेन केनापि संस्कारकर्मत्वमदृष्ट्वा [6]नियोगविषयत्वादध्ययनं प्रधानकर्मेति प्रलपितम् ॥ ३ ॥

[ ३—तृचे प्रत्यृचं सामसमापनाधिकरणम् ]

## तृचे स्याच्छ्रुतिनिर्देशात् ॥१४॥ पू०

**ननु च[7] 'तृचे वा लिङ्गदर्शनात्' इति तृचे साम गेयमित्येतद्दशमे स्थापितम्। [8]आधस्त्ये चाधिकरणे संस्कारकर्म सामेति स्थितम्। प्रति-**

---

१. णैव—ख० ।

२. विधायिनः—ख० ।

३. 'रथन्तरं दृष्टं भवति' इत्यधिकम्—क० ।

४. तस्मात्—ख० ।

५. समा—क० ।

६. 'नियोग इति' नास्ति—क० ।

७. न तु—क० ।

८. आधस्त्ये वा—क० ।

संस्कार्यं च संस्कारावृत्तिर्न्यायसिद्धैवेति। अतो व्यासज्य गानपक्षो नैवोत्तिष्ठति। उच्यते—दशमे तावदन्यैव चिन्ता तृचे साम गेयं न द्वयोर्ऋचोरेकस्यां वेति। इह तु तृचे गाने स्थिते किं प्रत्यृचमुत व्यासज्येति चिन्ता। यत्तु न्यायात् प्रत्यृचं गानं सिद्धमित्युक्तम्, तदुच्यते—श्रुत्या न्यायबाधं मन्वानः पूर्वपक्षमारभते। कया श्रुत्या? तामाह—'एकं साम तृचे क्रियते' इत्ययं करोतिधातुर्धात्वर्थसामान्यात्मकभावनावचनो विशेषवाचिना धातुना[1] [विना न] निराकाङ्क्षीभवति, नान्यथा। साध्यतया च भावनायाः सामान्यत्वं विशेषणत्वाच्च धात्वर्थानां विशेषत्वम्, न तु गोत्वादिवदित्युक्तं भावार्थाधिकरणे[2]। तस्मादयं क्रियाविशेषेण[१] निराकाङ्क्षीकर्तव्यः। साम च गानक्रियात्मकम्। तत्र द्वितीयासंयोगादीप्सितं ([२]चासंयोगादीप्सितम्) यागादिस्थानीयं गम्यते। द्वितीयासंयोगादिति द्वितीयार्थेन क्रियत इत्यनेन कर्मोत्पन्नलकारेण सामानाधिकरण्यादित्यर्थः। तस्मादनेन साम्ना निराकाङ्क्षीक्रियते सामान्यधातुः, तेन धातुविशेषस्थानीयं साम जातम्। तस्य धातुविशेषस्थानीयस्य निर्वर्तकत्वेनाङ्गत्वेन तृचो विधीयते। त्रित्वमृ[३]गानं [मृग्गतं]

---

1. धातुना न निराकाङ्क्षीक्रियत इति पूनासंस्करणे पाठो दृश्यते यद्यपि, तथापि व्याख्यास्वरसाद् धातुना विना न निराकाङ्क्षीभवति—इत्येव मूलपाठो युक्तः प्रतिभाति।

2. "धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते। तथापि सर्वसामान्यरूपेणैवावगम्यते॥" इति वार्त्तिकस्यापीयमार्थी भावना धात्वर्थनिरूप्यत्वात् तदघटितरूपेण न भाति, किन्तु धात्वर्थव्यावर्तितस्वरूपेणैवावभासत इत्येवार्थो ग्राह्य इत्यभिप्रायः।

१. विशेषणो–क०।

२. ( ) एतच्चिह्नाङ्कितमधिकं खकोशे।

३. ऋच–ख०।

विधीयत इत्यर्थः । प्रधानानामपि च चा [ ऋचा ] मार्थिकं[1] साधनत्वमस्त्येवेत्युप-पन्नमृग्गतस्य त्रित्वस्य साधनपरिच्छेदकतया सामाङ्गत्वम् । किं पुनः कारणमेव-माश्रयणे ? यावता समानपदस्था [ स्थायाः ] ऋच एव स्तोत्राङ्गभूतायाः स्त्रित्वमङ्गं युक्तम्, अत आह—**एवं क्रियत इत्यभूतप्रादुर्भाववचनः** शब्दो**ऽनुगृहीतो** [2]भवति । **इतरथा यत्सामर्चं संस्कुर्यात्,** [3]**तत्तृचमि**त्येवं सामसंस्कार्य-स्तोत्राङ्गभूतर्गनुवादेन त्रित्वे विधीयमाने[4]**ऽभ्यासलक्षणा प्राप्नोति करोतेः—** एकं साम तृचेऽभ्यस्येदिति । प्रत्येकं हि तदा सामाभ्यस्यते, न तु तिसृषु क्रियते । तस्मात् करोतिश्रुतिसामर्थ्याद् व्यासज्य गानम्, **अथवान्यः श्रुतिप्रकारः ।** यदि [5]**चर्गनुवादेन तृचो विधीयते, तथा सति** द्वयोर्नाम्नोस्त्रिशब्दऋक्शब्दयो-र्भावनावचनेन क्रियत इत्यनेन संबन्धो विधीयते, तदत्यन्तं वाक्यं स्यात् । अस्म-त्पक्षे तु धात्वर्थे सामकरणे तृचो विधीयते, [6]अतः श्रुत्यनुग्रहः[7] । अथवाऽन्या श्रुतिः । **यदि चर्गनुवादेन तृचो विधीयते, तथा सत्येकोऽर्थस्त्रित्वं विधीयमान-त्वाद्** वस्तुतो **गुणभूतः, शब्दवृत्तेन चा**प्रधानभूतः । शब्दतो वस्तुतश्चाप्रधान-भूतं त्रित्वमित्यर्थः । **अपरस्तु** ऋक्शब्दार्थ **उद्दिश्यमानत्वाद्व**स्तुतोऽपि **प्रधान-भूतः,** तथा **शब्दवृत्तेन चागुणभूतः** प्रधानभूतः । **तत्र द्वयोः**[8] **सापेक्षत्वादस-मासः स्यात्, तृच इति च समासोऽयम् । तस्मात्** समासश्रुते**रपि धात्वर्थे किञ्चिद्विधानमिति**[9] समासे हि समस्यमानानि पदान्येकप्रसराणि भवन्ति । न

---

१. कसाधन—ख० ।

२. भविष्यति—ख० ।

३. तत्तृच—पू० मु० ।

४. विधीयते—क० ।

५. चर्या—ख० ।

६. तत्र—ख० ।

७. ग्रहं—ख० ।

८. तयोः—ख०, पू० मु० ।

९. 'इति' नास्ति—ख० ।

प्रसरभेदं सहन्ते, [१]प्रसरभेदापेक्षे चोद्देशोपादाने या ऋचस्तास्तिस्र इति । ततश्च [२]प्रसरभेदापेक्षणादसमासः स्यात् । **अपि च सप्तम्याधारत्वं तृचस्य प्रतिपाद्यते । तत्र यद्येकस्यां सामाधीयते, तथा** सति **सप्तमी बाध्येत** तिसृषु श्रुता । अतः सप्तमीश्रुत्यापि व्यासज्य गानमिति ॥ १६ ॥

**वाक्यानां तु विभक्तत्वात् प्रतिशब्दं समाप्तिः स्यात् संस्कारस्य तदर्थत्वात् ॥ १७ ॥ सि०**

**प्रत्यृचं वा गेयम् कुतः ? सा ह्यृक् स्तोत्रसाधनतया** क्रमप्रकरणसहायेन लिङ्गेन **विहिता । सा** स्वरमुच्चारणविशेषं **वर्णानां संस्कारकमनियमेनाकाङ्क्षति । तत्र साम नियम्यते संस्कारकत्वेन** "रथन्तरं गायति, रथन्तरं पृष्ठं भवति" इत्यादिवचनैः, [३]न तु साक्षात् स्तुतिसाधनतया सामर्थ्याभावात् । **तस्माद्वाचनिकमपि साम** क्रमप्रकरणप्राप्तऋक्संस्कारद्वारेणैव[४] स्तोत्रेण[५] संबध्यते, यथारुणगुणः[1] । किञ्च, वचनमप्यस्ति "ऋचि साम गायति", "कवतीषु रथन्तरं गायति" इत्यादि । यद्यपि चात्र सप्तमीनिर्देशात् पारार्थ्यमृचां [६]प्रतिभाति, तथापि प्रयोजनवत्त्वात्तासामेव प्राधान्यम्, साम्नां तु स्तोत्रसाधनसंस्कारकता । ततः किमित्याह—**एकं साम तृचे क्रियत इति निर्ज्ञाते** साम्नि **संस्कारके** [७]**गुणवाक्य-**

1. यथारुगुण इति कपाठः, यथारुण इति खपाठः । उभयोः समावेशनेनास्माभिर्यथारुणगुण इति निवेशितम् । यथा ऋग्गुण इति तु पूनामुद्रितः पाठः ।

१. प्रसरण—क० ।

२. प्रसरण—क० ।

३. ननु—क० ।

४. संस्कारेणैव—क० ।

५. स्तोत्रे—क० ।

६. 'प्रति' नास्ति—ख० ।

७. गुणवचनमिदम्—ख० ।

**मिदम्**। तत्र **योऽप्राप्तो गुणः स विधीयते**। **यत्साम्ना**[1] **ऋचं संस्कुर्यादिति** संस्कार्यतया प्राप्तामृचम**नूद्य तास्तिस्र इति**[2] त्रित्वं **विधीयते**। तथापि किमित्याह—**व्यासज्यगाने तु न साम्ना** स्तोत्रसाधन**मृक् संस्क्रियते, ऋगेकदेशः संस्क्रियेत**। कथमित्याह—**नह्यृगेकदेशतः**[3] **स्तुतिं करोति**, कृत्स्नाया ऋच एकवाक्यत्वेन स्तुतिसाधनत्वात्। अत एव **न चर्गेकदेशस्य स्तोत्रीयेण** साम्ना **संस्कारोऽपेक्षितः, ऋच** एव **स्तुतिसाधनत्वात्**। साधननिवेशि[4](त)**त्वात्** संस्काराणाम्। व्यासज्यगाने चैकस्यामृचि सामैकदेशो गीयेत। तेन चर्गेकदेश एव संस्क्रियते न[5] कृत्स्ना। ततश्च साधनसंस्कारत्वाभावात् साम्नः स्तुतिसाधनता श्रुता **हीयेत**[6]। किञ्च, न कृत्स्नेन साम्ना स्तुतिः साधिता स्यात्, किन्तु सामैकदेशेन। कृत्स्नेन तु साम्ना स्तुतिसमुदायः साधितः स्यात्। **तस्माद्व्यासज्यगाने कृत्स्न**मेव रथन्तरं पृष्ठं भवति, यज्ञायज्ञियेन स्तुवीतेत्यादि[7]**वाक्यमनर्थकं** प्रसज्येत[8]। नहि साधनैकदेशपरिच्छेदे साधनत्वं घटते, नापि सामैकदेशः सामशब्देनोच्यते, नापि स्तुवीतेत्यनेन स्तुतिसमुदायः। तस्मात् प्रधानवाक्यानुरोधेन गुणवाक्यं वर्णयितव्यमिति[9] सामसंस्कार्याणामृचां स्तोत्राङ्गभूतानामनेन त्रिसंख्या विधीयते, न तु सामाङ्गत्वेन। ततश्च 'तिसृभिः स्तुवीत' इत्येतावदत्र

---

१. सामर्चं—क० ख०।

२. तत्तिस्र—ख०।

३. देशः—पू० मु०।

४. तत्त्वाच्च—ख०।

५. न तु—ख०।

६. हीयते—ख०।

७. दिगाने—ख०।

८. प्रसज्यते—क०।

९. नीयमिति—ख०।

विधित्सितम्। तत्संस्कारत्वेन[१] च प्राप्तमेव सामगानं 'साम क्रियते' [२]इत्यनेनानूद्यते, अनुवादत्वाच्चाभ्यासलक्षणापि न दोष इति।

**पादप्रगीतेषु पाद एव गानं कर्तव्यम्, पाद एव हि तत्परिपूर्णं वाक्यम्। यथा 'गोष्ठः, वासिष्ठः'** [३]**इत्येतदयुक्तं भाष्यम्। कथम्? ऋच्येव ह्येते** अपि[४] च गोष्ठ[५]वासिष्ठे नाम[६] **सामनी उत्पन्ने, न तु**[७] **पादे**। ननु चाम्नानवेलायामेकस्मिन्नेव[८] "परीतोऽषिञ्चता सुतम्" इत्यस्मिन् पाद एते गीयेते; न तु पादान्तरेषु "सोमो य उत्तमं हविः" इत्यादिषु। तत्कथ[९]मृच्युत्पन्ने[१०] इत्युच्यते? अत आह—**समाना गीतिश्चतुर्ष्वपि** पादे**ष्विति** कृत्वैकस्मिन्नेव[११] पादे गीयते। ततश्च प्रदर्शनार्थत्वादितरेष्वपि गीतमेवेति कृत्वा **लाघवात् त्रिष्वपि**[१२] **पादेषु न गीयते** समाम्नान[१३]वेलायां **यथा "तेभ्यो दश प्राचीः"** इत्यत्र **मन्त्रे**ऽनुषङ्गि पदम् "नमो रुद्रेभ्यो ये पृथिव्याम्" इत्यादि त्रयाणां साधारणं सर्वार्थं सकृदेवाम्नायते, यथा वार्धर्चप्रगीतानि नार्धर्चान्तरे गीयन्ते, द्वयोरप्यर्धर्चयोः समाना गीतिरिति कृत्वा[१४]। कथं पुनरनाम्नातमेव गानं [१५]पादान्तरेषु शक्यं

---

१. संस्कारकत्वेन—ख०।

२. इत्यनूद्य—ख०।

३. इति भाष्यम्। तदयुक्तम् कथम्—ख०।

४. 'अपि च' नास्ति—ख०।

५. गोष्ठे—क०।

६. 'नाम' नास्ति—ख०।

७. न तु साम्ना न केवलाया—क०।

८. 'पादे' अधिकं—क०।

९. कथमुमृच्यु—क०।

१०. व्रत्यु—क०।

११. अपि—क०।

१२. 'अपि' नास्ति—ख०।

१३. समाम्नात—क०।

१४. तथेहापि कथं—ख०।

१५. वादान्त—क०।

कर्तुम्, अर्धर्चप्रगीतवदिति ब्रूमः। तद्धि द्वयोरपि समाना गीतिरिति कृत्वा एकत्रैवाम्नातमितरत्रापि गीयते। तथा[1] पादप्रगीतमपि। तस्मादिमे अभ्यृच्ये च [व]कर्मप्रयोगवेलायां सामनी[2] गेये। यदि च पाद एव गीयेयाताम्, ततो यदि तावदितरैः पादैरप्रगीतैरेव स्तुवीत,[3] ततः साम्ना स्तुवीतेति वचनं बाधेत। अथ तान् पादान्नैव प्रयुञ्जीत, ततः समाम्नानानर्थक्यं स्यात्। तस्माद्यद्यपि पाद एवार्थसमाप्तिः सम्भवति, तथापि विध्यर्थवादन्यायेन कृत्स्नाया[4]मेवार्थसमाप्ति-मङ्गीकृत्य सामगानं कर्तव्यम्, अन्यथा वाक्यभेदान्मन्त्रभेद एव स्यात्, नैकमन्त्र्यम्। अपि **च पादोत्पन्नाया** अपि गीतेः **पाद एव** प्रगाणं **छान्दोग्ये नैव दृश्यते ऊहे**। तदभ्यृचि गानमिति ॥ २० ॥

[ ४—समानच्छन्दस्कास्वेव तिसृषु ऋक्षु गानाधिकरणम् ]

## तदभ्यासः समासु यात् ॥ २१ ॥ सि०

नियमशास्त्राभावात् समासु [5]विषमासु वा गेयम्, 'तृचे क्रियते' इत्यस्य सर्वथाप्युपपत्तेरिति पूर्वः[6] पक्षः। [7]**नैवम्**, यत एवेदं वचनं साधारणम्, अत एवाश्रुतसंशरविलेशपरिजिहीर्षया समास्वेव[8] गातव्यम् ॥ २२ ॥

[ ५—उत्तराशब्दार्थः, उत्तराग्रन्थपठिता ऋच एव ]

## नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत ॥ २३ ॥ सि०

रथन्तरमुत्तरयोर्गायतीत्यत्र पूर्वपक्षवाद्युत्तराशब्दं[9] संख्याशब्दं **मन्यते**।

---

१. 'इहापि' अधिकम्—क०।
२. सामनी गीयेते—क०।
३. स्तुत—क०।
४. मेवचर्यर्थं—ख०।
५. 'विषमासु' नास्ति—क०।
६. पूर्वं—क०।
७. नैव—क०।
८. समासे च—क०।
९. उत्तराशब्दं संख्याशब्दं पूर्वपक्षवादी—ख०।

[1]**यद्योन्यां तदुत्तरयोर्गायतीत्यस्माद्वाक्याद्योन्युत्तरे** योन्यपेक्षया द्वितीया [2]तृतीया [3]चर्चौ **गम्येते** संख्याशब्दत्वात्, **प्रकरणात्तूत्तराग्रन्थसमाम्नाते। प्रकरणाच्च वाक्यं बलीयः।** तस्माद्योन्युत्तरयोरेव ग्रहणम्। एतच्चातिशयार्थमुक्तम्। [4]परमार्थमाह—**अथवा यद्योन्यां तदुत्तरयोरिति योन्युत्तरे वाक्याद**वगम्येते, **उत्तराग्रन्थपठिते च वाक्यादेव।** योनयो हि क्वचित्प्रदेशे कयाचिदानुपूर्व्या पठिताः। रथन्तर[5]योनिः बृहद्योनिरित्येवम्। तत्पर्यालोचनया यद्योन्या तदुत्तरयोरिति वाक्याद्रथन्तरस्य बृहद्योनौ गानं प्रतीयते। उत्तराग्रन्थे तु रथन्तरस्य योनिमभिभवती[6] [ अभिवर्ती ] पठित्वा 'न त्वा [7]वाम्' इत्युत्तरापाठः। ततः सामान्तराणामप्येवमेव योनय उत्तराश्च पठिताः। तत्पर्यालोचनया यद्योन्यामित्यस्माद्[8] वाक्याद्रथन्तरस्य न त्वा[9] इत्यत्र गानं प्राप्नोति। **तस्मादुत्तरा**शब्दस्य संख्याशब्दत्वाद**नियमः। सिद्धान्तस्तूत्तराशब्दो [10]नूढ्या [ रूढ्या ] ग्रन्थे प्रसिद्धः, उत्तरा वर्तन्ते, उत्तरा अध्यापयाम इति** प्रयोगात्। ननु [11]संख्यायामपि रूढ एवेति कोऽत्र विशेषः? अत आह—**तस्मिन्नुत्तराग्रन्थाधीते गृह्यमाणे न पदान्तरं सन्निधानं चापेक्षितव्यम्। योन्युत्तरासु तु**

---

१. तेन यद्यो–ख०।

२. 'तृतीया' नास्ति–क०।

३. चर्चो–ख०।

४. पदमात्र–ख०।

५. योर्बृ–क०।

६. वन्ती–क०।

७. 'वाम्' नास्ति–क०।

८. देव–ख०।

९. त्वावाम्–ख०।

१०. रूढ्या–ख०।

११. संशब्दस्य संख्याशब्दत्वादनियमायामपि रूढः–क०।

**गृह्यमाणासु** सम्बन्धिशब्दत्वात्[1] **प्रकृतत्वमपेक्षितम्**[2], **तत्र विलम्बितः प्रत्ययः, इतरत्र त्वविलम्बितः**[3] प्रत्ययः ( प्रत्यय ) इति ।

[ ५—अथवा त्रैशोकसाम्न उत्तराग्रन्थपठितयोर्बृहत्योरेव गानाधिकरणम् ]

एवं वा द्वादशाहस्य[4] पार्ष्णिकं [ पाष्ठिकं ] चतुर्थमहरेक[5]विंशस्तोमकं शोडशिसंस्थम् । एकविंशः षोडशी वैराजं सोमेति [सामेति] । तत्र त्रैशोकं नाम ब्रह्मसाम । तस्यातिजगती योनिः । उत्तरे[6] बृहत्यौ तत्र संशरविलेश[7]परिहारायान्ये उत्पत्तिजगत्यावानेये । वचनं चातिजगतीषु स्तुवत इति, अतिजगती बहुत्वं दर्शयति । तस्मादन्ययोरागम इति पूर्वः पक्षः । सिद्धान्तस्तु यद्योन्यां तदुत्तरयोरिति वचनात् प्रकरणाच्च न्यायप्राप्तसामगानबाधेन संशरविलेशौ[8] सोढ्वा[9] बृहत्योरेव गेयम् । यत्त्वतिजगतीति बहुत्वमिति, तस्योत्तरं सूत्रम्—**ऐकार्थ्याच्च**[10] **तदभ्यास इति** ।

तत्र भाष्यमेक**विंशतिकृत्वः षोडशिन्यभ्यस्यमाने त्रैशोकस्य सप्तकृत्वोऽभ्यास** इत्यनुभाष्याक्षिपति--**एतदयुक्तम्** । **नहि द्वादशाह एकविंशतिकृत्वः षोडशिनः प्रयोगः** । अस्यार्थः--न तावदत्र भाष्ये षोडशिशब्देन स्तोत्रमुच्यते, त्रैशोकस्यातत्साधनत्वात् । ब्रह्मसामैव हि तत् । अतः क्रतुरेवोच्यते । न[11] तस्यैकविंशतिकृत्वः प्रयोगः । **तस्मादन्योऽस्य** भाष्यस्य **वाक्यार्थः । एकविंशः षोडशीति** वचनात् **सर्वस्तोत्राणि षोडशिनि**

---

१. 'शब्दत्वात्' नास्ति–क० ।
२. पेक्षितव्यम्–ख० ।
३. त इति–ख० ।
४. हिकम्–ख० ।
५. एकं–ख० ।
६. रे द्वे–ख० ।
७. विलेपश–क० ।
८. विलशो–ख० ।
९. सौढ्वा–क० ।
१०. एकार्थ्याच्च–क० ।
११. 'च'–ख० अधिकम् ।

**एकविंशानि भवन्ति ।** तत्रागमेन संख्यापूरणं पचमानेष्वेव स्तोत्रान्तरेष्वभ्यासेन **तत्रैकविंशतिकृत्वस्सम्पत्तये** ब्रह्मसाम्न्यभ्यस्यमाने तत्साधनस्य **त्रैशोकस्य** तिसृष्वृक्ष्वभ्यस्यमानस्य प्रत्यृचं योनेरतिजगत्याः[1] **सप्तकृत्वोऽभ्यासः**[2] । **तस्मिन्नभ्यस्यमाने सप्तातिजगत्यो भवन्ति । एवमतिजगतीबहुत्वं भविष्यतीति ।** भाष्येऽपि[3] षोडशिन्यभ्यस्यमान इति **न**[4] सामानाधिकरण्यम्, किन्तु षोडशिनि क्रतावेकविंशतिकृत्वः स्तोत्रेऽभ्यस्यमान इति ॥ २३ ॥

[ ६—बृहद्रथन्तरयोः स्वयोन्युत्तराप्रग्रथनेन सम्पादितककुभोरेव गानाधिकरणम् ]

## प्रागाथिकं तु ॥ २५ ॥ सि०

'एकं साम तृचे क्रियते' इति **त्रित्वमृचां**[5] श्रुतम्, 'ककुभावुत्तरे' इति च ककुब्द्वयं श्रुतम्, न[6] तद्द्वयमपि प्रग्रथने क्रियमाणे सम्पादितं स्यात् । तस्मात् स्मरणं बाधित्वा श्रुतिबलादुत्पत्तिककुभावागमयितव्ये । एवं **च**[7] ककुभामुत्पत्तिरर्थवती भविष्यति, नैवम्; प्रग्रथनेन[8] क्रियमाणयोरपि ककुभोर्द्वित्वं न बाध्यते । तृचविधानं तु सामान्यमन्यत्रापि कृतार्थम् । तस्मात् स्मृतिप्रामाण्यात् प्रगाथसमाख्यानात् क्रमप्रकरणाभ्यां चोत्तरापाठसिद्धायाः पङ्क्तेरेवात्र तृचकर्मण्युपदर्शितत्वात्[9] प्रगथनं कर्तव्यम् । अत्र भाष्यकारेण—एवं हि स्मरन्ति काकुभः प्रगाथ इत्युक्त्वा ननु

---

१. 'योनेरतिजगत्याः' नास्ति—ख० ।

२. अभ्यासात् समाप्तिजगत्यः—क० ।

३. 'अपि' नास्ति—ख० ।

४. 'न' नास्ति—ख० ।

५. ऋचां त्रित्वं—ख० ।

६. च—ख० ।

७. 'च' नास्ति—क० ।

८. प्रगथने च—क० ।

९. 'सम्बन्धित्वात्' अधिकः—क० ।

ककुभ्यनाद्यां [ अनाद्यां ] काकुभ इति न प्राप्नोतीति परिचोद्य परिहृतम्—नात्र "सोऽस्यादि[1]रिति छन्दसः प्रगाथेषु" इत्येवं तद्धितः, किन्तु "तस्येदम्" इति वा "तत्र भवः" इति वा तस्माददोष इति। तदाक्षिपति—**काकुभः प्रगाथ** [2]**इत्येतदयुक्तम्। बार्हत एवायं प्रगाथ** इति[3] **छन्दोगैः स्मर्यते**। अत [4]एतौ **भ्रान्त्या** [5]**चोद्यपरिहारौ**।

एवं वा—इह तु "बार्हते तृचे भवतः" इत्यत्रैव विशेषेण तृचशब्दश्रवणादवश्यमृगन्तरागमः[6] कर्तव्य इति विशेषाशङ्कानिवृत्त्यर्थमिदमधिकरणमुदाहरणान्तरेषु न व्याख्यायते। अथवा लिङ्गदर्शनसूत्रमन्यथा व्याख्यातुं पुनः प्रस्तावं कुर्वन्निदमप्युदाहरणं शुद्धं भविष्यतीत्युदाहृतवानिति वेदितव्यम्। सिद्धान्तस्तु प्रगथनेनापि तृचसम्पादनान्न[7] विशिष्टार[ विष्टार ]पङ्क्तिस्तोत्रे व्याप्रियते। तस्मान्नास्ति वचनविरोधः ॥ २५ ॥

## लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

अत्र [8]भाष्यकारेण **षष्टि[9]स्त्रिष्टुभो माध्यन्दिनं सवन**मित्येतद्दर्शनं प्रग्रथनेऽवकल्पते, नोत्पत्तिबृहत्योरानयन इत्युक्त्वा,[10] ननु पक्षद्वयेऽपि कर्मणि बृहतीद्वयप्रयोगात् को विशेष इत्याशङ्क्योक्तम्[11]—यास्ता ऋचः सवने समाम्नातास्ता इह सवनशब्देनोच्यन्ते। **नात्र कर्मणि सवनशब्द इति**। तदनुभाष्य व्याचष्टे—

---

1. स्यादितिरिति—क०।
2. इति तद—क०।
3. हि—ख०।
4. एव—ख०।
5. परिचोदनापरिहारौ—ख०।
6. रामः—क० पू० मु०।
7. नाद्विशि—ख०।
8. 'भाष्यकारेण' नास्ति—ख०।
9. षु भो—क०, त्रिष्टुभो—ख०।
10. इत्युक्तम्—ख०।
11. शङ्क्य भाष्यग्रन्थः—ख०।

**यदि कर्मणि** कर्माङ्गभूतास्वृक्षु **सवनशब्दो वर्तेत, तथा सति** सवनशब्दः स च [ सवनशब्दस्य ] त्रयवाचित्वाद् **ज्योतिष्टोमकर्ममात्रे प्रवृत्तो न माध्यन्दिनशब्देन** विशेष्टुं शक्यते[1] । **तत्रायं प्रयोग एव न स्यात्** [१]**षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमिति,** त्रिषु सवनेषु बह्वीनां त्रिष्टुभां भावात् । अभ्युपेत्यापि विशेषणमुच्यते । **यदि सवनशब्दो न कर्मणि वर्तेत,** किन्तु प्रकृतास्वेवर्क्षु, **तथा सति**[२] त्रिष्टुप्शब्देनर्ग्वाचिना **सामानाधिकरण्यमुपपद्यते,** नान्यथा । अथ त्रिष्टुप्शब्देन सवनं लक्षयित्वा सामानाधिकरण्यं समर्थ्येत । तत्र तावदिदमेव वक्तव्यं मुख्यत्वात् त्रिष्टुप्शब्दस्य न युक्ता लक्षणा, जघन्यत्वात्तु सवनशब्दस्यैव सा युक्तेति । अभ्युपेत्याह—**यदि च लक्षणया** त्रिष्टुप्शब्दस्य लक्षणामङ्गीकृत्य स[३] **कर्मणि सवनशब्दो वर्तेत,** षष्टित्रिष्टुप्सम्बन्धि[४]माध्यन्दिनं सवनमिति, **तथा सत्याध्वर्यवे हौत्रे औद्गात्रे च बह्व्यस्त्रिष्टुभो भवेयुर्माध्यन्दिने**[५], **तथा सति षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमिति प्रयोगो नैव स्यात् । तस्माद्याः** सामवेदे माध्यन्दिनप्रकरणे समाम्नाता ऋचस्तदभिप्रायमिदं षष्टिः त्रिष्टुभो माध्यन्दिनं सवनमिति[६] । माध्यन्दिनीयाः प्रकृता[७]

---

1. 'न माध्यन्दिनं विशेष्यते' इत्येव पूनामुद्रितपुस्तके मूलपाठो दृश्यते, तथापि पूर्वतनस्य 'प्रवृत्तः' इति प्रथमान्तपदस्यानन्वयापत्तेस्तन्त्ररत्नानुसारेण 'माध्यन्दिनशब्देन' इत्येव निवेशितम् ।

१. प्रषष्टिस्त्रिष्टुभो–ख० ।

२. स तु–क० ।

३. 'स' नास्ति–ख० ।

४. सम्बन्ध्यं–क० ।

५. 'सवने' अधिकं–ख० ।

६. 'अत्र' अधिकं–ख० ।

७. 'न तु' अधिकं–ख० ।

ऋचः षष्टिरिति, न तु माध्यन्दिनकर्माभिप्रायम्[1], अपि च त्रिषष्टित्रिष्टुभो माध्यन्दिनसवनमिति सवनशब्दः कर्माङ्गभूतास्वृक्षु श्रूयमाणः प्रकरणाम्नातास्वेव वर्तते, न तु ऋङ्मात्रे[2]। तत्र यद्युत्पत्तिबृहत्योरानयनं स्यात्, ततः प्रकृतानां षष्टित्वाभावात् (पुनत्वात्[3]) षष्टिस्त्रिष्टुभ इत्युक्तं [इत्ययुक्तं] स्यात्। तस्मात् प्रग्रथनम्। इतश्चैवमित्याह—**यदि चोत्पत्तिबृहत्यावानीयेयातां[4] तदा प्राकृतानां षष्टित्वाभावाद्दाशतयीभ्य आगमः स्यात्। तत्र तयोः प्रकरणसम्बन्धः कर्तव्यः। न च प्रमाणमस्ति। प्रग्रथनेनापि स्तुत्युत्पत्तेः।** अपि च **प्रगाथस्मरणसामर्थ्याच्चावश्यं प्रग्रथनं कार्यम्।** प्रकृतं लिङ्गमुपसंहरति—**तत्रोत्पत्तिबृहत्योरानीयमानयोः षष्टित्रिष्टुभ इत्यसम्बद्धं प्रगाथवचनम्।** प्रगाथापेक्षं वचनमसति प्रगाथेऽसंबद्धं स्यादित्यर्थः। अथवा समस्तोपसंहारोऽयमुत्पत्तिबृहत्यानयने षष्टिस्त्रिष्टुभ इत्यसम्बद्धम्, तथा प्रगाथवचनमपि स्मरणसमाख्यानं चासम्बद्धमिति भावः[5]। एवं वा—इदं तु लिङ्गान्तरप्रदर्शनार्थमेव व्याख्यानान्तरम्, न त्वत्र काचिदधिका शङ्काऽस्ति। लिङ्गञ्च पूर्ववत् प्रकृताभिप्रायमिति व्याख्येयम्।

कैश्चित्त्वेवं विशेषाशङ्का दर्शिता—इह खलु द्वे उत्तरे पठिते। ताभ्यामेव तृचगानोपपत्तेः किमर्थं प्रग्रथनम्। आनुष्टुभे तृचे भवत इत्यपि योन्यनुष्टुप्सम्बन्धादेवोपपन्नमिति तद्व्यावृत्त्यर्थमिदमधिकरणम्। आनुष्टुभे तृचे भवत इति विधौ लक्षणायोगात् कृत्स्नतृचोऽनुष्टुम्मयः कर्तव्यः। तस्मात् प्रग्रथनमिति। इदं तु भाष्याननुगुणम्। भाष्यकारो ह्यन्ययोरागमं[6] पूर्वपक्षयति, न तु प्रकृतयोर्गानम्।

---

१. कर्माङ्गभूताभिप्रायम्, नापि तदन्तर्भूताभिप्रायम्। अभ्युपेत्य ब्रूमः–ख०।

२. तत्तदङ्मात्रे–ख०।

३. भूत–ख०।

४. 'वानीयेयातां' प्रभृति 'स्तुत्युत्पत्तेः' पर्यन्तं नास्ति–क०।

५. 'भावः' अधिकम्–क०।

६. गमनं–ख०।

एवं वा—अत्र तु विशेषाशङ्का भाष्यकारेणैव दर्शिता निराकृता च । अथ कस्मान्न प्रथमे[1] तृचे गानं कृत्वा ततस्तस्मात् तृचादेकामृचमुपादायान्ये द्वे[2] ऋचौ गृहीत्वा [3]तृचगानं क्रियते । तथा हि तृचगानप्रापी चोदकोऽनुगृहीतो भविष्यति, लिङ्गं चोपपत्स्यते । प्रगाथवचनमप्यृक्ष[ क्षु ]प्रग्रथनादेवोपपन्नमिति । उच्यते— "अन्या अन्या ऋचो भवन्ति" इति वचनान्न युक्तम् [4]ऋक्प्रग्रथनम् । तस्माद् [5]द्वयोर्द्वयोर्ऋचोः पादप्रग्रथनेन तृचकर्म कृत्वा गातव्यमिति ॥ २८ ॥

[ ७—गीत्युपायानां शाखाभेदेन समाम्नातानां विकल्पाधिकरणम् ]

## अर्थैकत्वाद्विकल्पः स्यात् ॥ २९ ॥ सि०

गीत्यर्थादुपपन्नानां [ दुत्पन्नानां ] छान्दोग्यतलवकार[6]ब्राह्मणादिगतानामेकेनैव[7] गीतिनिर्वृत्तेः प्रत्यक्षत्वाद् गुणानुरोधेन च प्रधानावृत्तेः, '[8]अव्यान्याप्यत्वा- [ अन्याय्यत्वा ]द् व्रीहियवादिवत् सिद्ध एव विकल्पः सामप्रसङ्गात्[9] स्पष्टीकरणार्थं पुनरभिधीयत इति नातीवापौनरुक्त्यै यतितव्यम् ॥ २९ ॥

[ ८—प्रगीताया एव ऋचो वैकृतापूर्वस्तोत्रसाधनत्वाधिकरणम् ]

## अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥ पू०

---

१. प्रथमतृचे—ख० ।

२. 'द्वे' नास्ति—ख० ।

३. तृचे—ख० ।

४. ऋक्ग्रथनम्—ख० ।

५. 'द्वयोः' नास्ति—ख० ।

६. तलवकारादिब्राह्मण—ख० ।

७. एकेन—क० ।

८. अभ्याध्य—ख०, अगान्याप्य—क० ।

९. प्रसङ्गात्तु—ख० ।

क्वचिद्विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि। तेषु च [1]यूपावट-स्तरणबर्हिर्न्यायेन न प्रकृतितः [2]कश्चित्साधनविशेषो लभ्यते। प्राकृतानां[3] रथन्तरं पृष्टं भवतीत्यादिभिः स्तोत्रविशेषेषु निबद्धत्वाद्विकृतिष्वपि पृष्ठादिष्वेव तेषां [4]प्राप्तिः, न त्वप्राकृतेषु स्तोत्रेषु। तेन तानि साधनाकाङ्क्षाणि। तत्रेदं श्रूयते—यदृचा स्तुवत इत्यादि। तत्र ऋक्[5]छन्दोऽप्रगीत[6]ऋक्परः, प्रगीतायाः सामग्रहणेनैव सिद्धत्वात्। नहि साम्नः[7] साक्षात् स्तुतिसाधनतोपपद्यते, [8]किन्त्वक्षराभिव्यक्तिद्वारेणैव। ऋग-क्षराण्येव चानेनाभिव्यज्यन्ते। ऋचि साम [9]गायतीति। सामान्यवचनादिति स्थित-मेतत्। तत्र पूर्वपक्षमाह—**ऋचा स्तोतव्यं साम्ना वा। कुतः? उभयत्र**[10]र्चि साम्नि च **वर्तमानापदेशात्। यदि साम्नि विधायकः** [11]**श्रूयेत, तथा सति** [12]**काञ्चिन्निन्दां प्रकल्प्या** [13]**साम्नां स्तुत्यैकवाक्यता स्यात्।** यदृचा स्तुवत इत्यनेनाप्यृङ्निन्दाद्वारेण साम्नामेव स्तवनादेक[14]वाक्यता स्यात्, **न तु विधायकः श्रूयते**[15]। नन्वन्ते **विधिः**[16] श्रूयते य एवं विद्वान् साम्ना स्तुवी-

---

१. यूपावद्–क० ।
२. क्वचित्–क० ।
३. 'हि' अधिकः–ख० ।
४. प्रति–ख० ।
५. छन्दो–क० ।
६. गीतपरः–क० ।
७. साम्नः साम्ना–क० ।
८. किञ्चाक्ष–क० ।
९. गायती–क० ।
१०. वि–क० ।
११. स्तूयते–क० ।
१२. कश्चिन्निन्दा–क० ।
१३. साम्ना–क० ।
१४. 'वचन' अधिकः–क० ।
१५. स्तूयते–क० ।
१६. विधायक–ख० ।

तेति। नायं विधिर्यच्छन्दोपबद्धत्वात्; **तस्मात् स्तुत्यैवोभयत्रापि** विधिः **कल्पनीयः। ननु**[1] **ऋचि निन्दा श्रूयते,** न स्तुतिः; विध्वंसकासुरागमनकीर्तनात्। कथं तत्र विधिकल्पनमिति। **उच्यते—विपरीतमिदं कस्मान्न भवति, इत्थमृक् शोभना यदसुरा अप्यनागतपूर्वास्तत्रागच्छन्ति** वशीकृता इति। तस्मादृचा स्तोतव्यम्। साम त्वनेवंभूतत्वान्न शोभनम्[2]। तस्मादृचां स्तुतिः साम्नां[3] निन्देत्येवं विपरीतस्यापि सम्भवात्, अविशेषादुभयविकल्पनाद्विकल्पः॥ ३०॥

## वचनाद्विनियोगः स्यात्॥ ३१॥ सि०

**"साम्ना स्तुवीत" इति साम्नः स्तुतौ विधानमसुरा[4]नागमनेनार्थवादेन**—"यत्साम्ना स्तुवते तदसुरा [5]नान्वयावयन्तीत्यन्येन [ नान्ववायन्" इत्यनेन ]। ननु यदृचा स्तुवत इत्यपि श्रूयतेऽत आह—**असुरागमननिन्दाद्वारेण** साम्नः स्तुत्या **साम्नैव सहैकवाक्यतां**[6] **याति, यदृचा स्तुवत** [7]**इत्येतत्**। किमिति पुनरेवमङ्गीक्रियतेऽत आह—**इतरथा निन्दया निन्दिताया** एवर्चः **प्रशंसां कल्पयित्वा पुनर्वाक्यद्वयं च**[8] **कल्प्यम्, वाक्यद्वयाच्चादृष्टद्वयं कल्प्यम्**। तच्चान्याय्यम्। तस्मादेकवाक्यत्वादृचां [9]निन्दया साम्नां[10]विधिः।

---

१. न स्त्वृचि—ख०।
२. 'तस्मान्न साम्ना स्तुवीत'—ख० अधि०।
३. साम्ना—ख०।
४. असुराणामनाग—ख०।
५. न्वावायन्नित्यनेन—ख०।
६. वाक्यतां—ख०।
७. इत्येत्—क०।
८. 'च' नास्ति—ख०।
९. निन्दाया—क०।
१०. 'स्तुत्या'—ख० अधि०।

यत्तूक्तं विपरीतं कस्मान्न भवतीति, [1]तत्राह—**न च विपरीतो वाक्यार्थः** सम्भवति [2]**साम्नामुपसंहारे श्रवणात्** "**य एवं विद्वान् साम्ना** स्तुवीत" **इति** । [3]तेन यद्यपि स्तुत्यैव विधिः कल्प्यः, तथाप्युपसंहारे साम्नो विस्पष्टं प्रशंसा[4]श्रवणमसति सामविधावत्यन्तानुपपन्नमिति साम तावद्विधातव्यम् । तद्विधाने च ऋचः [5]कीर्तनं निन्दया तत्स्तुत्यर्थम्, इतरथा वाक्यभेदादिदोषापत्तेः । तस्मात् साम्ना स्तोतव्यमिति ।

**एवं वा—**

"**अयं सहस्रमानव इत्येतयाहवनीयमुपतिष्ठते**" इत्यत्र शब्दसन्निधिभ्यां **प्रगीतायामपि सम्प्रत्ययोऽप्रगीतायामपि** । तथा कार्य**मुपस्थानं स्तुतिं वाऽप्रगीता** [6]निर्वर्तयेत् प्रगीतापि । **तस्माद्विकल्पः । एवं प्राप्ते ब्रूमः—एतयेति सन्निहितवचनः । प्रगीता च सन्निहिता** । नन्वितरापि सन्निहिताऽत आह—**यद्यप्यप्रगीतापि सन्निहिता,** तथापि **प्रगीतैव ग्राह्या** । **कुतः ? यस्मादप्रगीतायाः परार्थः पाठः । नह्यपठितायां** सुखं साम शक्यं **निर्वर्तयितुम्** । तस्माददृष्टार्थत्वादप्रगीतायाः प्रगाणार्थः पाठः । परार्थसन्निहितं च न सर्वनाम्ना परामर्शमर्हति, [7]**नन्वप्रगीतापि शाखान्तरे**ऽनन्यार्थैव पठ्यते । **सा** सन्निधिं बाधित्वा **वाक्याद् ग्रहीष्यते । उच्यते—तस्याः प्रकरणसम्बन्धः कल्प्यः** । शाखान्तरे हि सा नैतस्य कर्मणः प्रकरणे पठिता[8], किन्त्वन्यत्र । अन्यत्र तु प्रगीतायां

---

१. अत आह—ख० ।

२. साम्न उप—ख० ।

३. 'तेन' नास्ति—ख० ।

४. 'श्रवणं' नास्ति—ख० ।

५. 'च ऋच' नास्ति—क० ।

६. विनिव—ख० ।

७. न त्वप्र—क० ।

८. पठित्वा—क० ।

क्लृप्तः प्रकरणसम्बन्धः । तेनाग्नेय्यधिकरणन्यायेनाप्रगीतां [1]कल्प्यसामान्यसम्बन्धां बाधित्वा क्लृप्तसामान्यसम्बन्धा प्रगीतैव ग्राह्या । किञ्च, **एतयेति सन्निहित-वचनः** शब्दोऽप्रकृताप्रगीतग्रहणे [2]बाध्यते । [3]तेन स्तुतिबलादेव प्रकृतप्रगीत-ग्रहणमिति ।

एवं वा—

सामप्रसङ्गान्मन्त्रान्तराणां [4]स्वरश्चिन्त्यते । तत्र समुच्चय इत्युपक्रममात्रम्, गीत्युपायन्यायेनैव निरस्तत्वात्, स्वराणामक्षराभिव्यक्त्यर्थत्वात् । **एकेन** च तदभिव्यक्तेः सिद्धत्वात् स्वरनियमोऽपि दृष्टार्थ एव । स्वरविशेषेण ह्यर्थविशेषः पाणिनिना स्मर्यते—"**बहुव्रीहौ प्रकृत्या पूर्वपदम्**" इत्यादिना । अथाप्यदृष्टार्थः स्वरनियमः स्यात्, तथापि नोपायनियमाददृष्टसिद्धये प्रधानमावर्तनीयं व्रीहियववत् । तस्मादुपक्रममात्रं समुच्चयः, गीत्युपायवदेव तु विकल्पः । स्वाध्यायविधिना स्वरोपेतमध्ययनं विधीयते । तस्य चैतत्प्रयोजनम्—कथं नामैवं स्वरा मन्त्राः कर्माङ्गं भवेयुरिति । तस्माच्छ्रुतिबलेन "तानो यज्ञकर्मणि" इति स्मृतिं बाधित्वाऽ-ध्ययनसिद्धयोरेव त्रैस्वर्य्यचातुःस्वर्य्ययोर्विकल्पेनोपादानमिति पूर्वः पक्षः । सिद्धान्तस्तु वचनादैकश्रुत्यम् 'तानो यज्ञकर्मणि[5]' इति स्मृत्यनुमिताद् वचनात् । न च स्मृतेः श्रुतिविरोधः । नह्याहत्य कर्मणि त्रैस्वर्यादेर्विनियोगोऽस्ति, न्यायमात्रं तु तत् । तच्च स्मृतेर्दुर्बलम् । तस्माज्जपन्यूङ्खसामवर्जं[6] तानेन प्रयोग इति ॥ ३१ ॥

[ ९—योनिसाम्न उत्तरावर्णत्रशेनोत्तरयोर्ऋचोर्गानाधिकरणम् ]

## सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात् ॥ ३२ ॥ पू०

---

१. कल्प्यसमा—ख० ।

२. बाध्येत—ख० ।

३. नितेन—क० ।

४. श्वर—क० ।

५. कर्मणी—क० ।

६. वर्जतोऽ—ख० ।

**आम्नातादन्यदित्यारभ्यौपोद्घातिकं वृत्तम्**, [1]**प्रासङ्गिकं च प्रकृतमिदानीमभिधीयते**[2] । **सामोहः प्रतिज्ञातः । सोऽभिधीयते** । तत्र **पूर्वः पक्षः—नोहः साम्नः**[3] । कुतः ? **वचनादेतत्सामातिदिश्यते—"यद्योन्यां तदुत्तरयोः" इति** । नन्वृगक्षराणामुपकारकं सामेत्युक्तम् । तेनोत्तरयोः प्रदेशान्तरे [4]सत्यप्येकारे तदभिव्यक्त्यर्थं तत्रैवाव्ययीभावः [ आयीभावः ] कर्तव्यः, [5]न तु प्राकृते देशे । अतो भवत्येवोहोऽत[6] आह—**यद्यपि साम योन्यामृगक्षराणामुपकारकमिति** लिङ्गात् **समधिगतम्, तथापि** । नोह इत्यनुषङ्गः । कुतः ? **उपकारकस्य[कारस्य] अनतिदिष्टत्वात्**, सामस्वरूपस्यैवातिदिष्टत्वात् । तस्य[7] तथाभूतस्यैव प्रयोगान्नोहः । शङ्कते—**यादृशं** यथोपकारजनकं **योनौ तादृशमेवोत्तरयोरपि यदि** मन्यस इति शेषः । दशमाद्यन्यायेनोपकारप्रधानत्वादतिदेशस्येति भावः । निराकरोति—**नात्र यथातथाभावोऽतिदेशार्थः, यथैष्टिकानां विकृतिषु** । तत्र त्वाकाङ्क्षया[8] चोदनासामान्येन [9]चातिदेशः । उपकारश्चाकाङ्क्षितो न पदार्थः । तेन यथा स सिद्ध्यति तथातिदेष्टव्यम् । प्रकृतिप्रधानेन च विकृतीनां चोदनासामान्यम्, न पदार्थविधिभिः । तेन तत्र यथाग्नेयः कृतः[10], तथा सौर्य्य इति प्रकृतिप्रधानगतः प्रकारो विकृतावतिदिश्यते, न तु स्वरूपेण पदार्थाः[11] । नामातिदेशोऽपि प्रधाननाम

१. प्रासङ्गि—क० ।
२. अभिधीयेत—ख० ।
३. साम्नां—ख० ।
४. सत्येप्ये—ख० ।
५. ननु—ख० ।
६. व्य—अधि० क० ।
७. तस्य च—ख० ।
८. आकाङ्क्षाया—क० ।
९. वाति—ख० ।
१०. कृतास्तथा—क० ।
११. पदार्थाः । न नामातिदेशोऽपि—ख० ।

घेयेन वस्त्यर्थकल्पनया तद्वद्भाव एवातिदिश्यते। वचनमपि यत्र तद्वद्भावमेवातिदिशति, तत्रापि प्रकृतिसदृशी विकृतिः कर्तव्या, प्रकृतिश्च मन्त्रप्रकाशितदेवताविशिष्टा कृतेति[1] विकृतिरपि तथैव कर्तव्या। न चोहाकृते[2] [ ऊहादृते ] तथा कर्तुं शक्यत इति सिध्यत्यूहः। न त्विह यथा योनिः संस्कृता तथान्तरे [ अनन्तरे ] अपि संस्कर्तव्ये इत्यस्ति वचनम्, येनोहः स्यात्। किन्तु **वचनाद्धीदं** सामस्वरूपमेव योन्युत्तरयोः **साधारणीकृतम्। तस्माद्यथा सप्तमाद्यपूर्वपक्षे साधारणा धर्मास्तथेहापि।** तथापि कथमनूहोऽत आह—**वचनसामर्थ्याच्च यत्र भागे योनौ आर्यीभावः कृतः, उत्तरयोरपि तथैव कर्तव्यः,** अन्यथा वाचनिकसामस्वरूपस्यान्यथाभाव[3]प्रसङ्गादित्येवं **प्राप्ते ब्रूमः—सत्यं** वचनात् सामातिदिश्यते, **न** त्वेत**द्वचनमुपकारनिषेधकम्, किं तर्हि? उत्तरयोः** साम **कर्तव्यमित्येतावत्कृत्वा कृतार्थं** भवति। न तु [ तत्तु ] सामो**त्तरयोः क्रियमाणं यथोपकरोत्यृगक्षराणां तथा कर्तव्यम्,** स्तोत्रसाधन[4]भूतर्गक्षरसंस्कारकत्वेनातिदेशात्। **न चेदमदृष्टेनोपकरोति,** किन्तु दृष्टेनैवाक्षराभिव्यक्त्युपकारेण। तेनातिदेशशास्त्रस्य दृष्टार्थत्वादयमर्थो भवति—यद्योन्यां[5] तदुत्तरयोर्गायति योनिवदुपकर्तव्यमिति। **तस्माद्यस्य वर्णस्य येन प्रकारेण**[6] संस्कारक**मवगम्यते**[7]**, तस्मिन् वर्णे तथैव प्रयोक्तव्यम्।** नन्वेवं वाचनिकस्य साम्नोऽन्यथाभावः क्रमभेदादिना स्यात्, भवतु। सामाङ्गं हि क्रमादिप्रधानभूतर्गक्षरसंस्कारविरोधाद्युक्तमेव बाधितुम्। कस्य पुनर्वर्णस्य केन प्रकारेणोपकरोत्यत

---

१. कृते—क०।

२. कृते—ख०।

३. प्रसङ्गः स्यादि—ख०।

४. भूत—ख० नास्ति।

५. योन्या—क०।

६. 'तिना'—ख० अधिकम्।

७. मन्यते—क०, गम्येत—ख०।

आह भाष्यकारः—**सर्वत्रात्र प्रत्यक्षं प्रमाणमित्यादि** । अत्र भाष्यकारेण योनिवर्णवशेन क्रियमाणे [1]गाने महती गीतिरल्पेष्व[2]क्षरेषु विनश्येदित्याशङ्क्योक्तम्—विरामं कृत्वानक्षरं गायिष्यत इति । तद् दूषयति—**एतदयुक्तम् , ऋगक्षराणां साम संस्कारकं समधिगतं योनौ । तद्यदनक्षरं गीयेत; अयथाप्रकृति-**[3]**कृतं स्यात् , अदृष्टार्थं च स्यात् । सर्वं चैतदन्याय्यम्** । नहि स्तोभवद्गीतिशेष-[षः] प्रकृतावदृष्टार्थ[र्थः] । **तस्माद्यत्राल्पान्यक्षराणि महती गीतिः, तत्रापि तया अक्षराण्येव संस्कर्तव्यानि** । गीतिशेषं [4]तव्यतां[1] [त्यज्यतां] प्रयोजना-भावात्[5] । **तथा यत्राल्पी गीतिर्बह्वन्यक्षराणि, तत्रापि सै**वाल्पा गीति**स्तेषां** बहूनामपि **संस्कारिकाऽवगन्तव्या । न तत्र** ऋक्शेषस्य सार्तमैकश्रुत्यमध्ययन-सिद्धं त्रैस्वर्यं **वा कर्तव्यम् ,** किन्तु गीतिरेव तत्र स्वरः । सा समाताप्यृक्शेषाभि-व्यक्त्यर्थमावर्तनीया । कथमित्याह—**एतदेव** हि **साम्नामृचं प्रति गुणभाव-**विचारस्य **प्रयोजनम्**—कथं नामर्क्षरा[नाम ऋगक्षरा]नुरोधेन सामप्रवृत्तिः स्यादिति ॥ ३२ ॥

[ १०—स्तोभस्योत्तरयोरतिदेशः ]

## स्तोभस्यैके द्रव्यान्तर[6]निवृत्तिमृग्वत् ॥ ३४ ॥ पू०

साममात्रस्यातिदेशात् स्तोभानां च ततोऽन्यत्वादृग्वदनतिदेशः ॥ ३४ ॥

---

1. अत्र गीतिशेषं तव्यतामिति कक्कोशे पाठः । तत्र तव्यतामिति स्थाने त्यज्यता-मिति संभाव्यपाठो निवेशितः । तन्वतामिति वा पाठः संभाव्यः, तथा सति गीतिशेषमिति द्वितीयान्ततया सुष्ठु संगच्छते, प्रयोजनाभाव इत्युत्तरपदं च गीतिशेषं तु लुप्यतां प्रयोजनाभावाद् इति तु खकोशे पाठः ।

१. ज्ञाने–क० ।

२. पेष्टक्ष–क० ।

३. कृते–क०, प्रकृतिकं–मु० पा० ।

४. तु लुप्यताम्–ख० ।

५. 'भावः' नास्ति–क० ।

६. व्यान्तरे–ख० ।

सर्वातिदेशात्तु सामान्याल्लोकवद्विकारः स्यात् ॥ ३५ ॥ सि०

अत्र भाष्यम्—ऋक्स्तोभस्वरकालाभ्यासविशिष्टाया गीतेः सामशब्दो वाचक इति। [1]तदयुक्तम्, 'गीतिषु सामाख्या' इत्युक्तत्वात्। तस्मादन्यथा वर्ण्यते। यद्यपि स्तोभा न [2]सामशब्दवाच्याः, तथाप्यतिदिश्यन्ते। कथम्? सामोपकारकमृगक्षराणाम्। तस्य साम्न ऋगक्षराणामुपकुर्वतो दृष्टेन साहाय्यं कुर्वन्तः स्तोभा उपकुर्वन्ति योनौ। तदेवं सति तदतिदेशेन यदि स्तोभा [3]नागच्छन्ति ततस्तत्कृत उपकारो (न) हीयेत। तस्मात् प्राकृतदृष्टोपकारायातिदिश्यन्ते[4]। भाष्यमप्यनेनाभिप्रायेण नेयम् ॥ ३५ ॥

[ ११—स्तोभलक्षणम् ]

अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥ सि०

साम्नोऽतिदिष्टस्योहानूहे विचारिते [1]तत्प्रसङ्गात् स्तोभानामतिदेशोऽस्ति नास्तीति चिन्तितम्। तत्प्रसङ्गात् त्विदानीं स्तोभलक्षणमुच्यते। न चाज्ञाते स्तोभे तत्प्रदेशाप्रदेशचिन्ताऽवकल्पत इतीदमर्थतोऽधिकरणं पूर्वं द्रष्टव्यम्। ऋगक्षरेभ्योऽभिधानोपयोगिभ्यो येऽधिका विवर्णाश्च वर्णास्ते स्तोभशब्देनोच्यन्ते ॥ ३९ ॥

[ १२—प्रकृतौ नीवारादिषु व्रीह्यादिधर्माणामूहेनानुष्ठानम् ]

धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥ सि०

---

1. 'तत्प्रसङ्गात्' इत्यतः 'चिन्तितम्' इत्यन्तं नास्ति—ककोशे।

१. एतत्—ख०।

२. 'गीति' अधिकम्—क०।

३. न—क०।

४. दिश्यते—क०।

व्रीह्यादिषु श्रुता अपि धर्मा न तत्स्वरूपप्रयुक्ताः, किन्त्वपूर्वसाधनविशेषप्रयुक्ता इति पूर्वपादे स्थितम्। नीवारादिष्वपि च तत्साधनविशेषरूपमस्तीति कर्तव्यमेव प्रोक्षणादि । किमर्थमिदमधिकरणमत आह—**यद्यप्यपूर्वप्रयुक्ता धर्मा इति स्थितम्, तथापि कार्यापत्त्या विनोहसिद्धिर्नास्तीत्यनेनाधिकरणेन कार्यापत्तिः प्रतिपाद्यते**। व्रीह्यादिकार्ये नीवारादयो वर्तन्त इत्येवं [1]शब्दस्ताव-न्नास्ति। परिधौ पशुं नियुञ्जीतेत्यत्राप्यप्राकृतकार्यनियोजनान्तरविधिसम्भवा-[2]न्नास्ति। [3]प्राकृतकार्यापत्तिरिति कस्यचिदाशङ्का स्यात्। तत्प्रति[4]बोधनाय कार्यापत्तिः प्रतिपाद्यते[5]। **सा च पञ्चधा**। तत्र तावद् द्विधा—**प्रत्यक्षानुमाना-भ्याम्। शब्दात्तु त्रेधा**। त्रैविध्यमेव दर्शयति— क्वचित् प्रत्यक्षादेव **स्वशब्दात्**, क्वचित्तु **प्रतिषेधेन स्वशब्दानुमानम्**। अनुमिताच्च स्वशब्दात् कार्यापत्तिः। क्वचित्तु [6]**संस्थयाऽ**[7]भावरूपया **प्रतिषेधानुमानम्। प्रतिषेधाच्च** स्वशब्दोऽ-नुमीयते। तेनानुमितानुमानलब्धात् स्वशब्दात् कार्यापत्तिः। सेयं पञ्चधा कार्यापत्तिः क्रमेणोदाहरणेषु प्रदर्श्यते[8]। **तत्र प्रत्यक्षात्तावत् "नैवारो[9] बार्हस्पत्यश्चरुः" इति। ननु स्वशब्देनैवात्र नीवारा व्रीहिकार्ये** हविषि चरुशब्देन **विनि-युज्यन्ते**, न प्रत्यक्षेण। **उच्यते—नीवारशब्दो नीवारान् वदति। तद्धितो विकारम्।** [10]**देवतां बार्हस्पत्यमिति [त्यः] इति। चरुशब्दो द्रव्यम्।**

१. शङ्काब्द–ख० ।

२. वा नास्ति–क० ।

३. प्रकृत–क० ।

४. प्रतिषेध–क० ।

५. बोध्यते–क० ।

६. संस्थाया–क० ।

७. ह्यभाव–ख० ।

८. दर्श्यन्ते–क० ।

९. 'तावन्नैवारं बार्हस्पत्यं चरुम्' इति- क० ।

१०. देवन्ता–क० ।

**कतरोऽत्र** शब्दः **कार्यापत्तिपरः**[१]। नैवारमित्यनेन[२] तद्धितेन नीवार-सम्बन्धित्वमात्रं चरोरुच्यते, न [३]तत्प्रकृतित्वम्। **तस्माद् व्रीहि**कार्यापत्ति-[४]परस्य शब्दस्याभावात् **प्रत्यक्षेणात्र कार्यापत्तिः**। प्रत्यक्षमेव हि नीवारेभ्यो हविर्निष्पद्यमानं दृश्यते। तेन दृष्टसामर्थ्यानुसारिणा तद्धितशब्देन नीवारप्रकृतिकत्व-मेव चरोरुच्यत इति प्रत्यक्षप्रमाणिकैव कार्यापत्तिः। तदाह—**व्रीहयः पुरोडा-शाख्यहविर्निर्वृत्त्या यागार्थाः। नीवारा अपि यागसाधन**हविरर्था[५] इत्येवं **प्रत्यक्षमुपलभ्यन्ते। तस्माद्यथा व्रीहयोऽपूर्वार्था इति** कृत्वा **धर्मैर्युज्यन्ते**[1] **तद्वन्नीवारा अपि। नखाव**[६]**पूतानां** [७]**चरु**मित्येवं[८]भूतेषु न प्रत्यक्षेण कार्यापत्तिरवसीयते[९]। नहि [2]निर्लुञ्च[ञ्छ][१०]नावघातयोः प्रत्यक्षेणैक्यं गम्यते, येन प्रत्यक्षतो नखानामुलूखलमुसलकार्यापत्तिः स्यात्[3]। किन्त्ववयवनस्य [ अव-

---

1. 'धर्मैर्युज्यन्ते' इत्येव पाठस्य सर्वकोशेषु दर्शनात् तथैव निवेशितम्। 'धर्मान् प्रयुञ्जते' इति पूनामुद्रितो मूलपाठोऽपि सुश्लिष्ट एवेति।

2. निर्लुञ्छन इति संभाव्य पाठो निवेशितः। लुबन इति, निर्लुञ्चन इति च क्रमेण क० ख० कोशयोः पाठः।

3. 'स्यात्' इत्यस्यानन्तरं 'फलम्' इत्येतदन्तं ख० कोशे यथादृष्टं निवेशितम्। तदत्यन्तं सुश्लिष्टम्। क० कोशे तूत्तरग्रन्थस्थमेव किञ्चिद् व्यत्ययेन 'किन्त्वव-घातोऽङ्गम्, किन्तु यथा क्रियया तुषकाणविमोकोऽङ्गो हलम्' इतीह लेखितं दृश्यते।

१. करः–क०।
२. 'हि' –ख०।
३. तत्प्रकृतिकत्वम्–ख०।
४. करस्य–क०।
५. हविरर्थं–क०।
६. भूतानां–क०।
७. चरुरि–ख०।
८. विधेषु–ख०।
९. सीयते–ख०।
१०. निर्लुवना–क०।

पवनस्य ] तुषविमोकं फलं प्रत्यक्षेण **दृष्ट्वानुमानं भवति—नूनमुलूखलमुसलकार्यें नखा वर्तन्त**[१], **इति**। उलूखलमुसले हि प्रकृतौ नावघाताङ्गम्, किन्तु यया[२] क्रियया तुषकणविमोको भवति तदङ्गम्। निर्लुञ्छनमपि तद्रूपमेव फलदर्शनादनुमीयते। तेनात्रानुमानेन कार्यापत्तिः।

**"परिधौ पशुं नियुञ्जीत" इत्यत्र** तु **स्वशब्देनैव परिधिः**[३] सप्तम्या **यूपकार्ये**[४] नियोजनेऽधिकरणत्वेन **यूपवद्वर्तते**। नह्यत्राप्राकृतं[५] नियोजनान्तरं विधीयते; विशिष्टविधिगौरवात्। तस्मात् प्राकृते नियोजने परिधिर्विधीयते।

**"न गिरा गिरेति ब्रूयात्" इत्ययं** प्रतिषेधो **गिरापदं प्रतिषेधंस्तत् कार्यं लक्षयति**। प्रतिषिद्धे हि गिरापदे तत्कार्यं[६] साधनाभिलाषि लक्ष्यम्[७]। **तत्र च लक्षिते इरापदस्य** साध्याभिलाषिणो **विधिः**। ननु[८] यदि प्रतिषेधेन[९] कार्यापत्तिः, कथं तर्हि प्रतिषेधेन स्वशब्दानुमानमित्युक्तम्, अत आह—**तच्चेरापदं** कार्यप्रतिपादक**शब्दादृते** तत्साधनत्वेन [१०]**न शक्यं विधातुम्**। नह्यशाब्देन शाब्दस्यैकवाक्यता भवति[११]। **अत उच्यते—प्रतिषेधात् स्वशब्दानुमानमिति**। कस्तर्हि परिध्युदाहरणाद्विशेषः? अत आह—**लक्षणयाऽत्र स्वशब्दः**। नहि गिरापदकार्यमिरापदेन कुर्यादिति श्रूयते[१२], तत्प्रतिषेधेन त्वनुमातव्यम्—

---

१. वर्तेत—क०।

२. यथा—क०।

३. परिधिं—ख०।

४. उपकार्ये—ख०।

५. प्रकृत—क०।

६. कार्य—क०।

७. लक्ष्यते—ख०।

८. न तु—क०।

९. 'वा'—ख० अधिकम्।

१०. नाशक्यं—क०।

११. तीत्यतः—ख०।

१२. शब्दोऽस्ति—ख०।

गिरापदं न ब्रूयात्, तत्कार्यार्थं त्विरापदं ब्रूयादिति। परिधौ त्वाम्नात एव स्वशब्द इति विशेषः।

**"उद्गीथा वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः संतिष्ठते"** इत्यत्र **संस्थया प्रतिषेधो** लक्ष्यते। नहि संस्थितं[1] कर्तव्यं भवतीति। प्रतिषेधेन च पूर्ववत् **कार्यं लक्ष्यते। तस्मिन्** लक्षिते **मध्वशनघृताशने** विधीयेते। **एवमत्र लक्षितलक्षणया स्वशब्दः**[2]। तदेतन्मध्वशनोदाहरणमयुक्तम्। **कथम्? यदि** हि **मध्वशनघृताशने षडहकार्ये वर्तेयाताम्, तथा** सति **फलसाधके स्याताम्। तत्र "द्वादशाहेन प्रजाकामं याजयेत्" इति विरुद्ध्येत वचनम्।** कथं विरोधः? अत आह—**यागा ह्येतेन फले (न)**[3] **चोद्यन्ते।** तेऽपि **च (न) द्वादशसंख्याविशिष्टाः।** तथाऽपि कथं विरोधो[4]ऽत आह—न च **मध्वशनघृताशने यागौ।** तेन तयोः फलसाधनत्वे यागेभ्यः फलमिति वचनं तावद्विरुद्ध्येत। तथा **ताभ्यां च फलवद्भ्यां चतुर्दशसंख्योपजायेत**[5]। तत्र द्वादशत्वविरोधः। **राजसूयवदिति चेत्।** यथाभिषेचनीयमध्यवर्तिनापि राज्ञः सवनेन प्रकरणगतः कृत्स्नो यागगणश्छत्रिन्यायेन राजसूय इत्युच्यते, तथेहापि चतुर्दशसंख्येऽपि कर्मगणे द्वादशाहोऽन्तर्भूत इति छत्रिन्यायेन द्वादशाहशब्दो वर्तत इति। **तन्न "षट्त्रिंशदहो वा एष यद् द्वादशाहः" इत्येवमादीनि लिङ्गानि विरुध्येरन्,** अष्टत्रिंशत्संख्यापत्तेः। किञ्च, **यदि चानयोस्तत्कार्यापत्तिः स्यात्, तथा सति षडहं निवर्तये(या)ताम्।** नहि [6]तत्र कृतकार्यस्य षडहस्य प्रवृत्तिः सम्भवतीति।

---

१. स्थितः कर्तव्यः—ख०।

२. शब्दः—क०।

३. फले चोद्यन्ते, न फले चोद्यन्ते—ख०।

४. विरोध इत्याह—ख०।

५. जायेते—ख०।

६. तत्—क०।

ततः किमित्याह—**तत्रास्योत्पत्तिरनर्थिका स्यात्** । षट्त्रिंशदह इति **लिङ्गविप्रतिषेधश्चास्मिन्**[1] पक्षे **स्थित एव**, द्वात्रिंशत्त्वापत्तेः । अपि च, लिङ्गवाक्याभ्यां षडहकर्तुनिर्वृत्तषडहस्य पुरुषस्य संस्कारके**ऽवगम्यमाने** मध्वशनघृताशने **कथं फलसाधने**[2] **इत्यभ्युपगम्येते । सर्वं चैतदन्याय्यम्** ।

**तत्र** केचि**द्वर्णयन्ति**—भवतु षडहाङ्गमध्वशनघृताशने[3], तथापि युक्तस्तद्धर्मलाभः । तथाहि—द्वयमिह षडहेऽस्ति फलसाधनत्वम्, साधनत्वं च । तत्र मध्वशनघृताशनयोर्न **फलसाधनात्वाद् धर्मलाभः** । कथं तर्हि ? **साधनत्वात्** ते अपि षडहाङ्गत्वात् क्रतूपकारस्य साधने एव । तेन साधनत्वसामान्यात् षडहधर्मप्रातरिति [ प्राप्तिरिति ], **तदप्ययुक्तम्** ; **यदि ह्येते षडहकार्यमेव कुरुतः, ततस्तद्धर्मैः सम्बध्येयाताम्, यथा नीवाराः । न त्वेते षडहः[ह]कार्ये वर्तेते इत्युक्तमेव** । यत्तु तदङ्गत्वाद्[4] धर्मलाभ इत्युक्तम्, तत्राह—**तदङ्गत्वाद्धर्मलाभो न**[5] **भवतीत्युक्तम् । कथं तर्हि ? कार्यापत्त्या** । कार्यविशेषप्रयुक्ता हि धर्माः, न साधनसामान्यप्रयुक्ताः । **तस्मादन्यदुदाहरणमुदाह्रियते—"स प्रत्यामनेत् स्थानात्"** इत्यत्र पूर्वपक्षे दोह**द्रव्यविना**[6]शाद् दर्श**कर्मविनाशः । तद्विनाशात्**[7] **तत्प्रतिषेधो लक्ष्यते । प्रतिषेधाच्च स्वशब्दः** कार्यस्यानुमीयते । तेन चानुमितेन दर्शकार्ये पञ्चशरावको यागोऽर्थाद्विधीयते । यस्य हविरार्त्या दर्शो नष्टः, स न दर्शं कुर्यात् ; तत्कार्यं तु पञ्चशरावयागेन साधयेदिति । किन्त्वयं प्रत्याम्नायः "स[8] प्रत्यामनेत् स्थानात्" इत्यस्मि-

---

१. नपि—ख० ।

२. साधनके—ख०, साधिके—पू० मु० ।

३. 'घृताशने' प्रभृति 'मध्वशन' पर्यन्तं नास्ति—क० ।

४. त्वात्तद्धर्म—ख० ।

५. भवति-ख० ।

६. विनात्—क० ।

७. दर्शकर्मविनाशेन—ख० ।

८. प्रत्याम्नेत्—क०

त्वधिकरणे नैव सिद्धान्तः । तस्मादेतत्सदृशमन्यत् स्थिरोदाहरणं मृग्यम् ॥ ४० ॥

[ १३. परिधौ यूपधर्मस्थिरीकरणम् ]

## तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् ॥ ४१ ॥ पू०

द्रव्ये नीवारादौ, गुणे च मध्वशनादौ, विकारे च नखनिर्भेदनादौ, प्रतिषेधे च न[1] गिरेत्यत्र भवतु प्राकृतकार्यसमवायात् प्रोक्षणादिचोदनानुबन्धः । परिधौ[2] यूपं व्यतिक्रम्य नियोजनसाधनतया श्रुतेऽपि न यूपधर्माः कर्तव्याः, तादर्थ्याभावात् । नियोजनार्थद्रव्यप्रयुक्ता धर्माः । न च परिधिर्नियोजनार्थः, परिधानार्थ[3]मसावुत्पादितो नियोजनमपि साधयतीत्येतावत् । यच्च बन्धनद्वारेण पश्वपूर्वाङ्गं द्रव्यम्, तदर्था धर्माः । तस्मान्न परिधौ कर्तव्याः ।

उच्यते—परिधानार्थोऽप्यसौ सप्तमीश्रुत्या, पुरोडाशकपालवत्तृतीयया तुषोपवापे नियोजने विनियुक्तस्तदङ्गमेव । तथा च वक्ष्यति—"[4]परिध्यर्थत्वादुभयधर्मः स्यात्" इति । तस्मात् कर्तव्या धर्माः । ननु[5] न तदर्थत्वेनोत्पादितः परिधानायैव तूत्पादितो नियोजनस्याप्यङ्गं भवति । यच्च नियोजनार्थमेवो[6]पात्तम्, तत्रैव धर्माः कर्तव्याः । यत्तु परप्रयुक्तं नियोजनेऽङ्गीक्रियते, तद्यथैव परेण प्रयुक्तं तथाभूतमेवोपादातव्यम् । तस्मान्न परिधौ यूपधर्माः कर्तव्या इति । तदभिधीयते—परप्रयुक्तोऽप्यसौ नियोजने तावद्विनियुक्तः । तत्साधननिवेशिनश्च धर्मास्तदर्थोत्पत्तिमतदर्थोत्पत्तिं[1] वा नापेक्षन्ते । कार्यार्था हि धर्मास्तत्र साक्षाद्वर्तितु-

1. अत्र 'अतदर्थोत्पत्तिम्' इति खसंज्ञितकोशाद् गृहीत्वा निवेशनीयम्, वाशब्दसंयोगात् । किन्तु वाशब्दस्तत्र नास्ति ।

१. गिरा गिरेत्यादौ—ख० ।
२. परिधो—क० ।
३. 'परिधानार्थ' नास्ति—ख० ।
४. धिह्यर्थ—ख० ।
५. न तु—क० ।
६. त्यादितं—ख० ।

मसमर्थास्तत्साधनं द्वारमाश्रयन्ते, तदर्थोपत्तिस्तु न तन्त्रीकर्तव्या । साधनता च परिधेरप्यस्त्येवेति कर्तव्या धर्माः । सत्सु च धर्मेषु यूपशब्दोऽपि [1]यूपायाज्यमानायेत्यनूहेन प्रयोक्ष्यते । न तु [ ननु ] यूपोत्पत्त्यर्था धर्माः परिधिश्चायूप एव बन्धने विनियुक्तः, खलेवालीवदिति व्यर्थास्तत्र धर्माः । यूपशब्दोऽपि न प्रयोक्तव्यः । अत्र कश्चित्तावद्यूपकार्यार्था धर्माः, न यूपोत्पत्त्यर्था इति कृत्वा चिन्त्यत इत्येवमाह । भाष्यविदस्तु समादधति—यूपशब्दोऽयमनेकेषां छेदनतक्षणाञ्जनोच्छ्रयणादिजन्यानां दृष्टादृष्टरूपाणां संस्काराणामभिधाता, न त्वेतेभ्यो व्यतिरिक्तं यूपाख्यं किञ्चिददृष्टमस्ति, प्रमाणाभावात् । तेनैभिः संस्कारैः संस्कृते काष्ठे पशोर्नियोजनं यूपे पशुं [2]नियुञ्जीतेत्यनेन विधीयते । तत्र ये परिधौ लुप्तार्थत्वात् परिधित्वविरोधाद्वा न सम्भवन्ति[3] छेदनतक्षणादिसंस्कारास्तन्मात्रमेव[4] हातव्यम् । न तु[5] तावता सम्भवदपि हातव्यं भवति । खलेवाल्यामप्यलुप्तार्थं खलेवालीत्वाविरुद्धं चाञ्जनादि कर्तव्यमेवेति वक्ष्यते[6] । एवं च [7]कार्यभेदाच्छेदनादीनां समुच्चयोऽपि सुकरो भविष्यति । सम्भविनश्च संस्कारैकदेशस्याभिधायकं पदान्तरं नास्ति । अवश्यं प्रकृतिवत्तद्रूपप्रकाशनं[8] [9]कर्तव्यमिति यूपशब्द एवालब्धसकलार्थोऽपि प्रयोक्ष्यते तत्प्रकाशनायेति निरवद्यम् ।। ४१ ।।

[ १४—अभ्युदयेष्टौ दधिपयसोः प्रणीताधर्मानुष्ठानम् ]

**परार्थे त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ।। ४४ ।। पू०**

---

१. धूमाज्यमानायेत्यत्रानूहेन—क० ।
२. युञ्जन्तीत्येते—ख० ।
३. संभवति—क० ।
४. मात्रामे—क० ।
५. ननु—क० ।
६. वक्ष्यन्ते—ख० ।
७. कार्यं—क० ।
८. काशं न—ख० ।
९. र्तव्य—क० ।

इह दधिश्रुत[शृत]योर्न केवलं तदर्थोपत्तिर्नास्ति, विनियोगोऽपि तयोः प्रणीताकार्ये [1]नास्त्येव। [2]तस्मान्न प्रणीताधर्मास्तत्र कर्तव्याः, ऐकान्तिकपारार्थ्याद्[3] दधिपयसोरिति विशेषाशङ्कायामुच्यते। प्रणीताकार्यं तावदविनियुक्ते [4]दधिश्रुते कुर्वाते। कार्यार्थाश्च धर्मास्तत्साधने कर्तव्या इति पूर्वेण न्यायेन प्रणीताधर्माः प्रवर्तेरन् दधिपयसोः ॥ ४४ ॥

[ १५—बृहद्रथन्तरधर्माणां व्यवस्थया तत्तत्सामगानकालेऽनुष्ठानम् ]

## एकार्थत्वादविभागः स्यात् ॥ ४६ ॥ पू०

**पृष्ठशब्दः स्तुतेरभिधाता** गुणवाक्यपर्यालोचनया गम्यते। तेन बृहत्पृष्ठं भवतीत्ययमर्थः—बृहत्साधनिकां[5] [6]पृष्ठाख्यां श्रुतिं[7][स्तुतिं] कुर्यादिति। एवं रथन्तरं पृष्ठं[8] भवतीति। **सा च** श्रुति[स्तुति]**रदृष्टार्थेत्युक्तं** स्तुतशस्त्रा[9]धिकरणे। कथं तर्हि विकल्पः? नन्वेवमदृष्टार्थत्वात् स्तुत्योः समुच्चयः स्यात्। अत आह—यस्मादेवम्, तस्मात्तयो**र्वचनाद्विकल्पः**, न तु न्यायात्। तेन **बृहद्वा पृष्ठं रथन्तरं वेति** स्थितम्।

ननु "पृष्ठैः [10]स्तुवते" इत्येवमुत्पन्नानां साधनविधानमेतत्, बृहत्पृष्ठं भवतीति। नैवम्; यद्यनेनोत्पत्तिः स्यात्, उत्पत्तिगता संख्या भेदिकेति बहूनि [11]पृष्ठानि समुच्चयेन

---

१. नास्तीव—क०।
२. तस्मात्त्व—ख०।
३. यदार्थाः—क०।
४. 'अधि'—ख० अधिकम्।
५. साधानिका—क०।
६. पृष्ठा—ख०।
७. श्रुति—क०।
८. पृष्टं—ख०।
९. शास्त्रा—क०।
१०. पृष्टै—ख०।
११. पृष्ठानि—ख०।

[1]क्रतौ भवेयुः। तत्र यदुक्तं सप्तमे नास्ति ज्योतिष्टोमे [2]पृष्ठबहुत्वमिति, तद्विरुध्यते। तस्माद् गुणविधानार्था पुनः श्रुतिरेषाम्। रथन्तरं [3]पृष्ठं भवतीति [3]बृहत्पृष्ठं[3] भवतीत्याभ्यामेव तु [4]पृष्ठद्वय[4] सामद्वयसाधनकं विधीयते। वचनाच्च विकल्प इति। **तत्र श्रुति[स्तुति]रदृष्टार्था**[5]। **साम [6]ऋगक्षराभिव्यक्त्या [7]दृष्टोपकारि। तस्माद्ये [8]पृष्ठसाधनभूते साम्न्युपनिबद्धा उच्चैर्गैयादयः, तेषामुभयत्र बृहति रथन्तरे च गानं[9] न व्यवस्थया, यथा व्रीहिसंबद्धं प्रोक्षणादि न[10] व्रीहिष्वेवावतिष्ठते,** यवेष्वपि भवति; **एवमिहापि**। पृष्ठसाधनलक्षणार्थो हि रथन्तरशब्दः, बृहदपि [10]पृष्ठसाधनमित्येतावतैवावस्थां[11] [वाव्यवस्थां] मन्यते ॥४६॥

## निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥ सि०

**अन्यथा बृहता साध्यते [8]पृष्ठम्, अन्यथा रथन्तरेणेति** भाष्यमनुभाषितम्। चोदयति—**नन्वेवं ब्रुवता व्रीहियवयोरपि धर्मव्यवस्थेत्युक्तं भवति। अन्यथा व्रीहयः साधयन्त्यन्यथा यवा इति। उच्यते—व्रीहयस्तण्डुलनिर्वृत्तिं कुर्वन्ति, ततः पिष्टानि, तेभ्यः पुरोडाशः, पुरोडाशाद्यागः, यागादपूर्वम्। यवेष्वप्येतत्सर्वं[12] तुल्यम्। किमतो** यद्येवम्? **एतदतो भवति–व्रीहियवयोरत्यन्त[13]दृष्टार्थत्वान्नापूर्वभेदः। तस्मादपूर्वं**

१. क्रतौ–क०।
२. पृष्ट–ख०।
३. व्यूहत्–क०।
४. द्वयं–क०।
५. दृष्टार्या–ख०।
६. स्यग–ख०।
७. पृष्ठो–क०।
८. पृष्ट–ख०।
९. 'न' नास्ति–क०।
१०. दिना–क०।
११. व्यवस्थाम्–ख०।
१२. ख वै–क०।
१३. न्तं–ख०।

यागसाधनद्वारेण धर्माभिलाषि। उभौ च व्रीहियवौ एकप्रकारेणैव यागसाधनम्। अत उभयत्र भवन्ति धर्माः। नास्ति व्यवस्था, अपूर्वभेदाभावात्। इहापि [१]व्रीहियवस्थानीयं [२]पृष्ठद्वयम्। प्रोक्षणस्थानीयं साम प्रोक्षणधर्मभूतमन्त्रादिस्थानीया उच्चैर्गेयादयः। तत्र यद्यपि साम रथन्तरादिकं [३]पृष्ठाख्यस्तुतिनिर्वर्तकत्वाद् दृष्टोपकारि, तथापि यस्य [४]पृष्ठस्योपकारि साम, तत् [५]पृष्ठमदृष्टनिर्वर्तकम्। ते च पृष्ठाख्ये स्तुती भेदेन वाक्यद्वयेन चोदिते। अदृष्टार्थत्वाच्च तयोरपूर्वभेदः। अपूर्वप्रयुक्ताश्च धर्मास्ते तद्भेदाद् व्यवस्थातुमर्हन्ति। ननु [६]नास्त्यत्रापूर्वभेदः, किन्त्वेकस्मिन्नेवापूर्वे द्वे अपि स्तुती चोद्येते। [७]एकार्थनिबन्धनत्वाच्च तयोर्न्यायादेव विकल्पो व्रीहियवयोरिव, न[८] तु[९] वचनात्। तस्मादव्यवस्था धर्माणां न्याय्या। तदुच्यते—न निष्पन्नरूपमपूर्वमास्ते, यत्रैते [१०]चोद्येते; किन्त्वाभ्यामेव स्तुतिभ्यां विहिताभ्यामपूर्वं [११]जन्यते। तेनादृष्टार्थत्वात् स्तुत्योर्यदेव शूरादिकया जन्यते, तदेव चित्रादिकयेति कुत एतत्। तस्माच्चित्रा[१२]दिका स्तुतिर्यथा स्वापूर्वं साधयति, येन च साधनेनोपगृहीता साधयति,

---

१. पृष्टं द्व–क० ।

२. व्रीहिस्थानीये समा प्रोक्षणस्थानीया उच्चैर्गेयत्वादुयः–पू० मु० ।

३. पृष्टा ख० ।

४. पृष्ट–ख०, पृष्ठ–क० ।

५. 'मदृष्ट' नास्ति–पु० मु० ।

६. नाना–क० ।

७. एकार्था० क०, एकार्थ्यं–ख० ।

८. ननु–क० ।

९. 'तत्' नास्ति–ख० ।

१०. चोद्यते–ख० ।

११. कल्प्यते तत्रा–ख०, जन्यते तत्रा–पु० मु० ।

१२. व्रीह्या–ख० ।

**शूरादिकापि** तैरेवोपगृहीता **साधयतीति नास्त्येतत्**, प्रमाणाभावात्। **अत एव** च न न्यायतो विकल्पलाभः। कुतः? **अनैकार्थ्यात्। वचना**देव तु **विकल्पः। तस्माद्यथा श्रयणानां**[१] "पयसा मैत्रावरुणं [२]श्रीणाति सक्तुभिर्मन्थिनम्" इत्येवमादीनाम**पूर्वभेदाद्व्यवस्था। एवमिहापि व्रीहि**[३]**यवौ तु न साक्षादपूर्वस्य साधकौ। यागाच्चापूर्वम्। स** [1]**चाग्नेयादिभिरुत्पादितो व्रीहियववाक्ययोर्द्रव्यविधानायानूद्यते।** [2]**नोभाभ्यां यागोत्पत्तिः क्रियते, येन यागभेदोऽपूर्वभेदश्च स्यात्। तस्मात्** [3]**तत्रापूर्वस्याभिन्नत्वाद्युक्ता धर्माणामव्यवस्था।** 'बृहद्रथन्तरयोस्त्वपूर्वभेदाद् व्यवस्थेति। भाष्यस्य चायमर्थः—निर्देशसामर्थ्यात् केषुचिद्धर्मेषु बृहन्निर्दिश्यते, केषुचित्तु रथन्तरम्। तस्य निर्देशस्य भेदस्य [शभेदस्य] अर्थवत्त्वादिदमवगच्छामः—अन्यथा बृहत्साधयत्यन्यथा रथन्तरं साम। अपूर्वभेदानुबद्धं स्तुतिद्वयं सामद्वयेन साध्यत इत्यर्थः। न केवलं चोदनात एव स्तुत्योर्भेदः, किन्तु प्रत्यक्षं खल्वप्यन्यत्वमुपलभामहे—रथन्तरं शूरादिकाम्, बृहत्तु चित्रादिकामिति। तस्माद्व्यवस्थेति।

**अन्ये** त्वेतदेवमत्ययथा श्रुतं[4] भाष्यं व्याचिसन्तः [व्याचिख्यासन्तः] स्तुत्योरपूर्वैक्यमङ्गीकृत्यैव सिद्धान्तमाहुः। **यद्यपि साम दृष्टोपकारि,** तथापि

---

1. आग्नेयादिभिरुत्पादित इति। "यदाग्नेयोऽष्टाकपालः" इत्यादिभिरुत्पत्तिविधिभिरुत्पादित इत्यर्थः।
2. नोभाभ्यामिति। 'व्रीहिभिर्यजेत यवैर्यजेत' इति वाक्याभ्यामित्यर्थः।
3. तत्रेति व्रीहियवस्थले इत्यर्थः। पूनामुद्रणस्थे 'तत्रापूर्वस्य भिन्नत्वाद् युक्ता व्यवस्था' इति पाठे तु तत्रेति बृहद्रथन्तरयोरित्यर्थः कर्तव्यः, परन्तु स पाठो न युक्तः; 'बृदद्रथन्तरयोस्तु' इति समनन्तरतन्त्ररत्नवचनवैयर्थ्यापातात्।
4. एतदेवमत्ययथाश्रुतमिति। एतत् कृतव्याख्यानम्। अस्य भाष्यमित्यनेनान्वयः। एवं वक्ष्यमाणप्रकारेणात्ययथाश्रुतम् अत्यन्तमयथाश्रुतं भाष्यातिक्रमेणेत्यर्थः।

१. च अधिकः—क०।

२. श्रीणा—ख०।

३. इत आरभ्य 'यदि हि स्यादन्यथा' इत्येतावान् पाठो नास्ति—ख०।

**स्तोभास्त्वदृष्टोपकारिणः।** स्तोभांशेन त्वदृष्टार्थं सामेत्यर्थः। तच्चादृष्टं धर्माणां प्रयोजकम्। न च यद्रथन्तरेणादृष्टं क्रियते, तद्बृहतेति प्रमाणमस्ति। **तस्मा**-द्भिन्नादृष्टसाधनस्तोभ**प्रयुक्ता उच्चैर्गेयत्वादय** इत्य**तो व्यवस्था। तथा च** भाष्यकारो **वक्ष्यति–साम्ना च दृष्टमदृष्टं च क्रियत इति।** स्तोभांशेना-दृष्टमदृष्टं[म्, अं]शान्तरेण तु दृष्टम[दृष्टम्। अदृष्ट ]प्रयुक्ताश्चोच्चैर्गेयत्वादयः। अतो व्यवतिष्ठन्त इति भाष्यार्थः, **तदयुक्तम्** ; नहि रथन्तरादिधर्माः स्तोभप्रयुक्ताः। यदि हि तथा स्युः, ततो 'रथन्तरे प्रस्तूयमाने' इत्यत्र **रथन्तरशब्दः स्तोभ-लक्षणार्थः स्यात्।** न चैवं युक्तम्। **अपि च स्तोभाश्चोच्चैर्गेयत्वादयश्च साम्नि गुणभूताः। गुणानां च परार्थत्वादित्युक्तम्।** अपि **चारुणैक**-हायनीन्**यायोऽपि** तावदिह **नास्ति।** स्तोभानां च धर्माणां च येन सम्बन्ध-मात्रमपि तावत् स्यात्। किमङ्ग पुनरङ्गाङ्गित्वम्। कथं नास्तीत्याह—**स्तोभाना-मुच्चैष्ट्वादीनां च परस्परं निराकाङ्क्षत्वात्।** द्रव्यगुणयोर्हि यथाक्रमं गुणद्रव्याकाङ्क्षिणोर्युक्तः परस्परं नियमसम्बन्धः। न त्विहैवमस्ति। इदमाकूतम्—नादृष्टार्थं साम। दृष्टमेव तु साम्नः प्रयोजनम्। साम्नाङ्गभूतं बृहददृष्टम् (?) स्तोभैः क्रियते। न चाङ्गादृष्टप्रयुक्ता धर्माः, किन्तु रथन्तरकार्यप्रयुक्ताः। अङ्गादृष्टप्रयुक्तत्वे हि रथन्तरशब्दः स्तोभलक्षणार्थः स्यादिति। **यत्तु साम्ना हि दृष्टमदृष्टं च** क्रियत **इति** भाष्यम्। तस्यायमर्थः—**ऋगक्षराभिव्यक्त्या दृष्टं** साक्षात्करोति। **येन पुनरदृष्टार्थां स्तुतिमक्षराणि** कुर्वन्ति, **तेनादृष्टमपि** परम्परया साम्ना क्रियते। ततश्च तद्भेदाद्धर्माणां व्यवस्था सिध्यतीत्यभिप्रायः। न सामैवादृष्टार्थमिति। स्तोभास्तु साम्नाङ्गभूत[ साम्नामङ्गभूत ]मदृष्टं जनयन्तीत्यु-क्तम्। येऽपि प्रकारभेदादेव धर्मव्यवस्थामाहुः, अन्यथा बृहदन्यथा रथन्तरं स्तुतिं निर्वर्तयतीति। तेषां मते प्रकारद्वयविधुरेषु कण्वरथन्तरादिषु न बृहद्धर्माः, न रथन्तरधर्माः स्युः; द्वाराभावात्। प्रकृतौ हि यदेवंविधं तत्प्रयुक्ता धर्माः, न च कण्वरथन्तरमेवंविधम्। तस्मात्तत्र धर्मा न स्युः। अपि च य [चायं] प्रकारभेदो न शास्त्रे विवक्षितः। किं तर्हि? स्वाभाविकः। न चैवं धर्मव्यवस्था भवति।

यदि हि स्यात्, अन्यथा [1]**नखैस्तुषकणविप्रमोकः** क्रियते, अन्यथोलूखल-मुसलाभ्यामिति नोलूखलमुसलधर्मा नखेषु भवेयुः। तस्मादपूर्वभेदाद्धर्म-व्यवस्थेति सिद्धम् ॥ ४७ ॥

[ १६—कण्वरथन्तरेऽविरुद्धानां बृहद्रथन्तरधर्माणां समुच्चयः ]

## अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन् ॥ ४८ ॥ सि०

भाष्योक्तं सिद्धान्तमनुभाषते—**द्वेधा धर्माणामन्यदीयानामन्यत्र प्राप्तिश्चोद-केन कार्यापत्त्या च**। यदि हि केवलचोदकेन प्राप्तिः स्यात्, ततो यथाप्रकृति व्यवतिष्ठेरन् धर्माः[2]। कार्यापत्त्यापि भवन्ति धर्माः। **कण्वरथन्तरञ्च**[3] बृहद्रथन्तरयो-रुभयोः **कार्यं**[4] **आपन्नम्**। **अत उभयधर्मग्राहि**। तत आह भाष्यकारः—**अर्था-पत्तित** इह[5] धर्मा भवन्ति, न[6] चोदकेनेति कार्यापत्तिमर्थापत्तिमाह। एवमनुभाष्य दूषयति—**तदेतदयुक्तम्**। नहि **बृहद्रथन्तरयोरग्निष्टोमे समुच्चयः**। **किमतो** यद्येवम्? **एतदतो भवति—यद्यप्यग्निष्टोमस्य बृहद्रथन्तरे पृष्ठसाध-नत्वेनावगते, तथापि तयोर्वैकल्पिक**पृष्ठाख्यस्तोत्रद्वयसाधन[7]त्वेन वैकल्पिक[8]त्वादेकस्यैव बृहतो रथन्तरस्यैव[9] वा कार्ये एकस्मिन्नेव स्तोत्रे कण्वरथन्तर-मेकस्मिन् प्रयोग [10]**आपद्यते**। **एवं चेदेकस्यैव धर्मान् ग्रहीष्यति**। इद-

---

१. अयशोध यन्त्रमेकं क्रियते–ख० ।

२. धर्मः–क० ।

३. तरबृ–ख० ।

४. कार्यं–ख० ।

५. उभयधर्माः–क० ।

६. 'न' नास्ति–ख० ।

७. 'मर्थापत्ति' अधिकः–क० ।

८. कस्यैव–क० ।

९. 'एव' नास्ति–ख० ।

१०. आपद्येते–ख० ।

माकूतम्—स्तोत्रद्वयं[1] तावद् विकल्पेनैव प्रकृतिवद्विकृतावपि प्राप्नोति, न समुच्चयेन[2]। तेन तयोरन्यतरदेव क्रतौ[3] कर्तव्यम्। कण्वरथन्तरमप्यन्यतरदेव कुर्वंत्तद्धर्मानेव लभते, नान्यधर्मानिति। सूत्रस्य चायमर्थः—अप्राकृते कण्वरथन्तरे द्वयोः कार्यापत्त्या धर्मसमावेशं पूर्वपक्षं शङ्कमानस्योत्तरम्—व्यवतिष्ठेरन् धर्माः। कुतः? तद्विकाराद्विरोधाच्च। ज्योतिष्टोमविकारो हि वैश्यस्तोमः। तत्र प्रकृतिवदेव स्तोत्रद्वयं विकल्पते। तद्विकल्पाच्च तत्प्रयुक्ता अपि धर्मा विकल्पितुमर्हन्ति। विरुद्धा धर्मा उच्चैर्गेयमित्यादयः। तस्माद्व्यवस्थेति सिद्धम्॥ ४८॥

[१७—बृहद्रथन्तरोभयसामके क्रतौ रथन्तरादिधर्माणां प्रकृतिवद्व्यवस्थाधिकरणम् ]

## उभयसामनि चैवमेकार्थापत्तेः॥ ४९॥ पू०

पृष्ठानुवादेन कण्वरथन्तरवत् सामद्वयं विधीयते। [4]अतश्च यद् बृहतः कार्यं पृष्ठम्, तदुभाभ्यां साध्यते। तथा[5] रथन्तरकार्यमपि। कार्यप्रयुक्ताश्च धर्माः। तेनोभयत्राप्युभये भवितुमर्हन्ति। यथा कण्वरथन्तरे द्वयानामपि धर्माणां व्यवस्थया प्रयोगः, तद्वदिहाप्युभयोरप्युभयधर्माः। तेनोभयात्राप्युभयेऽव्यवस्थया स्युरिति। सिद्धान्तमाह—**पृष्ठानुवादेन कण्वरथन्तरविधिः, "यत्[6] पृष्ठं तत् कण्वरथन्तरम्" इति, बृहद्रथन्तरे तु न पृष्ठानुवादेन विधीयेते।** किं तर्हि **चोदकेन विकल्पेन प्राप्नुवतीव[7] [ वती इव ] वचनेन समुच्चीयेते।** अन्यथा अप्राकृतकार्यता स्यात्। **तस्मादि**हापि भिन्नादृष्टसाधनत्वा**द्यथाप्राप्ते एव** व्यवस्थितधर्मके **प्रयोक्तव्ये**। तदिदमुक्तं भाष्यकारेण—साम्नापि दृष्टमदृष्टञ्च क्रियत इति। कथं तर्हि [8]पृष्ठानुवादेनाविहितयोः पृष्ठसाधनत्वम्।

---

१. द्वये–ख०।
२. येन्तेन–क०।
३. प्रकृतौ–क०।
४. तत्र–ख०।
५. तदा–क०।
६. वत्–क०।
७. 'इव' नास्ति–ख०, पू० मु०।
८. पृष्ठा–ख०।

अत आह—**यद्यपि** [1]**च पृष्ठशब्दो नोच्चारितः, तथापि**[2] **पृष्ठसाधने प्रकृतौ दृष्टे इति विकृतावपि दृष्ट[ पृष्ठ ]साधने एव** भविष्यतः। **नान्यस्मिन् प्रदेशे प्रयोक्तव्ये इति** ॥ ४९ ॥

[ १८—पार्वणहोमयोर्विकृतावनतिदेशाधिकरणम् ]

**पार्वणयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि ॥५१॥ सि०**

पार्वणाविति [3]तद्धितश्रुत्या पर्वदेवत्यौ होमौ। पर्वशब्दश्च काले प्रसिद्धः। तत्सम्बन्धात्तु कर्मणि लक्षणा। न चेह लक्षणाश्रयणे कारणमस्ति। तस्मात् काला-[4]भीज्या। सा चारादुपकारिकेति विकृतिष्वपि कर्तव्येति पूर्वः पक्षः। सिद्धान्तस्तु—नायं कर्मणि लक्षणाशब्दः, तत्रापि प्रसिद्ध्यविशेषात्, अवयवव्युत्पत्तेश्च। तथाहि—प्रीणातेर्दानकर्मणः [5]पर्वशब्दः। स च दीयते [6]तस्मि[ अस्मि ]न्नित्यधिकरणव्युत्पत्त्या काले वर्तते, भावव्युत्पत्त्या तु समुदाये। तेनोभयत्रापि श्रुत्यैव वर्तते। तत्र प्रकरणात् सामवायिकत्वलाभाच्च समुदायाभीज्येयं[7] तत्संस्कारार्था। न च सौर्यादिष्वयं समुदायोऽस्ति, नापि समुदायविकारित्वं तेषामस्ति; समुदायिविकारित्वात्। नापि समुदायकार्यापन्नमर्थान्तरं तेष्वस्ति, [8]येनोहेनापि प्रवृत्तिः स्यात्। [9]तस्मादप्रवृत्तिः सौर्यादिषु पार्वणयोरिति। यस्त्वाग्नेयादीनां[10] सौर्यादीनां

---

1. 'च' नास्ति—क०।
2. 'अपि' नास्ति—क०।
3. तद्धितवबुत्या—क०।
4. लापीज्या—ख०, कालाख्या—क०।
5. 'पर्वशब्दोः' नास्ति—क०।
6. यस्मिन्—ख०।
7. अभीज्यैवेयं—ख०।
8. यतो—क०।
9. तस्मात्प्रवृ०—ख०।
10. 'सौर्यादीनां' नास्ति—क०।

चावान्तरव्यापारात्मकापूर्वभेदेन साधनभावप्रकारभेदात् साधनविशेषप्रयुक्तत्वाच्च धर्माणामाग्नेयाद्यङ्गभूतयोः पार्वणयोरप्रवृत्तिर्विकृतिष्विति वदति, [1]तन्मतेऽवघातादीनामप्याग्नेयादिसाधनविशेषप्रयुक्तत्वात् ; अन्यथाज्यौषधसान्नाय्यधर्माणां साङ्कर्यप्रसङ्गात् सौर्यादिषु[2] तथाविधसाधनत्वाभावादप्रवृत्तिः स्यात् ।

अथ साधनभावभेदेऽपि तेषामतिदेशात् स्यात् प्रवृत्तिः । एवमतिदेशशास्त्रमाग्नेयव्यापारो यादृशः, तादृशः सौर्यव्यापारोऽपि कर्तव्य इति । अवघातसम्पादितहविस्साध्यश्चायं व्यापार इति, तथैव[3] सौर्यव्यापारोऽपि कर्तव्य इति सिद्ध्यत्यवघातादीनां प्रवृत्तिरित्युच्यते; तथा सति पार्वणयोरप्यतिदेशादेव प्रवृत्तिः स्यात् । तस्मात् समुदायार्थत्वात् पार्वणयोरेतद्[4][रतद्]विकारत्वाच्च सौर्यादीनामप्रवृत्तिरित्येवं वक्तव्यम् । सम्भवति च समुदायस्य देवतात्वम् । उद्देश्यमात्रलक्षणत्वाद् देवतात्वस्य, [5]मन्त्राभिहितत्वाच्च । प्राकृतानां[6] कर्मणां व्यासज्यदेवतात्वं न प्रत्येकम् । अतः समुदायप्रयुक्तत्वात् [7]समुदायिविकारेष्वप्रवृत्तिः । तथा च सूत्रम्—समुदायार्थसंयोगादिति । भाष्यकारेण चाष्टमेऽध्याये चतुर्होत्रा[8]द्यभिमर्शनद्वयं समुदायार्थत्वात्, विकृतिषु समुदायाभावान्न प्राप्नोतीति चोदयित्वोक्तम्—न प्राप्नुयाद्यदि समुदाययोरभिमर्शन[9]द्वयमुच्येत, तयो[10]स्त्वनभिमृष्टव्यत्वात्[11] । समुदायिनामेव लक्षणयाभिमर्शनमुच्यते[12] ।

१. न तन्मते—क० ।
२. 'च' अधि०—ख० ।
३. श्राग्नेय—ख० ।
४. यो तद्वि०—क० ।
५. तन्त्रा—ख० ।
६. प्रकृता०—क० ।
७. दाये०—क० ।
८. त्राभिम—ख० ।
९. 'द्वयं' नास्ति—ख० ।
१०. ततोस्त्व—क० ।
११. प्रष्ट—ख० ।
१२. मर्षमुच्यते—क० ।

समुदायिविकारश्च सौर्यः ।' तस्मात्तत्रापि चोदकप्राप्त्याभिमर्शनमिति । एवं चेत् [ च ] समुदायार्थत्वात् पार्वणयोरप्रवृत्तिरिति सिद्धम् ॥ ५१ ॥

[ १९—पार्वणहोमयोर्व्यवस्थया दर्शपूर्णमासयोरनुष्ठानम् ]

अत्रानन्तरम् "उभयोरविशेषात्"[1] इत्यादि सूत्रद्वयम् । तदधिकरणान्तरमेव भाष्यकारेण व्याख्यातम् । तदाक्षिपति—**किमुभौ पौर्णमास्याममावास्यायां चेत्येतदयुक्तमधिकरणा**[2]**न्तरम्**, पूर्वपक्षासम्भवात् । [3]यदि हि पूर्वमेव **समुदायसंस्कारकौ होमाववगतौ, तदा यः पौर्णमासीलिङ्गः, पौर्णमास्यामेव** [4]स **प्राप्नोतीतरोऽपीतरत्रैवेति नास्त्यनियमता**[तः]प्रसङ्गः । **तस्मादन्यथा वर्ण्यते—प्रयोजनसूत्रे** एते पूर्वविचारस्य । **यदि पर्वशब्दः कालवचनः**[5], **तथा सति कालस्यासंस्कार्यत्वादारादुपकारकौ स्याताम् । कथं** कालस्यासंस्कार्यत्वम् ? यावता कर्माङ्गत्वात् [6]सापि कर्तव्य [सोऽपि संस्कर्तव्यः] एव । उत्तरम्—**यद्यपि** [7]कालस्य **कर्माङ्गताऽवगम्यते, तथापि सकृदेवादौ**[8] स्मृत्वा [9]चोदिते काले **कर्म प्रस्तूयते**[10] । **न** तस्य **भूयो भूयः स्मृत्या प्रयोजनम्**, येन कर्ममध्ये स्मर्येत । [11]**यथाऽन्यानि यज्ञाङ्गानि भूयो भूयः स्मारकमपेक्षन्ते, नैवं कालः । तस्मात् कालवचने**[12] सत्यदृष्टार्थौ **होमौ प्राप्नुतः** । तत

१. षादिति—क० ।
२. णान्तरकरणम्—ख० ।
३. यदा—ख० ।
४. 'सः' नास्ति—क० ।
५. वचसह—क० ।
६. सोऽपि स्मर्तव्यः—ख० ।
७. 'कालस्य' नास्ति—क० ।
८. कृदेवासौ—क० ।
९. वेदिते—पू० मु० ।
१०. प्रसुयते—क० ।
११. तथा—क० ।
१२. 'पर्वशब्दे' अधिकः—ख० ।

आह भाष्यकारः—[१]**कालाभीज्यायां वैकृतेषु**[1]**प्रवृत्तिरिति**, [२]अदृष्टार्थत्वादिति[३] भावः। तस्मात् कालाभीज्यायामारादुपकारकत्वम्।

ननु कर्ममध्ये मा [४]नाम स्मारि कालः, सूत्रकृदेवादौ[सकृदेवादौ] स्मृतत्वात्। अकर्मकाले तु कालस्मारकौ कस्मान्न भवतः? अत आह—**न च प्रकरणादुत्कृष्य** [५]**कालस्मारकौ कल्प्येते**। कुतः? **फलकल्पनाभयात्**[६]। **तस्माद्यदि**[७] **कालवचनः पर्वशब्दः**, यथा पूर्वः पक्षः, **तथा सत्यारादुपकारकौ** स्याताम्। [८]आरादुपकारकत्वाच्च **न लिङ्गं व्यवस्थां करोति। अत आह** सूत्रकारः—**उभयोः** पर्वणोः[९] पूर्वपक्षे स्यादविशेषात्, लिङ्गेन विशेषा[१०]सिद्धेरिति। सिद्धान्ते तु **समुदायवाचकत्वे** सति **तस्य** समुदायस्य **संस्कार्यत्वात्** [११]**प्रभवति व्यवस्थाकरणे लिङ्गम्**[१२]। **अत आह**—"यदभीज्या वा तद्विषयौ" इति। यद्यपि [१३]चात्रोहानूहौ न स्तः, तथाप्यूहसिध्यर्थमवान्तरव्या[१४]पारनिरूपणस्य प्रस्तुतत्वात्, [१५]तत्प्रसङ्गात् पार्वणयोरवान्तरकार्यं निरूप्यत इति संगतिः॥ ५२॥

---

1. कालभीज्यायां तयोरप्रवृत्तिरित्यधिकरणारम्भे स्थितस्य भाष्यस्यायमर्थतोऽनुवाद इति द्रष्टव्यम्।

१. कालभी—क०।

२. दृष्टार्थ—क०।

३. दिभावः—क०।

४. नाम स्मार्सि—क०।

५. संस्कार—ख०।

६. भावात्—क०।

७. यदि—क०।

८. आरादुपकारकैकत्वात्—पू० मु०।

९. पर्वणयोः—क०।

१०. विशेषसिद्धेः—क०।

११. भवति—क०।

१२. मित्याह—ख०।

१३. चात्रोहौ—क०।

१४. कार्य—ख०।

१५. न तु सामान्यावर्णणो—क०।

[ २०—प्रयाजानामारादुपकारकत्वम् ]

## प्रयाजेऽपीति चेत् ॥ ५९ ॥ पू०

पूर्वेण न्यायेन प्रकृतक्रतुसम्बन्धिनां समिदादीनां संस्कारकत्वेन यागा विधीयन्ते। द्वितीयान्तेनापि च[1] समिदादिपदेन विष्णुं यजतीत्यादिवद् युक्तमेव देवताविधानम्। एवं च सामवायिकत्वं दृष्टार्थत्वं भविष्यति। अन्यथारादुपकारकत्वमदृष्टार्थत्वं च स्यात्, तच्चान्याय्यम्। तस्मात् समिदादिसंस्कारार्था यागा इति पूर्वः पक्षः। सिद्धान्तं भाष्यव्याख्यया दर्शयन् भाष्यमनुभाषते। **अत्र सिद्धान्ते ग्रन्थः—"विष्णुं यजति, वरुणं यजति" इति परिचोदना।** परिहारभाष्यम्—[2]कल्प्येत वा तादर्थ्यम्, शब्दान्तरेण [3]वा विहितं गम्यत इति। तत्र द्वितीयं परिहारं द्वेधा व्याचष्टे—**अत्रोच्यते, वाक्यान्तरेण वैष्णवो यागो विहितः। [4]तस्यायमनु**वादः। अनुवादश्च यथाप्राप्ति वर्णयितव्यः। तेन यद्यपि द्वितीयाकर्माभिधायिनी सम्प्रदान[5]-रूपां देवतां न वदति, तथापि लक्षणया सम्प्रदानत्वमेव प्रतिपादयति। उद्देशपूर्वको हि त्यागो यागः। तत्र देवतायाः शब्दार्थभूते त्यागे कर्मत्वं नास्ति। तद्विशेषणभूते तूद्देशेऽस्त्येव कर्मता। तेन तद्गतं कर्मत्वं सा येऽप्युपचर्य [त्यागेऽप्युपचर्य] विष्णुं यजतीति निर्देश इति। एवं समस्तवाक्यानुवादमुक्त्वा परिहारान्तमाह—अथवा **याग एवात्र विधीयते।** तत्र **प्रकरणसन्नि[6]धिभ्यां मान्त्रवर्णिको विष्णुः प्राप्तः। तस्य** प्राप्तस्य लक्षणयाऽ**यमनुवादो यागस्तुत्यर्थः।** इत्थं [7]नामायं यागः प्रशस्तः, यदत्र विष्णुर्देवतेति। न तु [ ननु ] तत्प्रख्यतया नामधेयं कस्मान्न भवत्यत आह—**न चात्र नामधेयं विष्णुर्द्वितीयान्तः।** कुतः? अत्यन्तरूढित्वेन[8]

---

१. 'च' नास्ति—क०।

२. कल्पेत—क०।

३. 'वा' नास्ति—क०।

४. तस्यायमनुवादश्च—क०।

५. प्रधानरूपो—ख०।

६. सन्निभ्यां—क०।

७. नायं—क०।

८. रुढित्वेन—क०।

**यजतिसामानाधिकरण्याभावात्**। अथवा द्वितीयान्तत्वादेव करणभूतेन [1]**यजिना** सामानाधिकरण्याभावात्। एवं दृष्टान्तं परिशोध्य प्रकृतमनुसन्धत्ते—**प्रयाजेष्वपि मान्त्रवर्णिक** एव **देवताविधिः**। यागमात्रं त्वत्र विधीयते। तस्य त्र[2] संयुक्तोत्पन्नस्य प्रकरणावगतादाराद्रुप[ ताराद्रुप ]कारकत्वस्य पश्चात् "समिधो अग्न आज्यस्य व्यन्तु" इत्यादिभिः क्रमप्रकरणप्राप्तैर्मन्त्रैर्देवता गुणत्वेनैव समर्प्यते। यदि यागमात्रं विधीयते, कथं तर्हि समिदादिशब्दाना[3]मन्वयः ? अत आह—**अग्निसमिदादयश्चैवमेव** विष्णवादिवद्देवा**नूद्यन्ते** मन्त्रवर्णप्राप्ताः। अग्निशब्दस्तनूनपात्प्रदर्शनार्थः। **संज्ञारूपा वा** भवन्तु विष्णुसमिदादिशब्दाः। [4]तत्प्रख्यन्यायेन यजिसामानाधिकरण्यमस्ति। यजेर[5]पि त्वा[6]र्थिकं कर्मत्वमस्त्येवेति। नन्वेवं संज्ञात एव कर्मभेदः स्यात्, नाभ्यासस्य भेदकत्वं स्यात्। ततः पूर्व एव पक्षः [7]श्रेयान्। तत्र हि समिदादिशब्दानां मन्त्रवर्णप्राप्तदेवतानुवादत्वेन संज्ञात्वगुणविधित्वयोरभावात्। न संज्ञातो गुणतो वा भेदसिद्धिरिति निरपवादमभ्यासस्य [8]भेदकत्वं सिध्यति। अत आह—**न च** संज्ञात्वेऽपि **सा भेदिका, किन्त्वभ्यास एव भेदकः**। कथमित्याह—**तदुक्तं द्वितीये**—

प्रायेणाख्यातसम्बन्धी नामेष्टं पारतन्त्र्यभाक्।

इत्यादिना।

---

१. ययिना–क०।

२. वा–ख०।

३. माश्रयो–क०।

४. तत्प्रत्यक्ष–क०।

५. रप्या–क०।

६. र्थिक–क०।

७. 'श्रेयान्' नास्ति–क०।

८. भेदकं–ख०।

तस्मान्नैव [1]प्रयाजेज्या [2]देवसंस्कारिका मता ।
आराdुपक्रियात्वे सा देवता मन्त्रतो[3] गुणः ॥

**इति पार्थसारथिमिश्रकृतौ तन्त्ररत्ने**
**नवमाध्यायस्य द्वितीयः पादः ॥**



[ १—सौर्यादिविकृतावतिदिष्टमन्त्रे वैकृतद्रव्यवाचकपदोहाधिकरणम् ]

## प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥ सि०

सामसंस्कारविषय ऊहश्चिन्तितः । **मन्त्रविषय इदानीमूहश्चिन्त्यते । स च षडङ्गः ।** [1]यद्यर्थवन्तोऽर्थप्रकाशनार्था **मन्त्राः**, न तूच्चारणमात्रं[4] दृष्टं [ मात्रादद्दष्टं ] कुर्वन्ति । तथा[5] **मुख्यार्थाभिधायिनः**, न तु गौणार्थाः । **तथाऽपूर्वप्रयुक्ताश्च**[6] **धर्माः**[7], न त्व[8]ग्न्यादिस्वरूपप्रयुक्ताः[9], तथा **प्रकृतौ च समवेतार्थाभिधायिनः** । न[10] तु सवित्रादिपदस[11][ पदवदस ]मवेतार्थाः । तथा[12]

---

1. अत्र मन्त्राणां षडङ्गत्वविवरणपरे वार्त्तिके बहवः पाठभेदाः पूनामुद्रणस्थाःस्तत एवावगन्तव्याः ।

१. जेनया—क० ।
२. देज्य—ख० ।
३. न्त्रो—क० ।
४. मात्राद्दष्ट—ख० ।
५. तथापि—क० ।
६. 'च' अधिकः—क० ।
७. न त्वङ्गादि—क० ।
८. प्रयुक्तः—क० ।
९. 'च' अधिकः—क० ।
१०. ननु—क० ।
११. तत्सम—ख० ।
१२. तथा च यदि परार्था—क० ।

परार्थाः, न तु यज्ञपतिशब्दवत् परार्थाः। तथा **यदि** च प्राकृतस्थानापन्ना[१]न्य-द्रव्य**देवताका विकृतिरिति**।

**तथोहोऽपि** स्वय**मष्टविधः क्वचित्**। [२]**प्रकृतिरूह्यते** 'सूर्याय जुष्टम्' इति, लिङ्गं वचनञ्च तदवस्थम्। **क्वचिल्लिङ्गमूह्यते,** यथा 'वस्व्यसि रुद्रासि' इत्येक-हायन्यां मन्त्रो **'वसुरसि रुद्रोऽसि'** इत्येवमूह्यते साण्डे। अत्र प्रकृतिवचनं[३] तदवस्थम्। **क्वचिद्वचन**[४]**मूह्यते,** यथा 'छागस्य वपाया मेदसः' इत्ययं मन्त्रः **प्राजापत्येषु छागानामि**त्येवमूह्यते। तत्र[५] प्रकृतिर्लिङ्गं च तदवस्थम्। **क्वचित् प्रकृति**[६]**र्लिङ्गं** चोह्यते, यथा[७] अग्नये जुष्टमित्येत**दादित्यै**[८] **जुष्टमिति**। अत्र हि वचनं[९] तदवस्थम्। **क्वचित् प्रकृतिवचने ऊह्येते,** लिङ्गं तु[१०] तदवस्थम्। यथा अग्नये जुष्टमिति **'विश्वेभ्यो देवेभ्यः'** इति। **क्वचिल्लिङ्गवचने** ऊह्येते, यथा 'प्रास्मा अग्निं भरत' इति। अत्रास्मैपदं पुल्लिङ्गैकवचनम् 'मल्हा आलभेत' इत्यादिषु **'प्राभ्योऽग्निम्' इत्येवं** स्त्रीलिङ्गबहुवचनरूपेणोह्यते। अत्र प्रकृतिस्तद-वस्था। **क्वचित्त्रयाणामपि** प्रकृतिलिङ्ग[११]वचनानामूहः, यथा 'आपो देवीशुद्धाः स्थ' इति प्रोक्षण्यभिमन्त्रणार्थो मन्त्रः। तत्राप्पदं[१२] स्त्रीलिङ्ग[१३]बहुवचनान्तम्[१४]।

---

१. 'अन्य' नास्ति—क०।
२. प्रकृति—क०।
३. वचने—क०।
४. चनमप्यूह्ये—ख०।
५. अत्र—ख०।
६. प्रतिलिङ्गं—क०।
७. न्यथा—क०।
८. अदित्ये—क०।
९. वचने—ख०।
१०. च—ख०।
११. ङ्गं वच—क०।
१२. अप्शब्दः—ख०।
१३. लिङ्गो—ख०।
१४. न्तः—ख०।

'घृतं[1] प्रोक्षणम्' इति विहिते **घृते प्रोक्षणे 'घृतदेव शुद्धम**सि' इत्येवं नपुंसकलिङ्गैकवचने घृतपदनिक्षेपे[2] सर्वमेवान्यथा भवति। **क्वचित्तु** तदवस्थस्य सकलस्य **पदस्याभ्यासः**, यथा पशुगणे **एकधैकधेत्येक**धाशब्दोऽभ्यस्यते। तत्र यथा **प्रकृते[3] ऊहः**, तथा 'अर्थाभिधानं संयोगात्' इत्यादिना **प्रथमे पादे प्रायेण चिन्तितः**। अल्पशस्त्विदानीं प्रकृत्यूहः, यथास्मिन्नधिकरणे प्रतिनिध्यधिकरणे च। बाहुल्येन **त्विदानीं वचनोहश्चिन्त्यते**। इदानीं प्रकृतमधिकरणमनुसन्धत्ते। **ननु 'फलदेवतयोश्च' इत्येवमादिना गतार्थमेतत्। उच्यते—यत्तत्र [4]नाशङ्कितं तदत्राशङ्क्यते**। किं तदित्याह—**चोदको** हि **द्विविधः—शब्दचोदकोऽर्थचोदकश्च**। कार्यमर्थशब्देनोच्यते। न केवलं प्राकृतमन्त्रकार्यमेव प्रकाशनं विकृतावतिदिश्यते, किन्तु [5]साधनं शब्दस्वरूपमप्यग्न्यादिना[दीना]मतिदिश्यते। तेनाग्निशब्दस्यैवातिदेशेन देवतान्तरवत्यामपि विकृतौ देवताप्रकाशनार्थतया विनियोगादैन्द्रीन्यायेन गुणवृत्त्याग्निशब्देनैव देवतान्तरं प्रकाशयितव्यमिति नोहः[6]। एतदेव विवृणोति—तत्र [7]**सौर्यं चरुं निर्वपेदित्येतद्विध्यादिवाक्यं** साकाङ्क्षं **विध्यन्तवाक्यै[8]र्निराकाङ्क्षीक्रियते,** विध्यन्ताधिकरणन्यायात्। तत्र **वाक्य[9]त्वसामान्याच्च** यथा **प्रयाजादिवाक्यानां** विधायकानां स्वार्थं विधातुमिहाति[10]**देशः, एवं मन्त्रवाक्यानामपि** यथाम्नातानामेव स्मा[11]रणार्थमतिदेश

---

१. घृतप्रो—क० ।
२. निक्षेपेण—क० ।
३. प्रकृते तूहः—क० ।
४. नाशङ्कीति—क० ।
५. तत्सा—ख० ।
६. नोहसिद्धिः—क० ।
७. सौर्ये—क० ।
८. दर्शपौर्णमासिकै—ख० ।
९. वाक्यं—ख० ।
१०. दिदेशः—क० ।
११. स्मरण—ख० ।

**इति पूर्वः पक्षः। उपकारापेक्षया तु सिद्धान्तः।** पदार्थजन्या उपकारा[१] अतिदिश्यन्ते। ननु[२] शब्दोऽपि चोदकेन प्राप्नोत्येवात आह—प्रयोजनभूतार्थ-**चोदकत्वेन** कारणेन **स** चोपकारातिदेशो[३] **बलीयान्**[४]। कुतः? **अर्थाभिधाना**[५]यार्थेऽतिदिष्टे तद्बलेना[६]र्थिको **हि शब्दचोदकः प्रवर्तते**। [७]**न** तु शब्दस्वरूपे शास्त्रेण **पृथगतिदेशोऽस्ति**। कुतः? **अदृष्टकल्पनाभयात्। तस्मान्नास्त्यक्षराणां** स्वरूपेणातिदेशः, **अर्थातिदेशस्तु** साक्षात्। तत्सिध्यर्थस्त्वा[८]र्थिकोऽक्षरातिदेशः। **सूर्यप्रकाशनं** चात्रार्थः। स[९] चाग्नि[ सनाग्नि]शब्देन प्रकाशयितुं शक्यते। तेन[१०] तस्य[ तेन न तस्य ] प्राप्तिरिति न प्राप्तिबलेन गौणत्वाश्रयणम्। किञ्च, प्रकृतौ समाम्नातेऽग्न्यादिशब्दे द्वे रूपे स्तः। अग्न्या[११]दिशब्दत्वं समवेताभिधायित्वं च। तत्राग्निशब्दस्वरूपं प्रकाशकत्वेन न विवक्षितम्, अदृष्टार्थप्रसङ्गात्, किन्तु[१२] समवेताभिधायिरूपं दृष्टार्थत्वात्। तत्र बहुषु समवेताभिधायिषु सत्सु पदविशेषाम्नानात् काममवघातादिवन्नियमादृष्टमात्रं कल्प्यताम्। तस्मान्नास्त्यक्षरस्वरूपातिदेशः। देवतार्थातिदेशस्तु देवताप्रकाशनका[१३]रि-

१. एवाति–ख०।
२. न तु–क०।
३. दिदेशः–क०।
४. बलवान्–ख०।
५. नायोर्थति–क०।
६. अर्थतो–क०।
७. ननु–क०।
८. तस्मिन् सिध्यर्थं त्वा–ख०।
९. सवनाग्नि–ख०।
१०. 'न' नास्ति–ख०।
११. आग्न्यादि–क०।
१२. देवता वा विरूपेण समवेताभिधायि–ख०।
१३. वाचित्व–क०।

स्वरूपस्यातिदेशः । प्रकृतौ ह्यग्न्यादिपदाम्नानं[1] समवेताभि[2]धायिमुख्याग्न्यादि-नियमार्थम्[3] । तेन विकृतावपि[4] समवेताभिधायित्वे[त्वेन] चोदकप्राप्तमेव[5] प्रयुज्यते । तदभावे हि तदभिधायकं पदान्तरं निक्षिप्यते । तदयमत्राधिकरणार्थः—दशमाद्ये कार्यातिदेशो वक्ष्यते । अत्र तु कार्येऽतिदिष्टे पश्चात् किं पदार्थानामप्यतिदेशोऽस्ति पृथक् शास्त्रेण, उत तेषामार्थिकोऽतिदेश इति । तत्र[6] पृथगतिदेशभ्रान्त्या पूर्वः पक्षः । कार्यत एव तु प्राप्तिरिति सिद्धान्तः ।

[ २—मौद्रे चरौ बर्हिस्तरणमन्त्रे रक्तपदोहः ]

## जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥ सि०

दर्भशब्देनैव द्रव्यस्य प्रकाशितत्वाद् हरितशब्दोऽदृष्टार्थः । तस्मात् पुण्डरीकेष्वपि हरितशब्द एव प्रयोक्तव्य इति पूर्वः पक्षः । सिद्धान्ते[7] स्वगुणद्वारेणापूर्वीये[8] द्रव्यप्रकाशने[9] दृष्टे सति नादृष्टकल्पना युक्ता । तस्मात् पुण्डरीकेष्वपि स्वगुणं प्रकाशयितुं रक्तपदनिक्षेपः कर्तव्यः ।

एवमन्तरागर्भिणीं व्याख्याय सूत्रवाक्यभेदपरिजिहीर्षया पुनरन्यथा व्याख्यातमिति ।

---

१. म्नान—क० ।

२. भिमध्ये—क० ।

३. मर्थम् , तेन—क० ।

४. 'सति' अधिकः—ख० ।

५. प्राप्तं मुख्यमेव—क० ।

६. तथा—क० ।

७. द्धान्तस्तु—ख० ।

८. पूर्वीयद्र—ख० ।

९. 'हरितशब्दे प्रयोजने' अधिकः—ख० ।

[ ३—लौकिके यूपस्पर्शे प्रायश्चित्तविधानम् ]

**लौकिको दोषसंयोगादपवृत्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ॥ ९ ॥ सि०**

अविशेषात् स्पर्शमात्रे[1] इदं प्रायश्चित्तम्। प्रकृतैकवाक्यतालाभाद्वा वैदिक एव स्पर्शोऽयथा हि फलं कल्प्येतेति पूर्वः पक्षः, सिद्धान्तस्तु लौकिक एव स्पर्शे स्यात्। [2]तत्र दोषसंयोगाद् इत्युक्त्वा[3] 'अपवृत्ते हि [4]चोद्यते' इति हेत्वन्तरमुक्तम्। तत्र भाष्यम्—अपि चाप्रवृत्ते कर्मणीदं प्रायश्चित्तं नैमित्तिकं चोद्यते—"यूपो वै यज्ञस्य[5] दुरिष्टमामुञ्चते" इत्यर्थवादगतस्य दुरिष्टशब्दस्य यद्येकमुपस्पृशेदित्यनेन सम्बन्धो[6] दुरिष्टे यद्येकमुपस्पृशेदिति। तस्माल्लौकिक इति। तदाक्षिपति—**येयं सूत्रावयवस्य व्याख्या—अप्रवृत्ते हि चोद्यत इत्यस्य** दुरिष्टयद्येकोपस्पर्शन**वाक्ययोरेकवाक्यतया कृता, सा न युक्ता।** कथम्? "अर्थैकत्वादेकं वाक्यम्" इति ह्येवमुक्तत्वात्। इह चार्थभेदाद् भिन्ने एते वाक्ये[7]। कथमर्थभेद इत्याह—स्तुतिस्तुत्यभेदाच्चार्थभेदः। [8]भिन्ने ह्यत्र स्तुतिस्तुत्ये। कथं भिन्ने? तदाह—'यूपो वै यज्ञस्य' इत्येतया निन्दया प्रतिषेध एव संबध्यते, 'तस्माद्यूपो नोपस्पृश्यः' इति।

ननु[न तु]प्रायश्चित्तविधिरेतेन सम्बध्यते, येनैकवाक्यता स्यात्। तथा यद्येकमुपस्पृशेदित्यस्यापि प्रायश्चित्तविधे[9]रपरा स्तुतिः कल्पनीया, पूर्वस्याः प्रतिषेधशेषत्वात्। तस्माद्वाक्यद्वयेऽपि स्तुतिभेदात् [10]स्तुत्यभेदाच्च नास्त्येकवाक्यत्वम्। अभ्युपेत्य

---

१. मात्रम्-ख०।
२. 'तत्र' नास्ति–क०।
३. स्वापवृ–क०।
४. चोद्यन्ते–क०।
५. यज्ञस्य दुष्टरि–ख०।
६. सम्बन्धात्–ख०।
७. वाक्ये न–क०।
८. भिन्नेत्यर्थः स्तुतीस्तुत्येव भिन्ने–क०।
९. विधे परा–क०।
१०. 'स्तुत्यभेदात्' नास्ति–क०।

ब्रूमः—न च दुरिष्टशब्दः समाप्तिवचनः, येन तत्संबन्धादपवृत्ते चोदना लभ्यते। [१]इष्टशब्देन समाप्तिरुच्यते वा न वा। सोपपदस्तु दुरिष्टशब्दः समुदायप्रसिद्ध्या पापवचनः। दुरिष्टं पापमित्यर्थः। यथा[1] दुष्टां[२] क्वो मन्दपे क्व [दुष्पक्कं मन्दपक्कं] इत्य[३]सिद्धवचनः समुदायप्रसिद्ध्या, तथेहापि। अभ्युपेत्यापि समाप्तिवचनत्व-मुच्यते—**न चोपस्पर्शनं निमित्तत्वेनानूद्यमानं दुरिष्टशब्देनोपपदेन विशेषयितुं न्याय्यम्,** [४]**इष्टे** यद्युपस्पृशेदिति निमित्तविशेषणे वाक्यभेदाद् **आर्त्तिवत्। तस्मादन्यथा** सूत्रावयवार्थो **वर्ण्यते। अपवृत्ते** हि नोपस्पृश्यः[५] **इति प्रतिषेधे[६] सति चोद्यन्ते[७]** प्रायश्चित्तत्वेन **मन्त्रा** [८]उपस्पर्शनेन निमित्तेन[९]। ततः किमित्याह—प्रतिषेधो **ह्यु[१०]परमोऽनितिकर्तव्यताभूतो** न प्रयोगवचन-स्याङ्गम्। विहितं हि क्रतौ[११] स्पर्शनमितिकर्तव्यतात्वेन। अतो न तद्वर्जनस्येति-कर्तव्यतात्वम्। अतो नाङ्गत्वमिति। **कथमनङ्गत्वमित्याह—यच्चेतिकर्तव्यतारूपं**

---

1. **दुरिष्टशब्दस्य पापार्थकत्वे दृष्टान्ततया दुष्कृतशब्दः पूनामुद्रितपुस्तके दृश्यते—'यथा दुष्कृतम्' इति। स एव दृष्टान्तः स्वरसः।**

१. **पृष्ट–क०।**

२. **दुष्पक्को मन्दपेक्क–क०।**

३. **अशुभवचनः–क०।**

४. **दृष्टे–क०।**

५. **नोपस्पृश्यत इति–क०।**

६. **'हि' नास्ति–ख०।**

७. **चोद्यते–ख०।**

८. **उत–ख०।**

९. **'निमित्तेन' नास्ति–ख०।**

१०. **ह्यनु परमानतिकर्तव्यतासूत्रो–क०; ह्युपरमो नेतिमिति कथमतङ्गकर्तव्यता-भूतो–ख०।**

११. **श्रुतौ–क०।**

तत् प्रकरणेन गृह्यते। **प्रतिषेधस्तु पुरुषार्थः**, विहितत्वात्। स्पर्शनस्य[1] क्रतौ तत्प्रतिषेधस्य क्रत्वङ्गतासम्भवात्। न च [2]ग्रहणाग्रहणवद्विकल्पः, पुरुषार्थतयापि प्रतिषेधोपपत्तेः। तस्मात् पुरुषार्थः। का पुनः पुरुषे प्रसक्तिरित्याह—**स हि स्वभावात्** स्वाच्छन्द्येन [3]विचरन् **कदाचिदुपस्पृशेदपि** कर्ममध्यगतो वा। तत्र प्रतिषिध्यते नोपस्पृशेद्यूपम्[4]। तत्र हि दुरिष्टपर्यायं [5]पापमाबद्धमिति। [6]भवतु प्रतिषेधस्य [7]पुरुपार्थत्वं प्रायश्चित्तस्य तु किमायातमत आह—**यस्य** पुरुषस्य **प्रतिषेधाङ्गं** [ धोऽङ्गं ] **तस्यैव** तदतिक्रमे प्रायश्चित्तमपेक्षितविधानात्। निषिद्धाचरणे हि प्रतीकारापेक्षा भवति। क्रतौ त्वप्रतिषिद्धत्वात् स्पर्शनस्य तत्रानपेक्षितं प्रायश्चित्तम्। तस्मात् पुरुषस्यैव प्रायश्चित्तं **ब्रह्महण इव**। नन्वस्मिन् पक्षेऽपि प्रायश्चित्तविधावुद्देश्ययूपस्पर्शनस्यैकादिसंख्यया विशेषणे वाक्यभेदः स्यादेव, अत आह—**तत्रैवं वचनव्यक्तिर्भवति—यद्येकमुपस्पृशेदि**त्येवं[**शेदेवं**] ब्रूयादिति। संख्याशब्द एवात्र विवक्षित इत्यर्थः। **प्रकरणाद्यूपमित्यनुवादः**। [8]ननु संख्यास्पर्शनमेव वाक्यान्निमित्तं स्यात्। कथं यूपस्य [9]प्रकरणात् प्राप्तिरत आह—**न च शक्या संख्योपस्प्रष्टुमिति, अर्थाच्च** संख्यालक्षितद्रव्यग्रहणात्। तत्र च प्रकृतत्वात् प्राप्तस्य **यूपस्यानुवादः**। किं पुनरेवमाश्रीयतेऽत आह—**यूपस्तु**। वाक्यादेव निमित्तांशे [10]विवक्ष्यमाणोऽशक्यः संख्यया विशेषयितुं **ग्रहवत्**। न तु

---

१. स्पर्शनक्रतौ–क०।

२. ग्रहणवत्–ख०।

३. अविचरन्–ख०।

४. 'हि' अधिकः–क०।

५. वा, पाप–क०।

६. भवितु–क०।

७. पुरुषः स्पृशेदपि कूर्मापार्थत्वं–ख०।

८. न तु–क०।

९. प्रकरणप्राप्तिः–क०।

१०. विवक्ष्यमाणे–क०।

[ननु] स्मृतावेव पुरुषार्थयूपस्पर्शप्रतिषेधोऽस्तीति तत्प्रतिषेधोऽनुवादमात्रं व्यर्थं स्यात्। तस्मादनृतवदनप्रतिषेधवत् क्रत्वर्थ एवायं युक्तोऽत आह—**इदमेव च वाक्यमस्याः स्मृतेर्मूलम् 'यूपचित्याद्युपस्पर्शने स्नायात्' इति**। तस्मान्न वैयर्थ्यमिति। यदुक्तमभावात्मकत्वान्न कर्माङ्गं प्रतिषेध इति, तत्र चोदयति—**ननु प्रतिषेधोऽपि कर्मणोऽङ्गं भवत्येव, यथा 'नानृतं वदेत्' इति।** उच्यते—युक्तं तत्र[1]। तत्र **हि द्विसाधनके कर्मणि व्रीहिमयं पुरोडाशं सङ्कल्प्य यवमयो न देय इत्युक्तम्**। अर्थप्राप्तं तत्र क्रत्वङ्गतयानृतवदनम्, कदाचित्तु व्रीहिभिर्यक्ष्य इत्युक्त्वा तद्विसंवादेन यवैर्यजेत। तन्न कर्तव्यमिति तत्र शास्त्रार्थः। **इह तु न द्वौ प्रयोगौ स्तः। सोपस्पर्शनको**[2]**ऽनुपस्पर्शनकश्च। यत्रानुपस्पर्शनके प्रयोगे उपस्पर्शनप्रतिषेधोऽङ्गं स्यात्।** एक एव ह्यत्र सोपस्पर्शनकः प्रयोगो विहितः। कथं तत्र[3] स्पर्शप्रतिषेधोऽङ्गं स्यात्; **विरुद्धत्वात्, ग्रहण[णाग्रहण]**न्यायस्य चात्रासम्भवादिति भावः।

ननु पुरुषार्थतयापि प्रतिषेधे तत्क्रत्वपि[तत् क्रतावपि]स्पर्शनं पुरुषार्थतयैव वर्जनीयं स्यात्। अतस्तदवस्थ एव विरोधः, अत आह—**यच्च तक्षणाद्युपस्पर्शनम्, तद्वाचनिकम्**। अतो न तस्य प्रतिषेधः। तथापि कथमप्रतिषेध इत्याह—[4]तद्विशेषतः तक्षणादिकर्तुरेव हि विहितम्। **अतो न सामान्यप्रतिषेधस्यायं विषय** इत्यविरोधः।

का पुनरूहलक्षणे तादर्थ्यचिन्तायाः सङ्गतिः? तामाह—**इदमधिकरणमुदाहरणप्रसङ्गेन**। पूर्वाधिकरणे हि यत्रैकमुपस्पृशेदित्येतद्वाक्यमनूहलिङ्ग[5]मित्याशङ्क्य व्यवस्थार्थमिति परिहृतम्। तत्प्रसङ्गेनेदमधिकरणमिति। इदानीमुत्तरस्य विचारस्य सङ्गतिमाह—पूर्वश्चोहः प्रातिपदिकविषयः। इतः प्रभृति वचनविषय ऊहः प्रतिपादयिष्यते, पाशं पाशौ पाशानितिवत्॥ ९॥

---

१. तन्न०—क०।

२. सोपस्पर्शनकोऽनुपस्पर्शनके प्रयोगे—क०।

३. तत्रोपस्पर्शनिषेधो—ख०।

४. तद्विशेषस्तत्क्षणादिकर्तुरेहि—क०; 'तक्षणादिकर्तुरेव हि' इत्यस्य स्थाने तक्षणादिकर्तरि च इति—पू० मु०।

५. इत्याह शङ्क्य—क०।

[ ४—एकवचनान्तबहुवचनान्तयोः पाशशब्दयोर्विकृतौ द्विवचनान्ततयोहः ]

**अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥१०॥ पू०**

तयोः समुच्चयं वक्ष्यतीति भाष्यमनुपपन्नम्। नहि समुच्चयो वक्ष्यते। न च सम्भवत्येकार्थत्वात्। अत आह—प्रकृतावुभयोर्निवेश इत्यर्थः। अङ्गत्वाभिप्रायं समुच्चय इति वचनम्, न प्रयोगाभिप्रायमित्यर्थः। तत्र बहुवचनान्तस्य प्रकृतावव[1]-वावयविनोरत्यन्तव्यतिरेकाभावेनावयवबहुत्वमवयविन्युपचर्य प्रवृत्तत्वेनान्यायनिगद-त्वात्, तद्वदेव विकृतावपि द्वयोः पाशयोरविकारेण प्रयोगोपपत्तेः, एकवचनान्तस्य त्ववयविसमवेतसंख्याभिधायित्वेन विकारप्रसङ्गात्; आर्षसंभवे चानार्षप्रयोगायोगाद् बहुवचनान्तस्याविकारेण प्रवृत्तिः। एकवचनान्तस्य निवृत्तिरिति प्रथमः पक्षः। चोदकेनैकवचनान्तस्यापि प्राप्तेरनिवार्यत्वात्, तस्य चोहमन्तरेण प्रकृतिवदभिधा-नाशक्तेर्विकारः। तेन च स्वसंख्याविशिष्टपाशप्रकाशनसिद्धेः, बहुवचनान्तस्य प्रयोग-समवेतसंख्याप्रकाशनासामर्थ्यात्। समग्राभिधानसमर्थस्यैकवचनान्तस्योहेन प्रयोगः, इतरस्य तु विकलत्वान्निवृत्तिरिति द्वितीयः पक्षः। तस्यापि तु प्राप्त्यनिवारणादुभयो-रपि यथाप्रकृतिप्रयोग इत्येकवचनान्तः। संख्याविशिष्टपाशप्रकाशनायोहितव्यः। बहुवचनान्तस्तु तथैवावयवबहुत्वोपचारेणाविकृतः प्रयोक्तव्य इति तृतीयः पक्षः। गृह्णीम एतदुभयोः प्रयोग इति, किन्तु बहुवचनान्तोऽप्यूहितव्यः। नहि द्वयोर्बहुवच-नान्तस्य साधुत्वमस्ति, एकस्मिंस्तु पाशे वैदिकप्रयोगबलात् कथञ्चिदवयवापेक्षं व्याख्यानं कृतम्, [2]न त्वेवं द्वयोः प्रयोगः सिद्धः। इदानीमेव त्विदं चिन्त्यते—कथं प्रयुज्यतामिति। तत्रास्मदादयस्ते[तस्त्वे] प्रयोगे किमित्यवयवभेदोपचारेणावाचकं प्रयोक्ष्यामः। न च प्रकृतावभिधानविप्रतिपत्तिः शास्त्रीया; आर्थिकी तु सा। किञ्च, प्रकृतावेकः पाशः स्मर्तव्यः। स च विनाप्येकवचनेन प्रातिपदिकेनैव शक्यः प्रकाश-यितुम्। [3]स्वारसिकत्वादेकत्वस्य तेन तत्र निर्देशमात्रार्थं वचनमित्यवयवभेदो

---

१. प्रकृतावयविनो—क०।

२. न त्वेष द्वयोः प्रयोगः—क०।

३. सारस्विकत्रस्य—क०।

[ वाभेदो ]पचारेण बहुवचनमपि न दुष्यति । इह त्ववश्यं पाशद्वयमप्यनेनैक मन्त्रेण स्मृतावारोपयितव्यम् । तच्चनर्थर्त्ते[तच्च नर्ते] द्विवचनात् प्रातिपदिकमात्रेण सिध्यतीति । तस्माद् द्वयोरप्यूह इति सिद्धान्तः ।

यद्यपि च द्वितीयचतुर्थपक्षयोर्नास्त्यनुष्ठाने विशेषः, तथापि न्याय्यत्वाच्चतुर्थ-पक्ष एव स्वीकृत इति । अत्र चोदयति—**नन्वयं पाशमन्त्रः** पाशोन्मोचन-**करणत्वाद्** द्वयोरपि पाशयोरेकैकस्मिन् **पर्यायेण स्यात्,** तेनोभयोरपि मन्त्रयो**र्नार्थ ऊहेन** प्रकृताविवैकैकस्मिन्नुभयोरप्यविकारोपपत्तेरिति । परिहरति—[1]जपोऽयं **पाशो-न्मोचनकाले क्रियमाणानुवाद्येव वा, न तु** करणः । तस्मात्तन्त्राभिधानादूह इति । [2]नन्वसिद्धे मन्त्रयोः समावेशे कथमिदमधिकरणं चिन्तितम्? अत आह—**अर्थाच्चोत्तर-स्माद**धिकरणादु**त्तर[3]मिदमधिकरणम् ।** प्रकृतौ हि विचारितायां विकृतिर्विचार-विषय इति । तेनेदमर्थादुत्तरमप्यूहात्मकत्वेन सङ्गतत्वात् प्रथमं विचारितम् । एतदाक्षेपेणोत्तराधिकरणं सङ्गतमारभ्यते ।। १० ।।

[ ५—एकवचनान्तबहुवचनान्तपाशपदघटितमन्त्रयोः प्रकृतौ विकल्पः ]

## विप्रतिपत्तौ विकल्पः स्यात् समत्वाद् गुणे त्वन्याय्य-कल्पनैकदेशत्वात् ।। १५ ।। सि०

एकस्मिन् बहुवचनान्तस्यासमर्थत्वादेकवचनान्तस्य तु समर्थत्वात् प्रकरणं लिङ्गेन बाधित्वा बहुपाशायां विकृतौ बहुवचनान्तस्योत्कर्षः । द्वे ह्यत्र लिङ्ग[लिङ्गे] प्रकरणस्य बाधिके[ बाधके ] । बहुवचनलिङ्गं तावद् बहुपाशायामेव मन्त्रं विकृतावप्र-[तावा]कृष्य प्राकरणिकं प्रकृतिसम्बन्धं बाधते । तथैकवचनलिङ्गमप्येकवचनान्तं प्रकृतौ प्राप [ प्रापयत् ] तत्समानविषयं बहुवचनान्तं प्रकरणात् प्राप्यमाणं बाधते । तस्मादुत्कर्ष इति ।

---

१. योऽयं—क० ।

२. न क्रतौ सिद्धे—ख० ।

३. 'इदम्' नास्ति—क० ।

उच्यते—भवेदेतदेवं यदि बहुवचनान्तस्य प्रकृता[1]वसामर्थ्यं स्यात्, तत्तु समर्थमेव प्रकृतावपि पाशकर्मकमुन्मोचनं वक्तुम्। तावता च प्रकाशितेन प्रयोजनम्। ननु बहुवचनं बहुसंख्याविशिष्टपाशस्य कर्मत्वं शक्नोति वदितुम्, न तु पाशमात्रस्य; न तु प्रकृतौ बहुसंख्यः पाशोऽस्ति। तस्मादनभिधानम्। उच्यते—न संख्याविशिष्टस्य प्रातिपदिकार्थस्य कारकत्वं विभक्तिर[क्त्या]भिधीयते। किं तर्हि संख्या प्रातिपदिकार्थश्च (न) मिथोऽ[2]नन्वितौ **कारकेण** प्रथममन्वीयेते। तत्रो[3]पादेयत्वे सत्यरुणैकहायनीवत् संख्याप्रातिपदिकार्थयोर्मिथो नियमो भवति। उद्देश्यत्वे तु प्रातिपदिकाभिहितया जात्याऽपूर्वीयं द्रव्यं लक्षयित्वा तस्य कारकत्वमात्रमुच्यते, संख्या त्वविवक्षितैव। तदिहापि पाश[4]द्रव्यकर्मत्वाभिधानात् प्रातिपदिकम्; कर्मविभक्तिश्च प्रकृतौ निविष्टं न बहुत्वानुरोधेनोत्क्रष्टुं शक्यते। यद्यपि तावदिह बहुत्वं विवक्षितुं शक्यं [5]स्यात, तथापि प्रधानभूतद्रव्याभिधायिनीं प्रकृतिं कर्मविभक्तिं च नोत्क्रष्टुं शक्नुयात्, किमङ्ग पुनरविवक्षितम्। तस्मान्नोत्कर्ष इति। बहुवचनं [6]त्ववयवभेदमवयविन्यभेद[7]विवक्षयोपचर्य [अवयवगतं बहुत्वमवयविन्यभेदविवक्षयोपचर्य] स्तोतुं प्रयुक्तमिति॥ १५॥

[६—दर्शपूर्णमासयोरनेकपत्नीकप्रयोगे पत्नीमन्त्रस्यानूहः]

## अपूर्वे त्वविकारोऽप्रदेशात् प्रतीयेत॥ २०॥ सि०

एकपत्नीके समवेतार्थ[8]मेकवचनं प्रातिपदिकं च[9] पूर्वेण न्यायेन द्विबहुपत्नीकेऽपि [10]प्रवर्तते। तत्रैकवचनमेकपत्नीके [11]लब्धमुख्यस्वार्थमुपचारं न प्रतिपद्यते

१. प्रकृतात् सामर्थ्य—क०।
२. न त्वितौ कारेण—क०; चितौ कारकेण—ख०।
३. त्रोपदेयत्वे—क०।
४. द्रव्यकमत्वा—क०।
५. 'स्यात्' नास्ति—क०।
६. वेतदमवयविन्य—क०; व भेदमवयविन्य—ख०।
७. विवक्षितोप—क०।
८. तार्थमेकनं—क०।
९. 'च' नस्ति—क०।
१०. 'प्र' नास्ति—क० ०
११. लुब्ध—क०।

इति द्विबहुपत्नीक ऊहितव्यमिति पूर्वः पक्षः। सिद्धान्तमाह—**यदि पत्नीप्रातिपदिकं प्रधानं बलवत्, तत एकद्विबहुपत्नीकेषु प्रयोगेषु** त्रिष्वपि प्रातिपदिकार्थोऽस्तीति तद्वशेनैव विभक्तिरप्येकवचनं त्रिष्वप्यविशेषेण प्रातिपदिकबलात् प्रवर्तमानमाकृतिसंख्याभिप्रायं स्यात्। अथ त्वेकत्वविभक्तिः प्रधानम्, ततो यत्र सा[1] स्वार्थं लभते **तत्रै**[2]कपत्नीके प्रयोगे पर्यवसितः प्रातिपदिकार्थ इति द्विबहुपत्नीके मन्त्र एव न स्यादित्येवं पक्षद्वयमेवात्र [3]**संभावनीयम्।** [4]**न तु** प्रातिपदिकं त्रिषु प्रत्ययस्त्वेकपत्नीक एव प्रयोगे प्रवर्तत [5]इत्यर्धजरतीयं सम्भवति हि प्रकृतिप्रत्यययोः सह प्रवृत्तिनियमादिति। अस्मिंश्च पक्षद्वये किं न्याय्यमित्येतच्च पाशाधिकरणे वर्णितम्, यथा प्रातिपदिकानुरोधि वचनमिति। तस्माद्यथैकस्मिन् बहुवचनमवयवापेक्षमेवमनेकस्मिन्नेकवचनमपि लक्षितपत्नीत्वजात्यपेक्षमित्यनूहः। **अथापि कथञ्चिदेकत्वं विवक्षितमिति** भाष्यस्यायमर्थः—**अदृष्टार्थमेकवचनमुच्चरितं न समवेतसंख्याभिधानार्थम्।** कुतः? **द्वित्वबहुत्वस्य** समवेतस्यानेनानभिधानाद**दृष्टार्थत्वेनानूह** इति पाशन्यायस्य पत्नीन्यायस्य च विषयविभागं दर्शयन्नुदाहरणान्तरे न्यायद्वयमतिदिशति। यत्र चान्यत्राप्युदाहरणे द्वयोरभिधानयोर्मन्त्रयोरेकस्मिन्नर्थे न्यायान्यायनिगदयोर्वि**प्रतिपत्तिस्तत्र पाशन्यायाद्**[6] द्वयोरपि विकल्प इति। **यत्र त्वेक एव मन्त्रस्तत्र पत्नीन्याय** इति। **'पवित्रे स्थः' इति यथा**[7], अयं हि मन्त्रो द्वित्वा[8]भिधाय्यपि प्रकृतावन्यसंख्यमपि पवित्रेपक्षे **गमिति** (?) प्रातिपदिकार्थमात्रविवक्षयोभयत्राप्यनूहेन प्रयुज्यत इति।

---

१. 'सा' नास्ति–क०।

२. तत्रैवैक–ख०।

३. संपादनी–क०।

४. ननु–क०।

५. इत्येव–ख० अ०।

६. न्यायाद्द्वयो–क०।

७. यथार्थ–क०।

८. द्विधा–क०।

[1]ननु पवित्रयोरुपादीयमानत्वाद् विवक्षितं द्वित्वम्, उपादीयमानता च "पवित्राभ्यामुत्पुनाति" इत्यादौ प्रज्ञातैव तयोः, [2]अतः समवेतवचनत्वाद्विकृतौ "हिरण्येनोत्पुनाति" इत्यादावूहितव्यं द्विवचनमिति। उच्यते—न वयमस्मिन् वचने[3] द्वित्वविवक्षां वारयामः। किं तर्हि? समवेतं वदति न वदतीति विचारयामः; [4]समवेतवचनत्वे ऊहो विवक्षितः प्रयोजनम्। पवित्रे च संख्यान्तरमपि वचनान्तरेण विहितमित्युभयसाधारणे पवित्रे स्थ इति मन्त्रे [5]द्विवचनमसमवेतवचनत्वान्नोहितव्यमिति ॥ २० ॥

[ ७—विकृतावप्यनेकपत्नीकप्रयोगे पत्नीमन्त्रस्यानूहः ]

**विकृतौ चापि तद्वचनात् ॥ २१ ॥ सि०**

प्रकृतावाम्ना[6]नबलादनेकत्राप्येकवचनं प्रयुक्तम्। विकृतौ तु यथाकार्यमभिधानमित्यूहं मन्यमानस्योत्तरमुच्यते। प्रकृतावेव समाम्नानादेकवचनमेकद्वित्रहुपत्नीके प्रयोगे जात्यपेक्षया वादृष्टार्थतया [7]वा लब्धप्रयोगम्, तदा यथाम्नानमेव[8] विकृतावपि प्रयोगसंभवाद् नास्य[9] बाधे प्रमाणमस्ति। तस्मादनूह इति ॥ २१ ॥

[ ८—अग्निष्टोमीयसवनीयानां सामानविध्यपक्षे 'प्रास्मै' इत्यध्रिगौ विकाराभावः ]

**अध्रिगोः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ २२ ॥ सि०**

नेदमधिकरणान्तरम्। पूर्वाधिकरणन्यायसिद्धमेव परत्रधिकरणपूर्वपक्षसिद्ध[10]-प्रयोजनमनेन सूत्रेण कथ्यते ॥ २२ ॥

---

१. न तु–क०।
२. रधः–क०।
३. वचनत्वे हि–क०।
४. समवेतवचनेनोहं–क० ख०।
५. द्वित्वमेव–क०।
६. म्नात–क०।
७. 'वा' नास्ति–क०।
८. मेधवि–क०।
९. भङ्गे–ख०।
१०. 'सिद्ध' नास्ति–ख०।

[ ९—नीवारादिप्रतिनिधौ व्रीहिमन्त्रस्याविकारः ]

## प्रतिनिधौ चाविकारात् ॥ २३ ॥ सि०

व्रीहिशब्देन नीवारान् कथञ्चना[ कथञ्चन ना ]र्थान्तरत्वाच्छक्यतेऽभिधातुम् । तस्माद् व्रीहिकार्यापन्नेषु नीवारेषु प्रकृतिष्विवार्थान्तरेषूहो युक्त इति पूर्वः पक्षः । सिद्धान्तस्तु सत्यमर्थान्तरं नीवाराः, न तु तेषां व्रीहिकार्यापत्तौ प्रमाणमस्ति, यतस्तद्धर्माल्लभेरन् । तद्गतास्तु ये व्रीह्यवयवास्ते विकला अपि सकलासम्भवात् कार्यार्थमुपादीयन्ते, नान्तरीयकं तु नीवाराणामुपादानम् । ये च ते व्रीह्यवयवास्ते व्रीहिगता इव [1]नीवारान् गता अपि शक्यन्ते व्रीहिशब्देनैवाभिधातुम् । कथं पुनरव्रीहिषु व्रीहिशब्दः ? [2]उच्यते—व्रीहिशब्दो हि मन्त्रे[3] न जातिपरः, किन्तु जातिलक्षितापूर्वसाधनविशेषपरः । यद्यपि व्रीहिभिर्यजेतेत्यत्र विधौ श्रुत्या जातिरेवाङ्गत्वेन विनियुक्ता, तथापि तस्याः साक्षात्साधनत्वाभावात् तत्परिच्छिन्नं द्रव्यं तदवयवाश्च क्रियासाधनं प्रयोगसमवायित्वात् [ उपादीयते ] । जातिस्तु तदुपादा[4]पय्य [ तदुपादायापि ] चरितार्था भवति । यत् प्रयोगसमवायितत्प्रकाशनार्थो मन्त्रः । तेन मन्त्रे व्रीहिशब्दो व्रीहित्वपरिच्छिन्नसाधनविशेषलक्षणार्थः । तत्परिच्छिन्नत्वं च[5] नीवारगतानामपि व्रीह्यवयवानामस्ति । तदाह सूत्रकारः ॥ २३ ॥

## उक्तं च तत्त्वमस्य ॥ २६ ॥ पू०

इति तदिदं सर्वं षष्ठे वर्णितमिति । तद् व्याचष्टे—**व्रीह्याकृतिव्यक्तिसादृश्यानां च[6] तत्रैवोक्ता** व्यवस्था[7] । पारमार्थिकं रूपं तत्त्वमुच्यते ।

---

१. नीवारगता—क० ।
२. 'उच्यते व्रीहिशब्दः' नास्ति—क० ।
३. मन्त्रेण—क० ।
४. पादा यस्य—क०; व्याख्यानम्—पू० मु० ।
५. 'च' नास्ति—क० ।
६. कारकत्वात्—क० ।
७. 'व्यवस्था' नास्ति—क० ।

तदयमर्थः—व्रीह्याकृतेस्तत्त्वं द्रव्योपलक्षणार्थत्वम् , व्यक्तेः[ क्ति ]र्द्रव्यम् । तदवयवरूपायास्तत्त्वं साधनत्वम् , सादृश्यस्य च[1] तत्त्वं नीवारेषु [2]सद्भावः । तदवयवसामान्ययोगसद्भावात् तत्रैव षष्ठे वर्णितमिति । तेनानूहो व्रीहिमन्त्रस्य प्रतिनिधाविति ।

अत्र प्रसङ्गात् किञ्चित् चिन्तयितुमाह—"**व्रीहीणामेध**" **इत्यस्य प्रैयंगवादिषु** हविष्षु **कथं प्रयोगः ? इति चेत्** । किं नियतमुतानियतमिति ? तत्र पूर्वपक्षमाह—**यदि व्रीहीणां विकारः[3] प्रैयंगवश्चरु[4]स्तत ऊहः । यदि तु यवानाम् , ततोऽनभिधान**मप्रयोगो मन्त्रस्य । नह्ययं यवानामङ्गमसमर्थत्वात् । न च व्रीहिविकारा यवाः, समानविधानत्वाद् व्रीहियवानाम् । येनोहेन यवेष्ट[ ष्वपि ] [5]मन्त्रोऽयं स्यात् । तेन व्रीहिविधेरेव वाक्यशेषोऽयं मन्त्रः, न यवविधेः । तेन प्रकृतौ [6]द्वेधैव शास्त्रार्थः—मन्त्रप्रकाशितैर्व्रीहिभिर्यजेत, केवलैर्वा यवैरिति । विकृतिष्वपि प्रियङ्गवो यदा व्रीहिविकारा विवक्ष्यन्ते, तदोहेन मन्त्रः प्रयुज्यते । यदा तु[7] यवविकारास्तदा न प्रयुज्यते । तस्मात् पाक्षिकोऽयं मन्त्रो न नियतो द्रव्यान्तरेषु[8] विकृतिषु[9] । एवं **प्राप्ते ब्रूमः—कण्वरथन्तरवदेव** तत् प्रैयङ्गवं हवि**रुभयविकारात्मकमुभयधर्माणां ग्राहकमिति** । यथाहि कण्वरथन्तरं भाष्यकारीये पक्षे बृहद्रथन्तरयोरुभयोरपि [10]कार्यं युगपत् साधयदुभयधमान्[11]

---

१. 'च' नास्ति–क० ।
२. संभवः–क० ।
३. विकारैः–ख० ।
४. चतु–क० ।
५. मन्त्रं–क० ।
६. द्वैधैव–क० ।
७. 'दातु' त्रिवारम् उपलभ्यते–क० ।
८. न्तरवर्तिषु–ख० ।
९. तिष्वित्येवं–ख० ।
१०. कार्यः–क० ।
११. धर्मात्स–क० ।

**आरम्भः** । अथ कस्मादादावेव पशुकामेष्टिवाक्यं नोदाह्रियते ? तथा सति षाष्ठोऽपि न्यायो न विरुध्यते । सूत्राणि चैकवाक्यतया यथाश्रुतिव्याख्यातानि भवन्ति । अत आह—**इतरथा** यद्यधिकरणभेदो नाश्रीयेत, ततो**ऽभ्युदयोदाहरणं** सौत्रं **हेयमेव स्यात्** । । तदधिकरणभेद एव न्याय्य इति ।

इदानीं प्रकृताधिकरणसिद्धान्तमाह—**न्यायस्तु स एव** षष्ठे पूर्वाधिकरण-सिद्धन्तजनिताशङ्कस्य बुद्धिं व्यावर्त्तयितुं स्पष्टीकृत **इति** । 'अपनयो वार्थान्तरे विधानाच्चरुपयोवत् । इदमप्यभ्युदयेष्टिसमानश्रुतिकत्वाद्वाक्यस्य श्रुतशब्दसंयोगाच्च प्रदेयतां मन्वानस्योत्तरत्वेनादित्यचरुन्यायस्यैव स्पष्टीकरणार्थमधिकरणम् ॥ ४१-४२ ॥

**श्रयणानां त्वपूर्वत्वात् प्रदानार्थे विधानं स्यात् सर्वविषयत्वात् ॥ ४५ ॥ पू०**

यागनिर्वृत्तिर्दृष्टं प्रयोजनम्, सोमसंस्कारस्त्वदृष्टः कल्प्यत इत्येतावता यागार्थतां मन्यते पूर्वपक्षवादी । यथा प्रमाणं प्रयोजनकल्पनम् । न च यागसम्बन्धे देवता-सम्बन्धे वा किञ्चिदस्ति प्रमाणम् । श्रयणानां सोमसंस्कारार्थता द्वितीया[1]तृतीयाभ्यो गम्यते । तस्मान्न श्रयणेषु प्रदेयधर्मा भवेयुरिति ।

**'पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत्'** इत्यधिकरणाद्यं सूत्रं लिङ्गदर्शनसूत्रव्याचिख्यासया तस्य विषयपरिज्ञानार्थे पठितम् । अत्र 'ईशानाय परस्वत आलभेत' इति प्रकृत्य "पर्यग्निकृतानारण्यानुत्सृजति" इति श्रुतम् । तत्र यद्यपि [2]यजतिर्द्रव्यफलभोक्तृसंयोगादिति न्यायादीशानाय परस्वत इति याग-चोदना प्राप्ता, तथापि पर्यग्निकृतानुत्सृजतीत्यस्य द्रव्योत्सर्गादतिरिक्तं न किञ्चि-द्विधेयमस्तीति देवतासंयोगं[3] ग्रहणमात्रे कथञ्चिद्व्याख्याय पर्यग्निकरणविशिष्टद्रव्यो-त्सर्गविधानं नेतव्यम् । यथा च नास्ति विधेयं तथा भाष्य एव दर्शितम् । कर्मशेष-प्रतिषेधोऽन्यशब्दार्थत्वान्न विधातुं शक्यत इति ।

---

१. 'तृतीया' नास्ति क० ।

२. यजतिस्तु प्रद्रव्य ख० ।

३. गा ग्रह क० ।

**शब्दस्य संख्याप्राधान्ये** यत्सामानाधिकरण्यं **लक्षणया, स एव दोषः**। न हि[१] लक्षणा न्याय्येति। किं **चादृष्टार्थता** च दोषः। नहि[२] संख्यास्वरूपप्रकाशने किञ्चिद् दृष्टमस्ति। यत्त्वार्षानुग्रह इति, तत्राह—**न[1] च सर्वं[३] प्राकृतं** भवति, तत्रापि पक्षे **षड्विंशती षड्विंशतय** इति वचनान्यथाभावात्। द्वितीयं पक्षं दूषयति [४]**अदृष्टार्थत्वे** मन्त्रस्या**दृष्टार्थतैव दोषः सत्यां दृष्टार्थतायाम्**। प्रथमं दूषयति—**न च सम्बन्धो वचनेन** मन्त्रवाक्येन **चोदितो**ऽभिहितो **यः**[५] **प्रकाश्येत**। नह्यभि[नह्यनभि]धेयं प्रकाशयितुं शक्यते। अथापि नाम शक्यते प्रकाशयितुम्, तथाप्य**दृष्टार्थताऽवस्थितैव**। संबन्धस्वरूपप्रकाशनं ह्यदृष्टाय भवति। तत्रापि च पक्षे **प्राकृतशब्दबाधश्चास्ते** वाभ्यासश्रयणात्[६] [ चास्त्येवा-भ्यासाश्रयणात् ]। दूषणान्तरमपि द्वितीयवर्जमितरेषु पक्षेषु दर्शयति—**ता अनुष्ठ्योच्च्यावयतादिति च सर्वनामशब्दो वङ्क्रीप्रत्यवमर्शकः**। तत्र **यदि** पशुप्राधान्यमाश्रित्या**स्यपदस्याभ्यासः** क्रियते, यथा **चतुर्थः** पक्षः, ततः **पशोः** पुंलिङ्गत्वात् [७]**ताविति प्राप्नोति**। ततश्च तत्पदेऽप्यार्षबाधः। प्रकृतौ च पशोरेकत्वात् पुंस्त्वाच्च तमिति निर्देशः स्यात्। प्रधानप्रत्यवमर्शकत्वात् सर्वनाम्नः।

---

1. 'न च सर्वं प्राकृतमदृष्टार्थम्' इति पूनामुद्रितो वार्त्तिकपाठः, स न युक्तः; तृतीयपूर्वपक्षेऽस्यार्थस्यानुक्तत्वेन तन्निरसनस्याप्राप्तत्वात्। न च सर्वं प्राकृतम् इत्येतावानेव तु पाठो युक्तः। अस्यार्थः—तृतीयपूर्वपक्षवादिनोऽपि सर्वमवि-कारेणैव प्राकृतं विकृतौ न हि भवति इति। एवमेव तन्त्ररत्ने व्याख्यातमिति द्रष्टव्यम्।

१. हि नास्ति क०।

२. नापि क०।

३. सर्वे प्राकृता भवन्ति ख०।

४. नादृष्टार्थत्वे, क०।

५. यः स प्रकाश्यते पूना०।

६. श्रवणात् ख०।

७. तानिति ख०।

**योरभावादेव करणार्थोऽपि** सुप्प्रत्ययोऽ**नुपपन्नार्थ एवाज्येनेति** पदे। तत्रापि **परिशिष्टमाज्येति**[1] प्रातिपदिकमात्रम्। तत्रै**तयो**राज्यप्रातिपदिकाख्यातप्रत्यययोः **सम्बन्धे** [2]**सति कर्तव्यतावचने**नाख्यातेन **स्पृश्यमानं** सम्बन्ध्यमा**नमाज्यमीप्सिततमं** कर्मकारकं **भवति, आज्यं कुर्यादिति**। तत्र **न चैतत्केवलाज्योत्पत्तिविधायकम्**। कुतः? **आनर्थक्यात्**। न ह्याज्योत्पत्तिमात्रस्य किञ्चिदस्ति प्रयोजनम्। शेषसंस्थयोश्चानु[3]वादत्वेनाप्यसम्भवादत्यन्तानर्थक्यं स्यात्। अतः **प्रयोगवचनो** विधिरुपपदान्तराभिलाषी **सन्निहितेन पर्यग्निकरणवाक्यगतेन** **पात्नीवतपदेन सम्बध्यते**। तदेवं **सञ्जातं पात्नीवतमाज्यं कुर्यादिति द्रव्यदेवता**[4]**संयोगा**न्तरमिदम्, संस्थाशेषशब्दतृतीयानां का गतिः? अत आह—**स च** याग **आरम्भवान्समाप्तिमांश्चेत्यर्था**द्यत्किञ्चि[5]द्धातूपादाने [नेन] प्रत्ययसाधुत्वावावश्य[त्वेऽश्य]कर्त्तव्ये **तदङ्गभावेनाप्यव्यभिचारिसंस्थाधातुरुपा**दीयते **निर्वपतिवत् सौर्ये**। तेन धातुस्तावदनुवादत्वेन सम्भवान्नानुपपन्नः। तथा शेषशब्दोऽपीत्याह—योऽयं [सोऽयं] **पशुयागाल्पेतिकर्तव्यतावांस्तद**नन्तरं **च क्रियमाणस्त**द्देवतत्वाच्च तच्छेष इवेत्युपमया**शेषशब्दोऽर्थवान्**। **तत्सम्बन्धा**च्छेषसंस्थासंबन्धाच्च **तृतीया**प्यनुवादभूता **युक्तैव**। तस्मात् कर्मान्तरचोदनेति समासेऽधिकरणे पूर्वाधिकरणलिङ्गदर्शनमनुसन्धत्ते **शेषसंस्थोपमा**सादृश्यं युक्तं भवति। **यदि पूर्वोऽपि** [6]**याग एव** स्यात्। पात्नीवतयागस्य हि पात्नीवतयागान्तरसादृश्यादैक्यमुपचर्य तस्यैवायं शेषः संस्थाप्यत इति वादो युज्यते। **अथ**[7] **द्रव्योत्सर्गः,** ततः सादृश्याभावान्न **युज्यते** शेषं संस्थापयतीति। तस्मा-

१. आज्येनेति क०।

२. सति नास्ति क०।

३. वादत्वे भाष्यसं ख०।

४. संयोगाच्च यागः पु० मु०।

५. द्वारुपरुपा क०

६. पूर्वो यागः क०।

७. अथ तु ख०।

त्वाष्ट्रं पात्नीवतमिति तावद्यागविधिः। पर्यग्निकृतं पात्नीवतमिति चाङ्गरीतिविधिः, न द्रव्योत्सर्गः। **तद्वदारण्येष्वपि** तुल्यन्यायत्वादिति **सिद्धम्**।

द्रव्योत्सर्गविधाने हि देवता नोपपद्यते।
पर्यग्निकरणं [1]तस्मादङ्गरीतिर्विधीयते॥
नैराकांक्ष्यात्तया तस्य न शेषोऽस्ति कथञ्चन।
आज्येन शेषमित्येतदतो यागान्तरं स्थितम्॥ ४५॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने नवमस्याध्यायस्य चतुर्थः पादः।

समाप्तश्चाध्यायः॥

श्रीरस्तु



१. तस्मिन्न क०।

# सूत्राणामनुक्रमणी

| सू० | अ० | पा० | सू० सं० |
|---|---|---|---|
| अग्निधर्म | ९ | १ | २६ |
| अग्नेर्वा स्यात् | ९ | १ | २७ |
| अथ विशेष० | ८ | १ | १ |
| अधिकञ्च विवर्णञ्च | ९ | २ | ३९ |
| अभिगौः सवनीयेषु | ९ | ३ | २२ |
| अन्यतरतोऽतिरात्रत्वात् | ८ | २ | २९ |
| अन्यायस्त्वविकारेण | ९ | ३ | १० |
| अपि त्वसन्निपातित्वात् | ९ | ४ | ९ |
| अपि वाऽतद्विकारित्वात् | ८ | १ | २५ |
| अपि वा शब्दपूर्व० | ९ | १ | ९ |
| अपि वाऽन्यायाय० | ७ | ४ | ५ |
| अपि वा यज्ञपूर्वत्वादि० | ७ | १ | १६ |
| अपि वा सत्रकर्मणि | ७ | ३ | ५ |
| अपूर्वे त्वविकारोऽप्रदेशात् | ९ | ३ | २० |
| अप्रमाणाच्छब्दादन्यत्वे | ९ | १ | ५४ |
| अप्राकृते | ९ | २ | ४८ |
| अभिधानोपदेशाद्वा | ७ | ३ | ३६ |
| अभ्यासः सामिधेनीनां | ९ | १ | ३३ |
| अभ्युदये दोहापनयः | ९ | ४ | ४२ |
| अर्थान्तरे विकारः | ९ | ३ | ४३ |
| अर्थाभिधानसंयोगात् | ९ | १ | ३६ |
| अर्थो वा स्यात् | ९ | १ | १३ |
| अर्थैकत्वादिकल्पः | ९ | २ | २९ |
| अर्थैकत्वाद्विकल्पः स्यादवसा० | ९ | २ | ३० |
| अविभागात्तु | ९ | १ | ५ |
| अव्यक्तासु तु | ८ | १ | १६ |
| असंयोगात्तदर्थेषु | ९ | १ | ४२ |